# केदारखण्डस्य सिद्धपीठानां-
# सर्वेक्षणात्मकमध्ययनम्



डा० ललिता प्रसाद पाण्डेय

# केदारखण्डस्य सिद्धपीठानां सर्वेक्षणात्मकमध्ययनम्

# केदारखण्डस्य सिद्धपीठानां सर्वेक्षणात्मकमध्ययनम्



डॉ० ललिता प्रसाद पाण्डेय
ज्योतिर्विद्, साहित्याचार्य, एम० ए०, डी० फिल्०
निदेशक
उत्तराखण्ड शिक्षा संस्थान
उ० प्र०, ऋषिकेश (देहरादून)
एवं
विभागाध्यक्ष संस्कृत
ओंकारानन्द सरस्वती महाविद्यालय
देवप्रयाग (टिहरी गढ़वाल)

प्रकाशक :
डॉ० ललिता प्रसाद पाण्डेय
उत्तराखण्ड शिक्षा संस्थान
उत्तर प्रदेश, ऋषिकेश
जिला देहरादून

Published with the financial (60%) assistance from the ministory of Education and Social Welfare Govt. of India.

मूल्य : 30/—

प्रथम संस्करण : १९८५
प्रकाशित प्रतियाँ १०००

डॉ० ललिता प्रसाद पाण्डय
केदारखण्डस्य सिद्धपीठानां सर्वेक्षणात्मकमध्ययनम्

मुद्रक :
ऐकेडेमिक प्रेस, मेरठ

# 'कामना'

उदीच्यां शक्तिपीठानां याथातथ्येन वर्णनम् ।
उक्तं चोत्तममाहात्म्यं तद्भूयात् शक्तिप्रीतये ॥
ललिताप्रसाद रचिता ललितैर्भावैरलंकृता सुकृतिः ।
भूयात् सदैव विदुषां नितरां हृदये विहारिणी रुचिरा ॥

आचार्य पंडित चक्रधर जोशी
अध्यक्ष
प्राच्य विद्या अकादमी
प्र० उ० (नक्षत्रवेधशाला) देवप्रयाग

१०. रेखात्मक श्रीयन्त्रम्



मन्त्रमिदं सुवर्णपट्टतले हाटके वा विलिख्यकस्मिश्चित्पुण्यतीर्थे क्षेत्रे सिद्धपीठे देवीसन्निधौ वा उपविश्य पंचचत्वारिंशदहानि सम्पूज्य—

भवानि त्वं दासे मयि वितर दृष्टि सकरुणामिति स्तोतुं वांच्छन् कथयति भवानित्वमिति यः।

तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं मुकुन्द ब्रह्मेन्द्रस्फुटमुकुट-जीराजितपदम् ।। (सौन्दर्य लहरी २२।।)

श्लोकमिममहरहस्सहस्रमावर्त्यं साधयेत् । अनेन ऐहिक सर्वाभीष्ट सिद्धिः सकलैश्वर्य प्राप्तिः साम्राज्यानामवाप्तिश्च भवति ।।

# विषयानुक्रमणिका

वर्णनम्, शक्तेस्त्रिगुणात्मक स्वरूपम्, सिद्धपीठानामुत्पत्ति विषयक साहित्यम्, सिद्धपीठेषु लिंगोत्पत्तिः शिवशक्त्योः साधर्म्यम् वैधर्म्यं च, शक्तेर्महत्वं पंचभ्यः परात्परतरा च, दार्शनिक चिन्तनेऽपि शक्तेः सर्वोत्कृष्टता, शक्तेश्चरित्रवर्णनम्-श्रवण-पूजन-यज्ञ-दर्शनादीनां साहित्यम्, कालबोधकचक्रम्, लोकानामनुक्रमः ।



(१) केदारखण्डस्य सिद्धपीठानां सामान्य परिचयस्तेषां संक्षिप्त-ऐतिहासिकी परिचयश्च ।

(२) सिद्धपीठेषु देवी पूजन परम्परा, शक्ति पूजनस्योमत्तभेदः, शक्तिपूजनस्य मध्यमभेदः, शक्ते अधम पूजन प्रकारः, शक्तेर्नित्य नैमित्तिकपूजनयोर्भेदः, शक्तियंत्रम्-शक्तेः यन्त्रपूजनम्, देवीयज्ञम् यज्ञविधि, नवरात्रपर्वसु शक्ति पूजन परम्परा, न्यासध्यानसहितं नर्वाणवमन्त्रम्, नवदुर्गाणां यन्त्राणि । दशमहाविद्यानां तिथ्यादिभेदक्रमः ।

सि० छाया-चित्राणि



उर्वशी क्षेत्रे सिद्धपीठानां विशेषवर्णनम्, उर्वश्याः स्थानम्, स्थान-स्यास्य भौगोलिक वर्णनं च, उर्वश्यारुत्पत्तिः प्रसिद्धिश्च, उर्वशी सिद्ध-पीठे धार्मिक स्थानानां वर्णनम्, उर्वशीपीठे बदरीनाथ धाम्नि च यात्रायाः पूजनस्योपासनायाः दर्शनस्य च फलम्, नन्दादेवी सिद्ध-पीठस्य भौगोलिक वर्णनम्, नन्दा शक्तेः स्थापना शक्तिदर्शनस्य च फलम्, नन्दादेवीसिद्धपीठे गोपीनृत्यम्, पर्णखण्डासना सिद्धपीठस्य प्रसिद्धिः, जोशीमठधाम्नि देव मन्दिराणां परिचयश्च, पीठस्यास्य भौगोलिक वर्णनम्, शक्तेर्पूजनस्य फलम्, ललितादेवीसिद्धपीठस्य संक्षिप्तैतिहासिक भौगोलिक परिचयश्च, ललितादेवी सिद्धपीठक्षेत्रे पुण्यस्थलानां वर्णनम्, पीठेऽस्मिन् मेलापकानामायोजनम्, गौरीसिद्ध-पीठस्य प्राकृतिक वर्णनम्, गौरीपीठस्योत्पत्तिः, गौरीसिद्धपीठे व्यवस्था-पूजन-स्नान सम्बन्धीनि विवरणानि, कालीसिद्धपीठस्य प्राकृतिक विवरणम्, वेदकृत भक्तिस्तोत्रम्, कालिकोत्पत्ति वर्णनम् तत्रो-लिखितानां प्राचीनाभिलेखानां विवरम्, सार्वजनिक क्षेत्रे काली-पीठस्य महत्वम्, शाकम्भरी स्थानवर्णनम्, तत्र च त्रियुगीनारायणस्य महत्वम्, शाकम्भरी सिद्धपीठस्योत्पत्तिः स्थापना च, कालीपूजनस्य फलम्, केदारनाथ ज्योतिर्मठे स्थिते सन्मार्गदायिनी सिद्धपीठस्य

मेलापकानां पूजापद्धतीनां च विवरणम्, पीठ यात्रायाः महत्वम्, सुन्दरीदेवी सिद्धपीठस्योत्पत्तिस्तस्य भौगोलिकी महिमा च। ब्रह्मपुर्याः प्रसिद्धिः गूलरगाढ स्थानस्य धार्मिक-महत्वम्, पीठेऽस्मिन् देवीदर्शन पूजन-मन्दिरादीनां च विवरणम्, ब्रह्मकृत तंत्रोक्त शक्तिसूक्तम्,

सप्तमोऽध्यायः १७०–१९२

कमलाक्षेत्रे सिद्धपीठानां विशेषवर्णनम्—कंसमर्द्दिनी सिद्धपीठस्य स्थितिः, श्रीक्षेत्रम्, श्रीक्षेत्रस्य महत्वम्, कंसमर्द्दिनी पीठस्योत्पत्तिः, पीठस्यास्य भौगोलिक महत्वम्, शक्तिभवनम्, शक्तिपूजन परम्परा, चामुण्डा सिद्धपीठस्य स्थितिः, शक्तेश्चामुण्डायाः संक्षिप्तैतिहासिकी परिचयः समीपवर्तिसु क्षेत्रेषु धार्मिकस्थलानां विवरणम् शक्ति-मन्दिरस्य विवरणम्, चामुण्डायाः पूजन फलम्, राजराजेश्वरी सिद्ध-पीठस्योत्पत्तिः पीठस्यास्य भौगोलिक महत्वम्, सिद्धपीठ भवनस्य रचना, देवदासी दीक्षायाः विवेचनम्, राजराजेश्वरी स्तोत्रम्, मेलापकानामायोजनम्, देवलगढ़ स्थानस्य वैशिष्ट्यम्, देवलगढ गढदेशीयानां प्राचीनसभ्यता केन्द्रम्, महिषमर्द्दिनी सिद्धपीठस्य प्रसिद्धिः, सिद्धपीठभवनस्य रचना, सिद्धपीठेऽस्मिन् अन्येषां-देवानां देवमन्दिराणां च स्थितिः, मेलापकानामायोजनं, दर्शनस्यपूजनस्य च फलम्, गुह्येश्वरी सिद्धपीठस्योत्पत्ति स्थितिश्च, पीठस्यास्य भौगोलिक महत्वम्, पीठेऽस्मिन् मन्दिररचना, पूजायाः वैशिष्ट्यम् शक्तेर्धार्मिक महत्वम्, नन्दभद्रेश्वरी पीठस्योत्पत्तिः प्रसिद्धिश्च, नन्दभद्रेश्वरी क्षेत्रस्य महत्वम्, पीठस्यास्य प्राकृतिक महत्वम्, सिद्धपीठ मन्दिरस्य रचना, पूजनपरम्परा, मेलापकानामायोजनम् यात्रायाः महत्वम् देवीपूजन दर्शनयोर्फलम् दीप्तज्वालेश्वरी (ज्वाल्पादेवी) सिद्धपीठस्य स्थिति-रुत्पत्तिः प्रसिद्धिश्च, भौगोलिक महत्वं, ज्वालेश्वरी सिद्धपीठे-मन्दिरस्य रचना, मेलापकानामायोजनम्, सिद्धपीठ यात्रायाः महत्वम्, ज्वालेश्वर्याः धार्मिक वैशिष्ट्यम्, सुरेश्वरी सिद्धपीठस्य स्थितिः, भौगोलिक महत्ववर्णनम्, सुरेश्वरी सिद्धपीठस्य प्रसिद्धिः, देवताभिः शक्त्याराधना, भवनस्य रचना, देवीदर्शन पूजनयोर्फलम्, सुरेश्वरी सिद्धपीठस्य धार्मिक महत्वम् सिद्धपीठानां छायाचित्राणि।

अष्टमोऽध्यायः १९३–२११

महत्कुमारिका क्षेत्रे सिद्धपीठानां विशेषवर्णनम्—महत्कुमारिका-सिद्धपीठस्य स्थितिः, भौगोलिक महत्वं प्रसिद्धिश्च, शक्तिभवनस्य रचना, मेलापकानामायोजनम्, दर्शनपूजनयोर्फलम्, कुंजिकास्तोत्रम्,

# प्राक्कथनम्

भारतवर्षं आर्याणां पवित्रतमः प्राचीनतमश्च देशोऽस्ति। मानवजातेः सभ्यतायाः बीजांकुरमत्रैवांकुरितमभवदिति सुनिश्चितमेव। ज्ञानभास्करस्य दीधितमः सर्वतः प्राक् एनामेवभुवमवर्तीय दिव्ज्योतिः प्रसारयाभासु। ब्रह्मणो निश्वासभूताः वेदाः प्रथममत्रत्यानाभेवर्षीणां हृदयेषु ज्ञानरूपेण प्राविशन्। इयं पावनी वसुन्धरा ययाति-नल-भरत-भीष्म-अर्जुन-राम-कृष्ण गांधि, सदृशान् महापुरुषान् प्रसूय स्वात्मानं धन्यामकरोत्। देशस्यास्यज्ञानदीपेनैवान्यदेशानां निवासिनः ज्ञानालोकमाप्नुवन्नित्यस्तीतिहासज्ञानां दृढो विश्वासः मनुनाऽपि प्रकटितमेव "एतद्देश प्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवा" इति।

नैसर्गिकेन रामणीयकेन विभूषितस्यास्यदेशस्य दक्षिणभागे सागरः एवोतुंगतरंगैः भारतजनन्याश्चरणम् प्रक्षालनं कुर्वन् विविध रत्नोपहाराण्यर्पयन् स्वकीयामुदारतां विनयभावंच प्रकटयति। उत्तरस्यांदिशि पर्वतराजो हिमालयो हिमाच्छादित शृङ्खलाभिः भारतमातुः मुकुट इव शोभायमानोऽस्य सुरक्षणार्थमहर्निशं प्रहरीवोपतिष्ठति। नन्दादेवी-कञ्चनगंगा-सुलेमान-एवरेस्ट-कामेट चौखम्भादयः शैलश्रेणयः पर्वतारोहिणां शौर्यस्योत्साहस्य पराक्रमस्य च परीक्षास्थलानि सन्ति। आसु सर्वोच्चश्रेण्येबरेसृस्तु समुद्रतटात् २९००२ फीटावधि तुंगतां कामेटश्च २५४४३ फीटावधि तुंगतां धारयति। गंगा-यमुना-सरस्वती-मन्दाकिनी-गोमती-शतद्रवादयो नद्यः हिमालयादुद् भवन्त्यो भारतवर्षस्योत्तरवर्ति भूमि प्रदेशान् मातरइवसिञ्चन्ति। एताः नद्यः स्वकीयाभिः पवित्रवारिभिः भारतभुवं शस्यैपरिपूर्णां कुर्वन्त्यः दर्शनेन स्नानेन च जनानां चेतांस्यनुरञ्जयन्ति। गंगोत्तरी-यमुनोत्तरी-बदरीनाथ-केदारनाथ-देवप्रयाग-हरिद्वार-प्रयाग-वाराणसी-नैमिषारण्य-जगन्नाथ-द्वारकादीनि तीर्थस्थलानि देशस्यास्य भारतभूखण्डस्य स्वर्गद्वाराणि सन्ति। अस्यां पावन धरायामष्टचत्वारिंशदुत्तरैकोनविंशति शततमात् १९४८ ईशवीयाब्दात् पूर्वमांग्लीयानामेवाधिपत्यमासीत्। महात्मागांधी-नेहरू-सुभाष-शास्त्री प्रभृतयोनेतारः चन्द्रशेखर-भगतसिंह-बटुकेश्वर-सदृशाः वीरपुरुषाः लक्ष्मीबाई, तांत्याटोपे, मंगलपाण्डेय सदृशाः स्वतन्त्रता संग्राम-सैनिकाः आत्मोत्सर्गेण भारतमातुः परतन्त्रता पाशांश्छित्वा आमूतशासकैः प्रशासितामियां भारतभुवं पारतन्त्रशृङ्खलांश्छित्वा स्वातन्त्र्यदीपोदीपितामकुर्वन्। स्वतन्त्रे-तस्मिन् भारतदेशे प्रजातन्त्र पद्धतिरेव शासनकार्येषु प्रवर्तिता ऽभूत्। भारतभुव उत्तरांचले स्थितस्य केदारखण्ड भूभागस्य महत्वं को न जानाति गंगाद्वारं (हरिद्वारम्) उत्तुंगहिमशुभ्रमिवावृत गिरिशिखरं यावत् आतमसां। टौसं। बौद्धाचल

(बधाण) यावत् केदारखण्ड क्षेत्रं सुविस्तीर्णमुच्चावचभूमिभागयुतं पर्वतश्रेणिभिः विराजितं वर्तते क्षेत्रमिद पञ्चाशद्योजन। २०० मील। परिमितं विस्तृतं वर्तते। अस्मिन् क्षेत्रे टिहरी-उत्तरकाशी-पौड़ी-चमोली-देहरादून इति गढ़वालमण्डलस्य पंचजनपदाः हरिद्वार क्षेत्रञ्चपरिगण्यते। केदारखण्डे पंचप्रयागाः पंचवदर्यः, पंचकेदाराः चत्वारि धामानि शक्तिसिद्धपीठानि शिवमन्दिराणि च सुशोभन्ते। पावनक्षेत्रमिदं केदारखण्डं गंगा-यमुना-मन्दाकिनी-सरस्वत्यादीनां पुण्यसलिलानां नदीनामुद्गमस्थलं, विभिन्नानां वनस्पतीनाभौषधीनांरत्नानाञ्चागारः सिंहव्याघ्रवराहगजादीनां क्रीड़ाभूमिः पिकबर्हि, पारावत मरालादीनां पक्षिणां बिहार भूमिः विविधानामहर्षीणां देवर्षीणां, ब्रह्मर्षीणां, राजर्षीणां च तपोभूमिः प्राचीन कालादेवास्ति। इयं धरा स्वपूतेन माहात्म्येन जनेभ्यः आध्यात्मिकी शान्ति प्रयच्छति। तथैव स्वमनोरमया छटया पर्यटकानां चेतांसि आह्लादयन्ती न केवलं भारतीयानामपितु विदेशीयानामपि हृदयानि रञ्जयति।

शिवशक्त्योः निवासभूतायाः केदारभुवः धार्मिक महत्वेन न केवलं भारतीया अपितु सकलविश्वनिवासिनो जनाः परिचिता सन्ति। अति प्राचीनकालादेव धर्मप्रियाः भक्तजना तीर्थयात्रिणोऽस्मिन् प्रदेशे समागत्य पवित्राणां धाम्नां दर्शनं कृत्वा देवताभ्यः श्रदधानाः मनोवांछितानां फलानामुपलब्धिं कुर्वन्ति एतस्याः परम्परायाश्च रक्षां कुर्वन्ति। अस्मिन् प्रदेशे प्रसिद्धानां अखिल भारतीय देवतानां शिवस्य विष्णोरन्येषांवा पावनधामानि सन्त्येव परन्तु तस्याः महामाया रूपायाः शक्तेऽपि पावनानि सिद्ध-पीठानि स्थले-स्थले विराजन्ते। भगवत्याः भागीरत्याः कालिन्दिनीचोदग्मस्थलानां दर्शनं कृत्वा भक्तिरसनिर्भराः तीर्थयात्रिणः शिवस्य धामं केदारनाथं विष्णोश्चधामं बदरीनाथमवलोकयन्ति। परन्तु केदारखण्डस्य विभिन्नेषु प्रदेशेषु महाशक्तेः कथितेषु पीठेष्वागत्य न केवलं क्षेत्रीया जना अपितु सकल भारतवर्ष निवासिनो भक्तजनाः विशिष्टेषु स्थलेषु महाशक्तेरुपासनां कृत्वा विशिष्ठ फलभागिनो भवन्ति। विशिष्टे-स्ववसरेषु नवरात्रादिष्वस्मिन् गढ़प्रदेशे न केवलं विशिष्ठेषु मन्दिरेष्वपितु गृहे-गृहे तस्याः महा शक्तेः पूजनं महोत्साहेन सम्पन्नं विधीयते। अयमेव हेतुः यदस्मिन् केदारखण्डे शक्ति-सिद्धपीठानां महती संरचना सर्वत्रैव दरीदृश्यते।

अस्या महाशक्तेः महदलौकिकगुणानामनुशंषा वैदिकसाहित्येऽवलोक्यते। ऋग्वेदस्य वाक्सूक्तस्य वाग्देव्येव शाक्त तंत्राणामाधारमितिइति केषांचितं समा-लोचकानांमतम्। उपनिषत्स्वपि हेमवती उमा तस्या एव महाशक्तेः स्वरूपिणी ब्रह्मणः सत्वरजस्तमषां रूपाण्येव गृहन्ती महर्षिभिः दार्शनिकैश्च ब्रह्म-विष्णु-महेशानां रूपैरेव कल्पिता तेषां सरस्वती लक्ष्मी पार्वती चेति शक्तयः आसन्नेताषां शक्तीनां प्रभावेणैव ते ब्रह्मादयो महादेवता सर्वस्यास्य जगतः सर्जने पालनै संहारे च सक्षमा समभूवन्। भारतीयैः ऋषिभिः दार्शनिकैश्च ब्रह्म शिवरूपेणैव शक्तिं च तस्य भार्या रूपेण परिकल्पिता एतयौरनादित्वमभिन्नत्वम् चापिपरिकल्पितम्। तैः ऋषिभि

पुराणादिकानां ग्रन्थानां रचनां कृत्वा परिकल्पना कृता यदेतयो विशिष्ट स्थानं हिमालय क्षेत्रापि च केदारखण्डो वर्तते । तत्र शिवोविशेषरूपेण कैलासपर्वतस्याधिष्ठाता शक्तिश्च हिमालयस्य सुता । तैः पुराण रचनाकारैः द्वयोरप्येतयोर्विवाह सम्बन्धं परिकल्प्य शिवशक्त्योरन्तरंगता एकात्मकता चापि प्रतिपादिता ।

शाक्तसिद्धपीठानि न केवल केदारखण्ड एव अपितु भारतवर्षस्य विभिन्न भागेषु प्रतिष्ठियन्ति सन्ति । तानि च देशस्यास्य धार्मिकं-सांस्कृतिकं राजनीतिकं चैकत्वं प्रतिष्ठापयन्ति । किन्तु महाशक्तेः मूल स्थानंमुख्यरूपेण हिमालयस्य केदारखण्ड क्षेत्र-मेवामनन्तीति मनीषिणः । भारतवर्षस्थितानां शतत्रय संख्यकानां शाक्तसिद्ध-पीठानामेव षट्त्रिंशत् सिद्धपीठानि केदारखण्डे प्रतिष्ठन्ते ।

शाक्तसिद्धपीठानां स्थापना सम्बन्धे पुराणेष्वेका विशिष्टा कथा वर्तते । कदाचित् कनखलाभिधेये स्थले पितुर्दक्षस्य गृहे पत्युः निन्दा-माकर्ण्य दक्षपुत्री सती प्राणांस्तत्याज, प्रिया विरह विह्वलः शिवः सत्याः मृतशरीरं स्कन्धे निधायोन्मत्तवत् सकलब्रह्माण्डमालोडयन् परिबभ्राम । शिवस्य मोहभंगाय विष्णुः स्वचक्रेण सत्या-स्तच्छरीरं खण्डशश्चकार । एषु एषु स्थलेषु सत्या वपुषोऽङ्गान्यपतन् तानि तानि स्थलानि सिद्धपीठरूपेण प्रतिष्ठायाप्नुवन् । उत्तरवर्तिनि काले तेषु स्थलेषु शिवलिंगाना-मुत्पत्तिप्रतिष्ठा च समभूत् । तानि च सिद्धपीठानि भक्तानां साधनाफलप्रदानि प्रथितान्यभवन् ।

केदारखण्डे यानि प्राचीनानि शाक्तसिद्धपीठानि प्रतिष्ठामाप्नुवन् तान्यस्य क्षेत्रस्य धर्म-संस्कृति-सभ्यता-राजनीति-अर्थव्यवस्थादीनि च प्रभावितान्यकुर्वन् । न केवलं गढ़क्षेत्रीया एव जनाः शाक्तपीठैः प्रभाविता बभूवु अपितु भारतवर्षस्य विभिन्नेषु प्रदेशेषु निवसन्तो भगवती भक्ताः अत्रत्यैः सिद्धपीठैः सह स्नेहं भक्तिं च हृदयेषु (आहरिद्वारातु)-हिमावृत्तोत्तुंग-हिमवच्छिख-राणिधावत् प्रतिष्ठितानामेतेषां सिद्धपीठानां तीर्थयात्रा तत्र च शक्तेः लौकिकी पारलौकीकी चोपासना सिद्धप्रदायिनी गणयते । यद्यपि प्राचीन संस्कृत साहित्ये शाक्तसिद्धपीठानामेषां माहात्म्य वर्णनं यत्र तत्रोपलभ्यते तथापि नोपलभ्यते क्वचिदपीदृशसाहित्यमेतेषां सम्पूर्ण चित्रं माहात्म्यं मन्यच्च विशेषत्वं एकस्मिन्नेव स्थाने समुद्घाटयेत् । अत आवश्यकमिदं प्रतिभाति यदेतेषां सम्पूर्णमध्ययनं कृत्वा शास्त्राणि पुराणान्यन्यच्च साहित्य संशोध्य सिद्धपीठेषु गत्वा प्रत्यक्ष रूपेण तेषां निरीक्षणं विधाय सिद्धपीठ सम्बन्धिनी किम्वदन्ती लोकवार्ताश्च विज्ञायेदृशस्य शोधग्रन्थस्य प्रस्तुतीकरणं भवेद् यत्रैतेषां शाक्तसिद्धपीठानां सकलेनेतिहासेन सह धार्मिकस्य सांस्कृतिकस्य च महत्वस्य समुद्घाटनंस्यात् । संस्कृत विषयमवलम्ब्य स्नातकोत्तर परीक्षामुतीर्य शोध कार्य समुत्सुकां विषय निर्वाचन व्यग्रं प्राक् देवप्रयाग निवासी आचार्योपाधिधारी चक्रधरजोशी महोदयः प्रेरयामास शाक्त-सिद्धपीठ सम्बन्धि शोधकार्य विधातुम् । कार्यस्य महत्वम् निर्बाधत्वं चाधिगम्य यदा स्व गुरुवरं डॉ० कृष्णकुमार महोदयमुपजगाम परामर्शकरणाय । प्रसन्नीभूतेन तेन

 भारत में 30 शक्तिपीठ हैं जिनमें 63 उत्तराखंड में हैं।

नितरां प्रोत्साहितस्तेषां च महाभागानां मार्गनिर्देशेनैवाहं समर्थोऽभवम् कार्यस्यैतस्य पूरणे।

प्रस्तुतेऽस्मिन् शोधप्रबन्धेऽसृस्वध्यायेषु विभक्ते शाक्तपीठ सम्बन्धिते तेषां विशद विवरणमेवास्य प्रबन्धस्य प्रमुखा विशेषता। शक्ति सम्बन्धिनामन्येषां च ग्रन्धानामध्ययन विधायातिदुर्गमेषु स्थानेषु स्थितान्यपि सिद्धपीठानि पदयात्रा द्वारेणोपगम्य तेषां च प्रत्यक्षदर्शनं कृत्वा तदध्ययनं निहितं विद्यते। अत्र च सिद्ध-पीठानामैतिहासिकं विवरणं भवनानां रचना सम्बन्धिन्यो विशिष्ठताः पुरातत्व सम्बन्धिन्यश्च सामग्यः लौकिक किम्बदन्त्यः पूजनपद्धत्यः मेलापकानामायोजनानि अन्यानि च प्रबन्धादि वर्णानानि सम्यगुपवर्णितानि। तेषां च विस्तृतानि विवरणान्यस्मिन् शोधप्रबन्धे सन्निहितानि विद्यन्ते। कूतूहल निवृतये ज्ञानवर्धनाय च फोटोग्राफ द्वारेण विषयस्य स्पष्टीकरणमपि क्रमशः सर्वत्रैवकृतम्। प्रयासस्यास्य च पूरेण श्रद्धया कृतशतया च अवनतोऽस्म्यहम् गुरुन्प्रति। सिद्धपीठानां माहात्म्य वर्णनेन अतितुच्छापि मे लेखनी मलीमसं च मे मनः पवित्रतामधिजगाम। भवार्णवेऽस्मिन् बहवो नास्तिका मन्दाश्च प्रमादादज्ञानाद्वा विविधभावनाषु परिभ्रमन्तोऽन्धतमस्येव पातयन्ति स्वात्मानम्[1]। परन्तु शक्त्युपासनया विधिविधानविहित पूजनेन च भवदुःखत्रय विनि-र्मुक्ता भुक्ताः लौकिकं पारलौकिकं च सुखं प्राप्नुवन्ति। हिमालयस्य प्राकृतिकं सौन्दर्य-माहात्म्यं च स्वयमेवागत्य विलोकयेयुरितिविचार्य प्रस्तुतो मयाग्रन्थोऽयं विदुषां श्रद्धान्वितानां भक्तजनानां समक्षम्। अन्येऽस्मिन् बुद्धेश्चाञ्चल्यात् प्रमादाद्वा यानि कानिचिदपि स्खलनानि स्युःतानि क्षमयन्तु विद्वज्जनाः।

मातर्मयाति तपसा परितोषिता त्वं
प्राग्जन्मनि प्रसुमनादिभिरर्चितासि।
धर्मात्मजेन बदरीवनखण्डमध्ये
किं विस्मृतो जननि ते त्वयि भक्तिभावः॥

विदुषांवशंबद :
**ललिताप्रसाद पाण्डेयः**

---

१. तेमन्दास्तेऽति दुर्भाग्या रोगैस्ते समभिदुता।
येषां चित्ते न विश्वासो भवेदम्बार्चनादिषु॥ देवी भा० ३-१८-२६

# प्रथमोऽध्यायः

## १. अध्ययनस्यावश्यकता महत्वं च

शक्त्युपासका महापुरुषाः भगवन्तं[1] शक्तिस्वरूपम् अनादिकालादेव स्वीकृतवन्तः। (भगवांचासौशक्ति भगवच्छक्तिरिति। शक्तिः नित्यानादि कालीनाचास्ति। सर्वं[2] खल्विदं ब्रह्म इति। 'सदैकत्वं न भेदोऽस्ति' इति। अहं देवी न चान्यो ऽस्मि) इत्यादीनि वाक्यानि शक्तिबोधकानि सन्ति।

सृष्टेः प्रलयदशायां विष्णुब्रह्माशिवादिदेवता क्रमेण सत्वरजस्तमो गुणांशैः परब्रह्मणोऽव्याकृत (शक्ति) शरीरे विलीनाआसन्। विषयेऽस्मिन् ब्रह्मणि सर्वेषु निगमागमपुराणेषु नेति[3] 'नेति' वाक्यैर्या बोध्यते सा एव कल्याणरूपिणी शक्ति

---

१. दैवी नावं स्वरित्रामनागसमस्त्रवन्तीमा रूहेमा स्वस्तये।
—ऋग्वेद म० अ० सू० अ० १०-५-६३-१०
या सा भगवती नित्या सच्चिदानन्दरूपिणी।
परात्परतरा देवी यथा व्याप्तमिदं जगत्॥ —देवी भा० मा० २-३६

२. सर्वं खल्विदमेवाहं नान्यदस्ति सनातनम्। —देवी भा० १-१५-५२
अहं देवी न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक्।
सच्चिदानन्दरूपोऽहं नित्यमुक्त स्वभाववत्॥ —विद्यार्णवतंत्रम् ५-९५-२
देवानां पूर्व्ये युगेऽसतः सदजायत। —ऋ० १०-६-७२-२
सदैकत्वं न भेदोऽस्ति सर्वदेव ममास्व च।
यौऽसौ साहमहं याऽसौ भेदोऽस्ति मतिविभ्रमात्। —देवी भा० ३-६-२
अहं रुद्रेभिर्वसुभिश्चरामि। अहमादित्यैरुतः विश्वदेवैः।
अहं मित्रावरूणावुभौ विभर्मि। अहमिन्दाग्नी अहमश्विनोभा।
अहं सोमं त्वष्टारं पूषणं भगं दधामि।
अहं विष्णुमुरुक्रमं ब्राह्मणमुत प्रजापतिं दधामि॥
—ऋ० १०-१०-१२५-(१-२)

३. नेति नेतीति वाक्यैर्या बोध्यते सकलागमैः।
तां सर्वकारणां देवीं सर्वभावेन सम्मता। —देवी भा० ७-२८-३२
संसार बंधहेतुश्च सैव सर्वेश्वरेश्वरी। —श्रीदुर्गासप्तशती १-५८
हेतुः समस्तजगतां त्रिगुणापि दोषैर्न ज्ञायसे हरिहरादिभिरप्यपारा।
सर्वाश्रयाखिलमिदं जगदंशभूतमव्याकृता हि परमा प्रकृतिस्त्वमाद्या॥
—श्रीदुर्गा० ४-७

भुवनेश्वरी अस्ति। सैव पंचब्रह्मणस्त्वधिकं वस्तु इति कथ्यते।[१]

भारतीय-वैदिक-साहित्ये मूलतत्वशक्तेः प्राचीनतायाः प्रामाणिकतायाश्च विषये वेदाः दक्षस्य सुतां शक्तिमदितिं नामधेयां निर्विवादरूपेण स्वीकुर्वन्ति। यजुर्वेदे गायत्री-देवी छन्दसु शक्तिस्थानं प्राप्नोति। ऋग्वेदस्य वागाम्भृणीसूक्तेः वाग्देव्याः उल्लेखः शाक्तेषु महानादरणी विषयः।[२]

प्राचीनोपनिषदः प्रतिपादयन्ति यत्[३] मायादित्यजादिनामभ्यः प्रथिता शक्तिरस्य जगतः पालनकर्त्री विद्यते।

दर्शनेष्वपि शक्तेर्महत्वं स्वीकृतं वर्तते। भगवत्याः शक्त्याः मायास्वरूपत्व प्रतिपादने प्रकृतिरूपे सा ब्रह्मस्वरूपिणी एव सिद्धा भवति। अग्नेः उष्णता किरणमालेः किरणमाला, चन्द्रमसश्चन्द्रिका स्वभावशक्तिरिव सा परात्परा परमाशक्ति देवीभगवती

---

१. पंचभ्यस्त्वधिकं वस्तु वेदेऽव्यक्तमितीर्यते।
यस्मिन्नोतं च प्रोतं च सैव श्रीभुवनेश्वरी॥ —देवी भा० ७-२९-८
देवी त्रयं यदा देवत्रयायादात्पराम्बिका।
तदा प्रभृति ते देवाः सृष्टि कर्माणि चक्रिरे। —देवी भा० ७-२९-२४

२. अदितेर्दक्षो अजायत दाक्षाद्वदितिः परि।
अदितिर्ह्यजनिष्ठ दक्षया दुहिता तव॥ —ऋग्वेद १०-६-७२-४
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः।
विश्वेदेवा अदितिः पंचजना अदितिर्ज्जातमदितिर्ज्जनित्वम्॥
—ऋग्वेद १-८९-९०

अदितिर्न उरुष्यत्व-दितिः शर्मयच्छतु। —ऋग्वेद ८-४७-९
मातेर्वास्मा अदिते शर्मयच्छः। —अथर्ववेद २-५-२८-५
गायत्रेण त्वां छन्दसा प्रतिगृह्णामि। —पूर्वविंशति अ० वे० १-२७

३. य एकोऽवर्णो बहुधा शक्तियोगात्। —श्वेताश्वरोपनिषद् ४-१
अजामेकाम् लोहित शुक्लकृष्णां बह्वीः प्रजाः सृजमानां स्वरूपाः।
अजोह्येको जुषमाणो ऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥
—श्वेता० ४-५

पुरुषान्न परं किंचित् सा काष्ठा सा परागतिः। —कठोपनिषद् ११-३-११
या प्राणेन सम्भवत्यदितिर्देवमातामयी।
गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत। —एतद्वैतद् कठो० २-१-७
अथ दैवी वृष्टौतृप्तिरिति। —तैतरीयोपनिषद् ३-१०
दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेता तरन्ति ते॥ —श्रीमद्भगवतगीता ७-१४

अपि शिवरूपब्रह्मण: नित्यरूपा सहज शक्तिरस्ति ।[१]

सा मंगलविधायिनी शक्ति:[२] शिवेन सह अभिन्नरूपिणी अस्ति। भगवत्या: स्वरूप प्रतिपादने सर्वेषु वचनेषु या मायाशक्ति: कलादि शब्दोऽस्ति, सा लक्षणया मायाविशिष्ट शक्तिविशिष्ट कलाविष्टादि ब्रह्मबोधिका चास्ति। मायाशक्ति कलादि विशिष्टो यो ब्रह्म: स भगवती पद वाच्य इति मन्यते।

परमात्मन: पुरुषवाचक रूपाणि अस्या एव अनाद्यविद्याविनाश्यनिर्वचनीय रूपाया: सर्वशक्तिमय्या: परमेश्वर्या: महाशक्त्या एव रूपाणि सन्ति। परमात्मारूपा इयंमहाशक्त्यपरिणामिनी अस्ति। परं अनयैव मायाशक्त्या सर्वत्र परिणामादयो भवन्ति। सांख्यदर्शनेऽपि[३] प्रकृतिपुरुषयोर्सिद्धान्त: अस्या एव जगदम्बादिशक्त्या: प्रतीकोऽस्ति। (प्रकृते:—प्रकरोति प्रकृतिरिति व्युत्पत्यां सत्वरजस्तमोगुणानां साम्यावस्थयाऽभिधानादिति)।

या शक्ति: वेदेषु अदितिरूपा, दर्शनशास्त्रेषु च मायाप्रकृतिरूपा आसीत्[४] सैव शक्ति: पुराणेषु तंत्रग्रन्थेषु च दक्षस्य सुता सतीरूपा शिवस्यपत्नी अभूत्। सत्या:

---

१. केचन शाक्ता: शक्ति मायाशब्दार्थभूतां जगत्कारणत्वेनांगीकृता।
—इति (शांकरदर्शन)
मात्वस्यां शक्त्यात्मना प्रलये सर्व जगत् सृष्टौ व्यक्ति मायातीतिमाया।
—इति (शैवद०)
देव्या यया ततमिदं जगदात्मशक्त्या, निशेषदेवगणशक्तिसमूहमूर्त्या।
तामम्बिकामखिलदेवमहर्षिपूज्यां भक्त्यानता: स्म विदधातु शुभानि सा न:॥
—दुर्गा० ४-३

२. शिवशक्ति समायोगात् सर्व ब्रह्ममयं जगत्। —मातृकाभेदतंत्रम् ६-१६
बीजांकुरन्याययोगात् शिवशक्त्यात्मकमह:। —शक्ति संगमतंत्रम् ४३-२६
अहं शिवब्रह्मरूपा शक्तिरिति प्रकीर्तिता। —श० स० तं० ५८-७३
शिवशक्त्यात्मंक ब्रह्म यत् किंचिज्जगति गतम्। —श० स० तं० ६१-३

३. मूलप्रकृतिरविकृति महदाद्या प्रकृतिविकृतय: सप्त:।
षोड़शकस्तु विकारो न प्रकृति न विकृति पुरुष:॥ —सांख्यकारिका (३)
मूलप्रकृतिरीशाना पुंस्प्रधानेश्वरेश्वरी। —विद्यार्णव तं० ३-५५-५
प्रधानं प्रकृतिं तां च माया गुणवती पराम्।
बुद्धितत्वस्य जननीमाहुर्विकृति वर्जिताम्॥
सा शक्तिरम्बिका प्रोक्ता प्रकृतिस्सकलेश्वरी।
त्रिदेव जननी नित्या मूलकारणमित्युत॥ —शिवपुराण २-६-२०/२१
देवीनां बीजरूपा च मूलप्रकृतिरीश्वरी।—देवी भा० ९-२-६६

४. सैव दक्षात्समुद्भूता लोककार्यार्थमेव च।
लीलांचकार बहुशो भक्तोद्धरण हेतवे॥ —शिवपुराण २-१६-३५

देहत्यागानन्तरं सिद्धपीठानामुत्पतिर्बभूव, येषां स्थापना देवैः सह स्वयं शंकरेणकृता। अपरस्मिन् जन्मनि सा सती हिमालयस्य गृहे अवतरन्ती पार्वतीनाम धारयित्वा शिवस्य पत्नीपदमाससाद। सैव च[1] नवदुर्गाणामपि कारणभूता विख्याता। तस्या देहादपि बहूनि सिद्धपीठानि प्रसिद्धानि सन्ति। इमामेव मायारूपिणीं शक्तिमाश्रित्य विष्णुः जगत्परित्रानवतरति 'परित्राणाय साधूनां विनाशाय च दुष्कृताम्' इति सारतत्वं भारतीयैः महापुरुषैः काव्यकोविदैश्च सकलेषु पुराणेषु काव्यग्रन्थेषु प्रतिपादितम्।

आदिकाले विदुषामव्यक्तात्मक मायाशब्द एव भगवत्याः शक्त्याः[2] निर्गुणोपासनाविषय आसीत् परं यदा सत्याः देहोत्सर्गे संजोते तदैव[3] सिद्धपीठानामुत्पत्यनन्तरं[4] धर्मार्थकाममोक्ष चतुर्वर्गलाभाय सगुणोपासना प्रचलिता अभूत्।

विष्णुब्रह्माशिवादिदेवतासु सत्वरजस्तमसामेकस्य गुणस्य प्राधान्य, मस्ति परमियंशक्तिः त्रिगुणात्मिका अस्ति। पृथक्-पृथक् गुणानामुपासनाऽपेक्षा त्रिगुणात्मिकायाः मूलभूतसाम्यावस्थाधारिण्याः[5] शक्त्या उपासना श्रेष्ठा अस्त्येव इति मत्वा

---

१. नवशक्तिभिः संयुक्त नवरात्रंतदुच्यते।
एकैव देवदेवेशि नवधा परिनिष्ठिता॥ —श० स० तं० १६-२
प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी।
तृतीयं चन्द्र घण्टेति कूष्माण्डेति चतुर्थकम्॥
पंचमंस्कन्दमातेति षष्ठं कात्यायनीति च।
सप्तमं कालरात्रीति महागौरीति चाष्टमम्।
नवमं सिद्धिदात्री च नवदुर्गा प्रकीर्तिता॥ —मां० दुर्गा० ३/५

२. या देवी निजलीलार्थंद्विधाभूता बभूव ह। —देवी भा० १२-१२-१३
प्रकृतिर्विकृतिर्तस्य द्वेरूपे परमात्मनः॥
अलक्ष्यं तस्य तद्रूपं प्रकृति सा प्रकीर्तिता।
साकारा विकृतिर्ज्ञेया तस्य सर्वं जगत्स्मृतम्॥ —(विष्णुधर्मोतरे)
सगुणा निर्गुणा सा तु द्विधा प्रोक्ता मनीषिभिः।
सगुणारागिभिः सेव्या निर्गुणा तु विरागिभिः॥ —देवी भा० १-८-४०
सत्यं सत्यं पुनः सत्यं वेदशास्त्रार्थ निर्णयः।
पूजनीया पराशक्ति निर्गुणा सगुणाऽथवा॥ —देवी भा० १-६-८६
साम्यादेवेशि ब्रह्मत्वं निर्गुणोऽयं निराकृतिः। —श० सं० त्रं० ५-४
अनेकधा वर्ण्यमानमेकमेवास्ति केवलम्॥ —श० सं० त्रं० ५-६

३. पीठानि संस्मरेद्विद्वान् सर्वकामार्थसिद्धये। —वि० तं० १-१२७-२

४. धर्मार्थकाममोक्षाणां स्वामिनी सा निराकुला।
ददाति वांच्छितान् कामान् पूजिता विधिपूर्वकम्॥ —देव० भा० १-८-४१

५. जगत्संजनने शक्तिस्त्वयि तिष्ठति राजसी।
सात्विकीमयि रुद्रे च तामसी परिकीर्तिता॥ —देवी भा० १-४-४७

विद्वांसः शक्तेः व्यापकत्वप्रभावात् सुगमत्वकारणाच्च शक्त्युपासनां स्वीचक्रुः।

प्रथमतः ब्रह्मणा सह मायायाः व्यवधान 'इति शून्य सम्बन्धोऽस्ति। अनन्तरं गुणोत्तरहेतुः मायायाः गुणस्य संबन्ध' इति अस्यां साम्यावस्थायां ब्रह्मणो[१] व्यवधानिकः सम्बन्धोऽस्ति, इति विचार्य शक्त्युपासनायाः श्रेष्ठत्वं ते अलंचक्रुः।

पुराविद्भिः भूमडलस्य उत्खननेषु मातृकादेवीनामनेकमूर्तीः मृतिकामयीः समुपलब्धवन्तः। अतः निस्सन्दिग्धमिदं सिध्यति यत् मातृकायः शक्तेः मूर्तयः एव प्रथमं तावत् विरचिताः। आध्यात्मिकोन्नयनायापि मातृमूर्तीनां भारतीय देवीनामपूर्वस्थानम्।

भारतीय साहित्ये वैष्णवशैवशाक्तादीनां सम्प्रदायानां मान्यता सर्वत्रैवास्ति। विष्णुभक्ताः विष्णोः शिवभक्ताः शिवस्य पूजनं कुर्वन्ति। परं शक्तिपूजनं शाक्तैः सह[२] वैष्णवाः शैवाश्चापि प्रकुर्वन्ति। आदिशक्ति विना तु ब्रह्मा[३] प्यकर्मण्यतां प्राप्नोति। पुरा भगवता[४] कृष्णेनापि द्वापुरे युगे कंशजनित दुःख निवारणार्थं शक्तेः[५] योगमायाया अर्चना विहिता। देवभूमिः[६] भारतवर्षः[७] सुरक्षाप्रदायिनीभिः प्रकृतिनिमित्ताभिः

---

न शिवोपासना नित्या न विष्णुपासना तथा।
नित्योपास्ति परादेव्या नित्या श्रुत्येव चोदिता॥ —देवी भा० ११-१९-६६

१. सर्वेशाक्ता द्विजाः प्रोक्ता न शैवा न च वैष्णवाः।
आदिशक्तिमुपासन्ते गायत्री वेदमातरम्। —देवी भा० ११-२१-२
सर्वेध्यायन्ति तां देवीं सृष्टिस्थित्यन्तकारिणीम्॥—देवी भा० ३-१८-३४

२. शिवशक्त्यात्मकं बीजं यः पश्यति स वैष्णवः। —(गायत्रीतंत्र) ह० लि०
शिवशक्त्यात्मकं बीजं यो जानाति स साधकः॥ —श० सं० तं० ८-२३

३. शिवोऽपि शवतां याति कुण्डलिन्यां विवर्जितः।
शक्तिहीनस्तु यः कश्चिदसमर्थः स्मृतो बुधैः॥ —देवी भा० १-८-३१
शक्त्याविना शिवे सूक्ष्मे नाम धाम न विद्यते॥ —श० सं० तं० ४२-२५

४. भगवानपि विश्वात्मा विदित्वा कंसजं भयम्।
यदूनां निजनाथानां योगमाया समादिशत्॥ —श्रीमद्भागवत १०-२-६

५. सगुणं निर्गुणं चेति मद्रूपं द्विविधं मतम्।
मायाशबलितं चैकं द्वितीयन्तदनाश्रितम्॥ —शिव पु० ५-५९-३८

६. गायन्तिदेवा किल गीतिकानि धन्यास्तु ते भारतभूमिभागे।
स्वर्गापवर्गास्पद हेतु भूते भवन्ति भूयः पुरुषाः सुरत्वात्॥
—श्रीमद्भागवत ५

ततो वै भारतेवर्षे सूरिभिर्देवसंसदि।
—पद्मपुराण श्रीमद्भागवत माहा० ४-१६

७. उत्तरं यत्समुद्रस्य हिमवद्दक्षिणं च यत्।
वर्षं यद् भारतंनामा यत्रेयं भारतीप्रजा॥—वायुपुराण भुवनविन्यास १-६

सीमाभिः विशालतमो देशोऽस्ति। अत्र विभिन्नानां सम्प्रदायानां जनाः निवसन्ति। अस्य देशस्योत्तरदिग्भागे हिमालयः सुशोभते पूर्वदक्षिणपश्चिमदिग्भागाः समुद्रैरावृताश्च।

प्राचीनकाले[१] महाराज्ञः दुष्यन्तस्य शकुन्तलानाम्नी महिषी भरत नामकं सुतं जनयामास। 'भरतेति' शब्देन देशस्यास्य नाम भारतवर्षमिति ख्यातम्। अपरेषां मते मनुना मानवसमाजस्य भरणं-पोषणं च कृतम् भरणं पोषणंचेति शब्दाभ्यां भारतमितिप्रसिद्धम्। परं चान्येषां मते ब्रह्मणः स्वयम्भुवः शतरूपा नाम्नी पत्नी आसीत् तस्योदरे प्रियव्रतोनाम पुत्रो जातः तस्य आग्नीन्ध्र आग्नीन्ध्रात् नाभिः, नाभेः मेरुनाम्नीभार्या तस्याः भगवानृषभदेवो जातस्तस्य शतेषु पुत्रेषु श्रेष्ठतमः पुत्रः भरतः आसीत् सः द्वीपानां राज्यविभाजने जम्बूद्वीपस्य राज्याधिकारी वभूव।

अनेन भरतेति[२] शब्देन भरतखण्डमिति प्रसिद्धम्। कालान्तरे भरतखण्डस्य स्थाने भारतवर्षमिति विख्यातम्। विशालस्यास्य भारतवर्षस्य विभिन्नेषु भागेषु प्राकृतिकावस्था अत्यन्त भिन्ना परंच भारतीयसंस्कृतेः रक्षणार्थं सर्वेषां वर्गाणां समुदायानांच जनाः किमपि भिन्नतां नानुभवन्ति। तथा च देशस्य भरतखण्डस्य धार्मिकं-सांस्कृतिकं-सामाजिकं वैज्ञानिकमाध्यात्मिकं राजनीतिकमिति सर्वेषु क्षेत्रेषु च सर्वेषा जनानां भारतीयानां चैकाभावना दरीदृश्यते। विशेषतस्तेषां भावनानां धार्मिकक्षेत्रे महनीय-महत्वं चास्ति। विदुषां मते भारतस्य धार्मिकस्थलानि भरतखण्डस्य धार्मिकसंस्कृतेः संरक्षणार्थं सुचरितद्वारपालस्य कार्यं कुर्वन्ति। अत एव भारतवर्षस्य सर्वेषु क्षेत्रेषु वर्गेषु च स्थिरता प्रदानार्थं संस्कृतेः संरक्षणार्थं च पावन धार्मिक स्थलानामन्वेषणं सर्वेक्षणात्मकमेव मूलमंत्रेति। भारतवर्षः धार्मिक भावनामग्रणीरस्तीति अत्रमते किमपि सन्देहो नास्ति। भारतवर्षेऽस्मिन् वैदिककालादेव महर्षयः दिव्यचक्षुभिः

---

आप्स्यन्ति धन्याः खलु ते मनुष्याः सुखैर्युताः कर्मणि सन्निविष्टाः।
जनुर्हि येषां खलु भारतेऽस्ति ते स्वर्गमोक्षोभय लाभवन्तः॥
—शि० पु० ५-८-२१

१. भरणाच्च प्रजानां वै मनुर्भरत उच्यते।
निरुक्त वचनाच्चैव वर्षं तद्भारतंस्मृतम्॥ —वायुपु० भु० १-७
ततो वै भरतो ज्येष्ठो नारायण परायण।
विख्यातं वर्षमेतद् यन्नाम्ना भारतमद्भुतम्॥
—श्रीमद्भागवत ११-२-१७

२. तत्रापि भारतं वर्षं कर्मक्षेत्रमुशन्ति हि।
अन्यानि चाष्टवर्षाणि भौमस्वर्गप्रदानि च॥ —देवी भा० ८-७-३४
वक्ष्येऽहं भारतं वर्षं हिमाद्रेश्चैव दक्षिणम्।
उत्तरेतु समुद्रस्य भारती यत्र संस्कृतिः॥
नवयोजनसाहस्त्रे विस्तारोऽस्य महामुने।
स्वर्गापवर्गयोः कर्मभूमिरेषास्मृता बुधैः॥ —शिव पु० ५-८-२/३

समधिष्टिताः पुण्यस्थलानां प्रत्यक्षावलोकनं कृत्वा तेषां महत्वमाध्यात्मिकत्वं च प्रतिष्ठापने संलग्नाः समभूवन् । वर्तमानसमयेऽपि भारतीय विद्वद्वर्गेण एतत्सम्बन्धीन्यनेकान्वेषणानिकृतानि तेषां प्राचीनानां महर्षीणां मनीषिणां च कार्याणि सम्बर्द्धितानि । एतद्देशस्य धर्मस्यसंस्कृतेराध्यात्मिकभावस्य च सतत वृद्धये तैर्महान्तो प्रयासा क्रियन्ते । भारतवर्षमिदं प्राचीनकालादेव धर्मभावनास्वग्रगण्यमासीत् । मन्वन्तरकालात् पुराणकालपर्यन्तं पुरातन संस्कृतसाहित्ये विभिन्न धार्मिकस्थलानां देवतानां च वर्णनानि सन्ति ।

स्कन्दपुराणस्य मुख्येषु चतुर्षु भागेषु—काशीहेमाद्रिरेवाकेदारखण्डेषु भारतीय धार्मिकस्थलानां वर्णनं मानवानां मनांसि हरति । क्रमशश्च पूर्वोत्तरदक्षिणपश्चिम-दिग्भागानां धार्मिकस्थलानां[1] नदीगिरिसागराणां च वृहद्वर्णनमस्ति ।

भारतवर्षेऽस्मिन् भारतीयाः संस्कृतेः संरक्षणार्थमादिकालादेव विद्वांसः जन्मलब्धवन्तः । तथा च आचार्यवर्य्येण शंकराचार्येण भारतवर्षस्यचतुर्षुदिक्षु—प्राच्यां गोवर्द्धनः दक्षिणस्यां शृङ्गेरीकामकोटि च प्रतीच्यां शारदा-द्वारिका च उदीच्यां बदरीनाथपुरी एतेषाम् चतुर्णां मठानां स्थापना कृता । अथ च स अभिलुप्तानां चतुर्णां कुम्भपर्वाणां हरिद्वार-प्रयाग-उज्जयिनी-नासिकानां[2] तीर्थस्थलानां च पुनरुद्धारमकरोत् । क्रमेणानेन-रामानुज-निम्बार्क-मध्व-वल्लभाचार्या अपि वैष्णवानां मठानां (धाम्नां) स्थापनां कृत्वा भरतखण्डमेकस्मिन् सूत्रे ग्रथनार्थं महान्तं प्रयत्नम् अकुर्वन् ।

समस्तभारतस्य परिचय प्रतीकैः प्राचीनमहर्षिभिश्चत्वारि धामानिप्राच्यां जगन्नाथः दक्षिणस्यां रामेश्वरः प्रतीच्यां द्वारिका एवंचोत्तरस्यांदिशि बदरीनाथपुरी इति विनिर्मितानि । अन्ये च तीर्थाः अयोध्या-मथुरा-माया-काशी-कांच्यवन्तिका चेति स्थापिताः सन्ति । द्वादशानां ज्योतिर्लिङ्गानां-सोमनाथ-मल्लिकार्जुन-महाकाल-ओंकारेश्वर-वैद्यनाथ-भीमशंकर-रामेश्वर-नागेश्वर-विश्वनाथ--त्र्यम्बकेश्वर-केदारनाथ-घृष्णेश्वराणां स्थापनामकुर्वन् ।[3] भारतीय विद्वांसः समस्तार्यावर्तस्य पूर्णदर्शनार्थं

---

१. भूगोलं सगिरिसरित्समुद्रसत्वम् । —देवी भा० ८-२१-५

२. पूर्णकुम्भानां कालनिर्णयः—

(क) कुम्भेगुरो समायोगे मेषगे सूर्यचन्द्रयोः ।

(ख) वृषे देव्येज्य गमने मकरे चन्द्रसूययोः ।

(ग) तुलाश्चन्द्राब्जगेसूर्ये सिंहे देवगुरौ यदा ।

(घ) सिंहे देवगुरौसूर्येचन्द्रे च समधिष्ठिता ।

३. सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्जुनम् ।
उज्जयिन्यां महाकालमोकारे परमेश्वरम् ॥
केदारंहिमवत्पृष्टे डाकिन्यां भीमशंकरम् ।
वाराणस्यां च विश्वेशं त्रयम्बकं गौमतीतटे ॥

प्रयतनमकुर्वनस्मात् तीर्थसवनाच्च सम्पूर्ण भारतस्य मूर्तरूपेणदर्शनं भवति ।

भारतवर्षेऽस्मिन् द्विविधाः देवताः प्रतिष्ठिताः सन्ति । स्थानीया अखिल-भारतीयाश्च पावनस्थलेषु संस्थिताश्चैते देवताः सर्वे भारतवासिभिरूपास्यन्ते तेषु विष्णु-शिव-शक्ति-गणपति-सूर्य-कार्तिकेयादीनि पीठानि विद्यन्ते । तेष्वेव च शाक्तसिद्ध-पीठानामैतिहासिकं धार्मिकं च विशिष्ठं महत्वम् वर्तते । तेषां दर्शनमात्रेणैव स्वजीवनमुपासकाः धन्यमन्यन्ते । इमानि सिद्धपीठानि भारतस्य पवित्रपरम्परां मानव जीवनस्य सार्थकतांच दृढ़ी कुर्वन्ति । तथा च मानवमात्रस्य शान्तिव्यवस्थार्थं पारस्परिक स्नेहबन्धार्थं च शाक्त सिद्धपीठानां महत्वमपरिहार्यम् वर्तते ।

भारतस्योत्तरदिग्भागे[1] केदारखण्डस्य महत्वमतीव गौरवान्वितं प्रतिभाति । यत्र[2] गंगायमुना-सरस्वतीमन्दाकिन्यादीनां नदीनामुद्गमस्थलानां संगमस्थलानां च शोभनता[3] देवदारूकादीनांवृक्षाणां मनोहरता देवस्थलानां धार्मिकस्थलानां सिद्धपीठानां च पावनता विद्यते । तत्र अनेकासां नदीनां वनपंक्तीनां हिमाच्छादितशैलशिखराणां च प्राकृतिकीच्छटा केदारखण्डस्य शोभामभिवर्द्धयति । अत्रैव शिवशक्त्योरुत्पत्तिस्थलं चास्ति ।

धार्मिकक्षेत्रे[4] तु केदारखण्डस्य महिम्नः वर्णनंविस्तरेण महाकवि

---

वैद्यनाथं चिताभूमौ नागेशं दारुकावने ।
सेतुबन्धे च रामेशं घुश्मेशं च शिवालये ॥
द्वादशैतानि नामानि प्रातरुत्थाय यः पठेत् ।
सर्वपाप विनिर्मुक्तः सर्वसिद्धि फलंलभेत् ॥ —शिव पु० ४-१ (२१-२४)

१. गंगाद्वारोत्तरं विप्र स्वर्गभूमिस्मृताबुधैः ।
अन्यत्र पृथ्वी प्रोक्ता गंगाद्वारोत्तरं बिना ॥
इदमेव महाभाग स्वर्गद्वारं स्मृतं बुधैः ।
यस्यदर्शनमात्रेण विमुक्तो भवबन्धनैः ॥ —के० १०६/४-५

२. यस्यामलं दिवि यशः प्रथितं रसायांभूमौ च तेभुवन मंगल दिग्वितानम् ।
मन्दाकिनीति दिवि भोगवतीति चाधो गंगेति चेह चरणाम्बु पुनाति विश्वम् ॥ —श्रीमद्भा० १०-७०-४४

३. भागीरथीनिर्झरसीकरणां बोढ़ामुहुः कम्पितदेवदारू ।
यद्वायुरन्विष्ट मृगैः किरातैरासेव्यतेभिन्नशिखण्डिवर्हः ॥
—कुमार संभव १-१५

४. यत्रदेशे मृतो जंतुः शिव एव न संशयः ।
तस्य क्षेत्रस्य माहात्म्यं को वा वर्णयितुं क्षमः ॥
अनेकतीर्थ संयुक्त मृत्वामोक्षमवाप्नुयात् ।
गच्छध्वं त्रिदशस्थानं महापथ समीरितम् ॥
एतद्देव परंस्थानं ब्रह्महत्या निवारणम् ॥ —के० ४०/२२-२४

व्यासोऽप्यकरोत्। तेन व्यावर्णितम्-विनाकेदारखण्डस्य यात्रां यः मोक्षस्य कल्पना क्रियते स मोक्षपथं विहाय एव। केदारखण्डः शक्तिशिवयोरुत्पत्तिस्थलं देवभूमि-चास्त्यन्येषां महर्षीणां मनीषिणां चापीयमेव धारणा दृश्यते। भरतखण्डान्तर्गतक्षेत्रे[1] नन्दापर्वतमारभ्य काष्ठगिरियावत् गढ़वालमण्डलस्य-केदारखण्डस्य[2] भूभागे स्थले-स्थले बहूनि देवतानां मूर्तिमन्दिर पूजास्थानानि सन्ति परंचास्मिन् पर्वतीयक्षेत्रेऽन्यदेवतानाम्

---

केदारमण्डलं यावत् शिवलोको न संशयः।
प्राप्ते कलियुगे घोरे सुराः भूमि त्यजन्ति हि॥ —के० १७७-५१
अहोधन्या मनुष्येषु पश्यन्ति सकृदेव हि।
इदं क्षेत्रं महापुण्यं देवा एव न संशयः॥ —के० १७७-४०
बिना केदारकं देशं शिवस्थानं नरोत्तमः।
गंगाविश्वकलाभिश्च वर्तते सर्वदात्रवै॥ —के० १७७-५२
यथा सतीनां त्वं चैव देवनां च यथा हरिः।
सरसां सगरो यद्वत् सरितां जाह्नवी यथा॥
पर्वतानां यथाऽयं वै योगीनां याज्ञ्यवल्क्यकः।
भक्तानां च यथा देवी नारदो भक्त ईरितः॥
शिलानां च यथा शालग्रामशिला तु वैष्णवी।
अरण्यानां यथाप्रोक्तं वदर्य्यारण्य संज्ञितम्॥
धेनूनां च यथा कामधेनुर्वै परिकीर्तितता।
मनुष्याणां यथा विप्रो विप्राणां ज्ञानदो यथा॥
स्त्रीणां प्रतिव्रता यद्वत् प्रियाणां पुत्र एव च।
पदार्थानां यथा स्वर्ण मुनीनां च यथा शुकः॥
सर्वज्ञानां यथा व्यासो देशानामयमेव च।
नराणां च यथा राजा सुराणां वासवस्तथा॥
वसूना धनदो यद्वत् पुरीणां मामकी यथा।
रम्भाचाप्सरसां यद्वत् गन्धर्वाणां च तुम्बुरुः॥
क्षेत्राणां च ततः प्रोक्तं क्षेत्रं केदार संज्ञितम्॥ —के० ४१/११-१८

१. नन्दापर्वतमारभ्य यावत्काष्टगिरिर्भवेत्।
तावत्केदारकं क्षेत्रं शिवमन्दिरमुत्तमम्॥
रत्नस्तम्भं समारभ्य मायाक्षेत्रावधिस्मृतम्।
अतिपुण्यतमंस्थानं हिमालयपदान्तिकम्॥ —के० १०१/३०-३१

२. यत्रदेव शिव साक्षाद् वर्तते शिवया सह।
स्वयं समग्रभावेन नन्दिभृंग्यादिभिर्नृपः॥
काश्यादिषु च तीर्थेषु वसति ह्यंशमात्रतः।
अत्रैव हिमवत्प्रान्ते सर्वो निवसति प्रभुः॥ —के० १७७/३८-३९

अपेक्षा शक्तेः पूजास्थानानि सिद्धपीठान्यत्र बाहुल्येन स्थाने-स्थाने प्रतिष्ठानि चावलोक्यन्ते इति शक्तेर्महत्वमेवाधिकं दरीदृश्यते ।

न[1] केवलं केदारखण्डस्य निवासिनः अपितु समग्रभारतवर्षीयाः जनाः सिद्धपीठेषु शक्तेर्महत्वं स्वीकुर्वन्ति । धर्मार्थकाममोक्षेभ्यः जनाः काले-काले सिद्धपीठेषु गत्वा शक्तेर्दर्शनं पूजनं यज्ञं च कृत्वा स्वधार्मिक भव्यभावनाः प्रदर्शयन्ति । अथ च शक्तिरेकैव पावन सिद्धपीठेषु निवसन्ती अस्माकं धर्मं समाजं देशं संस्कृतिं च रक्षति । शक्तेः सिद्धपीठानि सकलभरतखण्ड एव विस्तृतानि सन्ति पर्वतीयक्षेत्रे तु इमानि श्रद्धाविश्वासयोर्केन्द्राणि । अत एव सिद्धपीठानामत्र धार्मिकं-समाजिकं-सांस्कृतिकं-राजनीतिकं-वैज्ञानिकमाध्यात्मिकं च प्रत्यक्षरूपेण महनीय महत्वमस्ति ।

प्राचीन संस्कृतसाहित्ये विशेषतस्तेषु पुराणग्रन्थेष्वागमग्रन्थेषु च सिद्धपीठाना-मुत्पत्तिस्थिति पावनतादीनां च विस्तरेण वर्णनानि-दृश्यन्ते । एतत् संस्कृत साहित्य सहाय्येन प्रत्यक्षावलोकनेन च सिद्धपीठानां सर्वेक्षणात्मकमध्ययनं सम्भविष्यति । यद्यपि च अनेनाध्ययनेन चतुर्वर्गफलप्राप्तिलाभस्य सम्भावना तथापि अध्ययनमिदं राष्ट्र-स्यैतस्य सर्वांगीणोन्नतिं विधास्यतीति परमत्रलाभः । अपरं च संस्कृत साहित्य सन्दर्भेणाध्ययनेन संस्कृतभाषाया अपि प्रोत्साहनं भविष्यति । भगवता सह शक्ति अक्षुण्णरूपेण प्रतिभातीयं सर्वेषां शास्त्राणां मान्यता । उमामहेशयोर्विष्णुलक्ष्म्योश्च युगललीलायां सर्वत्रैव भगवती शक्तिरूपा संसारस्य मूर्द्धायामासीना । किं बहुना ऐतिहासिकं-सामाजिकं-मनोवैज्ञानिकं-दार्शनिकं च सर्वेषु दृष्टिकोणेषु सार्वभौमिक सार्वकालिक भगवती सत्ताधारिणी अस्ति । सा च सकलभारतीयजीवनेषु संस्कृती च अखण्डाकाररूपेण सर्वव्यापिनी वर्तते ।[2] इयमेवशक्ति व्यवहारेण बहुधा दृश्यते ।[3] इति ।

---

केदारमण्डलस्यैव स्वर्भूमेर्देवतात्मनः ।
इदं परमकंस्थानं पृथिव्यां भिन्नमुच्यते ॥
तत्र ये पर्वताश्चैव दृषदः सलिलस्तथा ।
सर्वेपुण्यतमाः ख्याता भुक्तिमुक्तिप्रदायकाः ॥ —के० २०५/४-५
इयं तु पृथिवी प्रोक्ता स्वर्गभूमिस्तु सास्मृता ।
ततोऽत्र निवसंतश्च देवा एव न संशयः ॥ —के० २०६-२६

१. लुप्तधर्मप्रवर्तिनी । —देवी भा० १२-६-२५
जम्बूद्वीपवतीज्वाला । —देवी भा० १२-६-५६
धर्मशास्त्रप्रकाशिनी । —देवी भा० १२-६-८०
भारती भारताशयाः । —देवी भा० १२-६-११८
धर्मार्थकाममोक्षाणां स्वामिनी सा निराकुला । —देवी भा० १-८-४०

२. अतः सर्वेषु शास्त्रेषु देवी सर्वोत्तमास्मृता । —देवी भा० ५-१-२४

३. एकधा च द्विधा चैव तथा शतसहस्रधा ।
शक्तयः खलु भिद्यन्ते बहुधा व्यवहारतः ॥ —शि० पु० ७-४-१७

## २. सिद्धपीठानामुत्पत्ति प्रक्रिया

प्रलयकाले[१] सर्वमिदं जगत् समुद्रे निमग्नम् शेषशय्यायां योगनिद्रया सुप्तो हरिरप्यत्र जलेऽवसत् । काष्ठे नीलीनो वह्निरिवचतुर्युगसहस्त्रं यावज्जले सुप्तः स्वतनौ लीनान् लोकानपश्यत् । यदा लोकान् पुनः स्रष्ठुमिच्छतस्तदा-भगवतस्तस्य नाभेः पद्मं समुत्पन्नम् । तत् सूर्यवद् प्रकाशमानं पद्मं जलादूर्ध्वभागे ववृधे । पद्म जनकः स एव नारायणो ब्रह्मरूपेण तस्मिन्पद्मे प्रकटितोऽभूत् ।

पद्मपत्रर्कणिकायां स्थितो ब्रह्मा लोके दिक् चतुष्टय वीक्षणार्थं चत्वारिमुखानि प्राप्तवान् परं स तत्पद्मलोकात्त्वस्यात्मनश्चानभिज्ञः । कोऽहं कश्च पद्मस्योत्पत्तिहेतुः कश्चास्याधारः इति विज्ञातु कामस्य पद्मनालदण्डाश्रयेण-जलमध्ये प्रविष्टस्यात्मनश्चाश्रयं विचिन्वतस्तस्य शतवर्षाणि व्यतीतानि। ततोऽन्वेषणपराङ्मुखः ब्रह्मा पुनस्तद्पद्ममास्थाय समाधिस्थोऽभूत् । तदनन्तरं पूर्वमन्वेषितं तमेव नारायण स्वहृद्ये प्रकटितं ददर्श । कथं भूतं ? शेषशय्यायां शयानं प्रलयकालिकं तमो दूरी कुर्वन्तम् ब्रह्मा योगबलेन शेषफणावेष्टितस्कन्धम् चराचराणां स्थानभूतं कौस्तुभमणिधारिणं सूर्येन्द्वादिभिरपिस्वीयप्रकाशैशकलपितुमशक्यं नारायणमपश्यत् । भगवद्दर्शनेन लोक सृष्टिज्ञानं लभ्य नाभिपद्मे स्वंजलंवायुमाकाशमपि ब्रह्मा दृष्टवान् अनेन हर्षातिरेकेव स हरौ मनो निवेश्य अस्तौत् ।

ततो[२] नारायणोऽपि ब्रह्मणोभावं ज्ञात्वा कालिका प्रलयकालिका महत्समुद्र

---

१. नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमापरो यत् ।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् ॥
—ऋग्वेद १०-१२९-१

तमः आसीत्तमसा गूल्हमग्रे प्रकेतं सलिलं सर्वमा इदम् ।
तच्छेयनाम्वपिहितं यदासीत्तपसस्तन्महिनाजायतैकम् ॥
—ऋग्वेद १०-१२९-३

जगत्प्रतिष्टादेवर्षे पृथिव्यप्सु प्रलीयते ।
ज्योतिस्वापः प्रलीयन्ते ज्योतिर्वायो प्रलीयते ॥
वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते ।
अव्यक्तं पुरुषे ब्रह्मन्निष्कले सम्प्रलीयते ॥
—महाभारत शा० पर्व० १२८-९४-९५

तमः प्रधानविक्षेपशक्तिमदज्ञानोपहित चैतन्यादाकाश आकाशाद्वायुर्वायुशनिरग्नेरापोभ्यः पृथिवी चोत्पद्यते तस्मादवा एतस्मादात्मन आकाशः सम्भूतः इत्यादिश्रुतेः । —(वेदान्तसार सृष्टिक्रमः)

२. अहमातमा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ —श्रीमद्भगवद् गीता १०-२०

दर्शनेन भीतं ब्रह्माणमवलोक्य च गम्भीरवाण्यां प्रोवाच—हे ब्रह्मन्! सृष्ट्यर्थमुद्यतोभवः त्वया यदर्थं प्रार्थ्यते तत् पूर्वमेव सम्पादितवानस्मि, पुनस्त्वं मद्ध्यानबलात् स्वादि स्वरूपेण सर्वान् लोकान् द्रक्ष्यसि मद्भक्त्या च जगति सर्वत्र व्याहं मां विलोकिष्यसे। नाना व्यापारैर्बहुशः प्रजानां सृष्टि कुर्वतस्तव श्रमलेशोऽपि न भविष्यति त्वयि प्रसन्नोऽस्मि तव कल्याणमस्तु ये जीवा मयि विलीना सन्ति तान् पूर्ववत् त्वं सृज। एतत् सृष्टि ज्ञानं प्रकाश्य भगवानन्तर्हितोबभूव।

ये नाद्यन्तशून्यो गुणानां महदादि परिणामो लक्ष्यते स काल इत्युच्यते ईश्वरेण तेन निमित्तभूतेन कालेनात्मानं जगद्रूपेण सृष्टवान्।[1] देवमायया[2] संहृतं जगत् ब्रह्मस्वरूपेलीनं सत् कालेन निमित्तेन पृथक् प्रकाशितम्। यादृशमिदानीं जगदस्ति तादृशं पूर्वमासीत्।

---

१. चैत्रेमासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि।
शुक्लपक्षे समग्रं तु तदा सूर्योदये सति॥ —निर्णय सिन्धु प्र० प०

२. अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय सम्भवामात्ममायया॥ —गीता ४-६
दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥ —गीता ७-१४
विष्णोर्माया भगवती यथा सम्मोहितं जगत्।
आविष्टा प्रभुणांशेन कायार्थे सम्भविष्यति॥ श्रीमद् भा० १०-१-२५
या सा भगवती नित्या सच्चिदानन्दरूपिणी।
परात्परतरादेवी ययाव्याप्तमिदं जगत्॥
यदाराधनतो ब्रह्मा सृजतीदं चराचरम्।
याचंस्तुत्वा विनिर्मुक्तो मधुकैटभजाद्भयात्॥
विष्णुर्यद् कृपया विश्वं विभर्ति भगवानिदम्।
रुद्रः संहरते यस्मात्कृपापांगनिरीक्षणात्॥
संसार बन्धहेतुर्या सैव मुक्ति प्रदायिनी।
सा विद्या परमा देवी सैव सर्वेश्वरेश्वरी॥
—देवी० भा० २/३६-३९ (माहात्म्य)
जगत्संजनने शक्तिस्तामसी परिकीर्तिता। —देवी० भा० १-४-४७
तस्मान्नाहं स्वतंत्रोऽस्मि शक्त्यधीनोऽस्मि सर्वदा।
तामेव शक्तिं सततं ध्यायामि च निरन्तरम्॥ —देवी० भा० १-४-६१
त्वं हि वै प्रकृतिस्सूक्ष्मा रजसत्वतमोमयी।
व्यापारदक्षा सततं सगुणानिर्गुणाऽपि च॥ —शि० पु० २-३-२९-२४
सा सृजत्यखिलं विश्वं सैव पालयतीति च।
सैव संहरते काले त्रिगुणा परमेश्वरी॥ —शि० पु० ५-४५-४९

महत्तत्वऽहंकारेन्द्रियदेवाविद्योति षट् प्राकृतास्सर्गाः। स्थावरपशुमानवास्त्रयः वैकृतास्सर्गाः। प्राकृतवैकृतात्मक। दशमस्सर्गः। एते दशसर्गाः ब्रह्मकृताः।

कृतं[1]-त्रेता-द्वापरं-कलिश्चेति चतुर्युगं देवानां द्वादशभिवर्षसहस्र भवति। कृतादि युगे क्रमेण चत्वारि त्रीणि द्वे एकं सहस्राणि द्विगुणानि शतानि च वर्षाणां प्रमाणं कथयन्ति। महर्लोकादिषु[2] निवासिनां चतुर्युगानां सहस्रमेकं दिनं तावन्मिता रात्रिश्च यत्र ब्रह्मा शेते। ब्रह्मणे दिवसे चतुर्दश मनवो जायन्ते ते मनवः किंचिदधिकानां चतुर्युगानामेकसप्तति स्वकालं भुजन्ते तेषु मन्वतरेषु मनवो मनुपुत्रा ऋषयो हरेरवाताराश्च जायन्ते। प्रति मन्वन्तरं हरेरवत्तीर्य जगत् रक्षति। ब्रह्मा सायंकाले सृष्टिव्यापाराणामुपसंहारं कृत्वा शेते। सूर्यचन्द्राभ्यां सार्धं प्रलयं यान्ति।

पूर्वपरार्द्धस्यादौ ब्राह्मोनाम कल्प पूर्वपरार्द्धस्यान्तै पाद्मः कल्प, अधुना तु वराह-कल्पः सः द्वितीयपरार्द्धस्यादावुक्तः यस्मिन् हरेर्वराहोऽभूत्।

सृष्ट्युपक्रमे[3] ब्रह्मा ईश्वरशक्तिना सह दशपुत्रानुत्पादयामास। एवं च ब्रह्मणो मुखात् चत्वारो वेदाः चातुर्होत्रंकर्मः यज्ञविस्तारः आयुर्वेदाद्युपवेदाः न्यायः धर्मस्य चत्वारः पाद आश्रमास्तद्धर्माश्च जातेति।

यदा दशपुत्रादीनां सृजतोऽपि प्रजावृद्धिर्नभवति तदा चिन्तयतो विधेर्देहोद्विधाऽभूत् ताभ्यां स्त्रीपुमांश्चाभूताम् तत्र स्वायम्भुवोमनुः पुमान् शतरूपा च स्त्रीवभूव। ततो मैथुने प्रजावर्द्धन्तस्य स्वायम्भुवः शतरूपायां प्रियव्रतोत्तानपादौ द्वौ सुतौ आकूति देवहूति

---

१. चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम्।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथा विधः॥
इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु।
एका पायेन वर्तन्ते सहस्राणि शतानि च॥ —मनुस्मृतिः १/६९-७०

२. सहस्रयुगपर्यन्तं महर्यद् ब्रह्मणो विदुः।
रात्रिं युग सहस्रान्ता ते ऽहोरात्र विदो जनाः॥ —गीता ८-१७

३. उत्संगान्नारदो जज्ञे दक्षोऽगुंष्ठात्स्वयम्भुव।
प्राणाद्वशिष्ठ संजातो भृगुस्त्वचि करात्क्रतुः॥
पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोर्ऋषिः।
अंगिरा मुखतोक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत्॥
धर्मस्तनादक्षिणतो यत्र नारायणः स्वयम्।
अधर्मः पृष्टतो यस्मान्मृत्यलोक भयंकरम्॥
हृष्टिकामो भुवः क्रोधो लोभश्चाधरदच्छदात्।
अस्माद्वाक्सिन्धवो मेढ्रान्निर्ऋति पायोरधाश्रयः॥
छायायाः कर्दमो जज्ञे देवहूत्याः पतिः प्रभुः।
मनसो देहतश्चेदं जज्ञे विश्वकृतो जगत्॥ —श्रीमद् भा० ३-१२-२३-२७

प्रसूति नाम्नी तिस्रः कन्या-उत्पादयामास। ततः आकूति[१] रुचये देवहूति कर्दमाय प्रसूतिं च दक्षायप्रदात् तासां वशांवृद्ध्या सर्वं जगत् पूरितम्।

विधेः सूनुर्दक्षः प्रसूत्यां भार्यायां षोडश कन्या अजनयत्। तासु कन्यासु त्रयोदश कन्या धर्माय एकामग्नये एकांपितृभ्यः एकां सतीं च शिवायददौ। शिवपत्नी सती तु शिवदक्षयोर्विद्वेषकारणात्[२] दक्षकोपाच्च बाल्यावस्थायामेव-योगाग्नौ देहं तत्याज। अतः सा किंचिदपि पुत्रं न प्रासूत।

एकदा[३] हरिद्वारे (कनखले) प्रजापतिर्दक्ष वाजपेयेनेष्ट्वा सेश्वरान्ब्रह्मिष्टांस्तिर-

---

१. आकूति रुचये प्रादात् कर्दमायतु मध्यमाम्।
दक्षायादा प्रसूतिंच यत आपूरितं जगत्॥ —श्रीमद् भा० ३-१२-५४
दक्षात्प्रसूत्यां कन्याश्च बहुशो जज्ञिरे प्रजाः। —देवी० भा० ८-३-१४

२. शृणुराजन्? पुरावृत्तं सतीदाहस्य कारणम्।
कदाचिदथ दुर्वासा गतो जाम्बूनदेश्वरीम्॥
ददर्श देवीं तत्राऽसौ मायाबीजं जजाप सः।
ततः प्रसन्ना देवेशी निजकण्ठगतास्रजम्॥
भ्रमद्भ्रमरसंशक्तां मकरन्दमदाकुलाम्।
ददौ प्रसादभूतां तां जग्राह शिरसा मुनिः॥ —देवी भा० ७-३०/२६-२८
प्रार्थयामास तां मालां तं मुनिं स सतीपिता।
अदेयं शक्तिभक्ताय नास्ति त्रैलोक्य मण्डले॥
इति बुध्या तु तां मालां मनवे स समर्पयेत्।
गृहीता शिरसा माला मनुना निजमन्दिरं॥
स्थापिता शयनं यत्र दम्पत्योरतिसुन्दरम्।
पशुकर्मरतो रात्रो मालागन्धेन मोदितः॥
अभवत्स महीपालस्तेन पापेन शंकरे।
शिवेद्वेषमतिर्जातो देव्यां सत्यां तथा नृप॥ —देवी भा० ७-३०/३३-३६
अयं तु देवयजन इन्द्रोपेन्द्रादिभिर्भवः।
सहभागं न लभतां देवैर्देवगणाधमः॥
—श्रीमद् भा० ४-२-१८ (दक्षवाक्य)

य एतन्मर्त्यमुद्दिश्य भगवत्यप्रति द्रुहि।
द्रुह्यत्यज्ञः पृथग् दृष्टि तत्वतो विमुखो भवेत्॥
—श्रीमद् भा० ४-२-२१ (नन्दीवाक्य)

३. यदा दक्षो महातेजा गंगाद्वार समीपतः।
चकार विपुलं यज्ञं यत्र दग्धा सतीपुरा॥ —केदा० ११६-१४
गंगाद्वारे कुशावर्ते बिल्वके नीलपर्वते।
स्नात्वा कनखले तीर्थे पुनर्जन्म न विद्यते॥

स्कृत्य वृहस्पतिसव नामकं यज्ञमारभत् । तस्मिन् यज्ञे सर्वे देवर्षयः पितरः सपत्नीकाः समाययुः । औत्सुक्यात्स्वयमपि गन्तुमुत्सका सती शिवमाह-भो स्वामिन् ? ऋषिभिः पितुर्यज्ञं समुन्नतं यज्ञयूपं च द्रष्टुमिच्छामि । शिव एवं सतीवचनमाकर्ण्य उवाच-विद्यातपोवित्तादिभिर्ये गर्विष्ठा भवन्ति ते महतां प्रतापं नैवावलोकयन्ति यः दक्षः दोषपथमगीकृत्य तस्य यज्ञं गमनाय उपक्रमं मा कुरु । भवानि ? यदि त्वं पतिवाक्यमतिक्रम्य यास्यसि र्तहि तव हितं न भविष्यति । परंच पतिवचनानुलंध्य स्वजनदिदृच्छया विनिः श्वस्य सती एकाकिनी पितृगृहं प्रतस्थे । किंचित्कालान्तरमेव वेदघोष निनादितं सा यज्ञस्थानमाविशत् । तत्रोपस्थितां सतीं वीक्ष्य भगिन्योजननी च परित्यज्य अन्य कोऽपि दक्षभयानाहतवान् इत्यवलोक्य रुद्रभागहीनं तमध्वरमवेक्ष्य च सा लोकान् भस्मीकरिष्यन्तीव भृशं चुकोप । सती सर्वेषां जनानां समक्षं प्राह—अहो ? यस्य कोऽपि प्रियो ऽप्रियश्च नास्ति तस्मिन् वैरभावहीने शिवे त्वां विना कारणं विरोधमाकिचरेत्, हे पित ? भवादृशाः पुरुषः परेषां गुणेषु दोषमेवान्वेषयन्ति, महात्मनस्तु स्वल्पानपि गुणान् बहु मन्यन्ते । एतादृशेषु पुरुषेषुत्वमपराधं कल्पितवानसि ?

दुष्टस्तु सर्वदा महतां निन्दां कुर्वन्ति त्वय्येतदाश्चर्यं न मन्तव्यम् । यस्यां सभायां महतां निन्दां भवेत् ततो कर्णे पिधाय बर्हिनिर्गच्छेत् सामर्थ्यंचेत्तदा निन्दकस्य जिह्वां छित्वा स्वस्यापिप्राणांस्त्यजेदेषः धर्मः कथितः । दुष्टस्य तव सम्बन्धान्मे लज्जा भवति ।

दक्षं[1] प्रत्येवमुक्त्वा सती उद्ङ्मुखासनोपविश्य शंकरस्य पादाम्बुजं ध्यायन्ती सद्य समाधिजनिताग्निनादेहमधाक्षीत् । एतद्दृश्यं पश्यतां जनानां रवे भुवि च महान् हाहाकारो जातः ।

---

सर्वे देवाः सगन्धर्वा यक्ष किन्नर तापसः ।
तिष्ठन्ति यत्र तीर्थे हि सर्वे ते मुक्ति लालसाः ।।
—केदा० १०२/१६-१७

वर्तमाने महायज्ञे तीर्थे कनखले तथा ।
ऋत्विजश्च ऋतास्तेन भृग्वाद्याश्च तपोधनाः ।।
—शि० पु० २-२-२७-१२

१. एवं स्वदेहं महता महीयसा मुहुः समारोपितमंकमादरात् ।
जिहासती दक्षरुषा तपस्विनी दधार गात्रे स्वनिलाग्नि धारणम् ।।
ततः स्वभर्तुश्चरणाम्बुजासवं जगद्गुरोश्चिन्तयती न चापरम् ।
ददर्शदेहं हत कल्मषा सती सद्यः प्रजज्वाल समाधिजाग्निना ।।
—श्रीमद् भा० ४४-२६-२७

विलोक्य रुद्रभागं नो प्राप्यावज्ञां च तातत: ।
विनिक्ष्य तत्र तान्सर्वान्देहत्यागमथाकरोत् ।। —शि० पु० २-३-१-२४

शंकर:[१] दक्षयज्ञे सत्या: मृतशरीरमवलोक्य उत्थाय च तत् कातरस्वरेण विललाप। हा सती, हा सती, इति क्रन्दनं कुर्वन् शंकर: सती मृतदेहं स्कन्धे निधाय अनेकासु दिक्षु विरहातुर परिवभ्राम। स्कन्धे स्वप्रिया मृतशरीरं धारयत: शंकरस्य तद्विहृत्य-तमवलोक्य सर्वे ब्रह्मादिदेवता, चिन्तान्विताऽभूवन् तैश्च विष्णुस्तदुपद्रव निवारणाय प्रार्थित:। शंकरस्य मोहपथं विचार्य विष्णुना सत्या: तच्छव: स्वचक्रेण खण्डश: कृत: ते च खण्डा: यत्र पतितास्त एव देशा: अष्टाधिकशतानि पीठान्यभवन्। अंगभेदेन तत्तत्स्थानानां पीठत्व प्राप्ति:। क्रमश: पीठेषु शिवस्य लिंगत्व[२] प्राप्ति इति देवी-भागवत महापुराणाभिमतम्। अपरं कालिकोपपुराणभिमते---सत्यांगभेदेन एकपंचाशत् सिद्धपीठानामुल्लेखोऽस्ति। परंच तंत्रचूड़ामणौ त्रिपंचाशतपीठान्युल्लिखितानि। अन्यान्यपि सिद्धपीठानि कुंजिकातंत्रे सप्तम पटलोक्तानि सन्त्युद्वतानि।

अपरेण[३] विधिना अपि बहूनि सिद्धपीठानि लभ्यन्ते। सिद्धपीठानां प्रचुर-

---

१. अपश्यतां सती बह्नौ दह्यमानां तु चित्कलाम्।
स्कन्धेऽप्यारोपयामास हा सती तु वदन्मुहु:॥
वभ्राम भ्रान्तचित्तसन्नानादेशेषु शंकर:।
तदा ब्रह्मादयोदेवाश्चिन्तामापुरनुत्तमाम्॥
विष्णुस्तु त्वरया तत्र धनुरुद्यभ्य मार्गगा:।
विच्छेदावयवान्सत्या तत्रस्थानेषु तेऽपतन्॥
तत्र स्थानेषु तत्राऽऽसीन्नानामूर्तिधरोहर:।
उवाच च ततो देवान् स्थानेष्वेतेषु ये शिवाम्॥
भजन्ति परमा भक्त्या तेषां किंचिन्न दुर्लभम्।
नित्या सन्निहिता यत्र निजांगेषु पराम्बिका॥
स्थानेष्वे तेषु ये मर्त्या: पुरश्चरण कर्मिण:।
तेषां मंत्रा प्रसिध्यन्ति मायाबीजं विशेषत:॥
इत्युक्त्वा शंकरस्तेषु स्थानेषु विरहातुर:।
काल निन्ये नृपश्रेष्ट: जपध्यानसमाधिभि:॥ —देवी भा० ७-३०-४४-५०

२. पौरुषप्रकृतिभूतानि लिंगानि सुबहूनिच।
तल्लिग पूजयान्नित्यं पौरुषैश्वर्ममाप्नुयात्॥ —शि० पु० १-१८-४१
पततयत्वैव ते लिंगं निर्लज्जेति भृशं किल॥
—देवी भा० ४-२०-३७ (शुक्राचार्यस्यशाप)

३. श्रीदेव्या प्रभवश्चापि भविष्यति हिमालये।
तदा मया विवाहश्च भविष्यति न संशयम्॥
इत्युक्त्वा भगवान्देवो गृहीत्वाततसतीवपु:।
स्कन्धे कृत्वा ययौ विप्र कैलाशे गुह्यकालये॥ —केदार० १०५-८३-८४
हरगात्रस्य संस्पर्शाच्छिवोनायविशीर्णताम्॥ —का० प्र० १८-३८

संख्यान्येष्वपि पुराणेष्वागमग्रन्थेषु च प्राप्यन्ते सतेरवतारस्य पार्वतीदेव्याः देहादपि अनेकेषां सिद्धपीठानामुत्पत्तिर्बभूव । अत एव स्पष्टमेवेदं जायते भुवनेश्वरी प्रकृतीनां प्राणीनां च दुःख निवारणार्थमनेकानि रूपाणि धारितानि ।

शिवस्यांग संसर्गात् सत्याः मृतशरीरं सौगन्धिकं दुर्गन्धहीनं चाभूत् ।[1] पुनर्जन्मनि अपि सा सती हिमालयस्य गृहे जन्मलब्धवती सैव[2] पार्वती नाम्नी शिवपत्नी नवदुर्गेति विख्यात यस्योपासनया संसारस्य कल्याणं जायते ।

---

१. एवं शिवा सतीभूत्वा शंकरेण विवाहिता ।
पितुर्यज्ञे तनुं तक्त्वा नादत्तां स्वपदं ययौ ॥
पुनश्च पार्वती जाता देवप्रार्थनया शिवा ।
तपः कृत्वा सुविपुलं पुनश्शिवमुपागता ॥
तस्यानामान्यनेकानि जातानि च मुनीश्वरः ॥
—शि० पु० २-१६/४१-४३

२. पार्वत्यास्तु शरीराद्वै निःसृता चाम्बिक यदा ।
कौशिकीति समस्तेषु ततो लोकेषु गीयते ॥
निःसृतायां तु तस्या सा पार्वती तनुवत्ययात् ।
कृष्णरूपाऽथ संजाता कालिका सा प्रकीर्तिता ॥ —देवी भा ५-२३/२-३
ग्रहर्क्षतारकागर्भा द्योरस्याखिलहैतुकी ।
एता विभूतयोदेवी तथान्याच्च सहस्रशः ॥ —विष्णु पु० ५-२-१२
ततो देवी शरीरात्तु निर्गतास्तीव्र शक्तयः ॥ —देवी भा० ७-२८-५४
बह्व्योऽसंख्यकलाश्चैव प्रकृतेरेव भारते ॥ —देवी भा० ९-१--३६
प्रादुर्भवति भूतानां दुःख नाशाय चाम्बिका ।
नानारूपधरादेवी नानाशक्ति समान्विता ॥ —देवी भा० ५-२३-५८
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।
—श्वेत उ० ६-८

नित्यैव सा जगन्मूर्तीस्तया सर्वमिदं ततम् ।
तथापि तत्समुत्पत्तिर्बहुधा श्रूयतां मम ॥ श्री दुर्गा सप्त० १-६४
एवं देव्या विभूतिश्च पूजयेत्साधकोऽनिशम् ॥ देवी भा० ९-३८-७४

तदारभ्य प्रकृत्यातिमलकया शिवया सहैव लिंगात्मकः शंकरः निवसति भक्तजनैः सेवितः सम्पूजितश्च भवति। संख्यातीतानि विद्यते एतानि लिंगानि।[1] पीठोत्पत्ति कालादेव लिंगात्मशक्तिः जगति प्रख्याताऽभूत्।[2]

---

१. सर्वेषां शिवलिंगानां भुवैः संख्या न विद्यते।
सर्वलिंगमयी भूमि सर्वलिंगमयं जगत्॥
लिंगमयानि तीर्थानि सर्वलिंगप्रतिष्ठितम्।
संख्या न विद्यते तेषां तानिकश्चिद्‌ब्रवीम्यहम्॥ —शिव० पु० ४१-१९-१०
तदा प्रकृति लोकेऽस्मिंलिंगपूजाविधिः स्मृतः।
लिंगे प्रतिष्ठितश्शम्भुर्भुक्तिमुक्ति प्रदायकः॥ —शि० पु० २-१०-३७
कृतेरत्नमयंलिंगं त्रेतायां हेमसम्भवम्।
द्वापरे पारदं श्रेष्ठं पार्थिवं तु कलौयुगे॥ —शि० पु० १-१९-७
२. शिवस्शैव परामूर्ति ब्रह्मविष्णीश्वरात्मिका।
सर्वभूतात्मभूताख्या त्रिलिंगा लिंगरूपिणी॥ —शि० पु० ५-४-९

शक्तिरियं शंकरेण सह साधर्म्यवैधर्म्याभ्यां तिष्ठति।

### साधर्म्यम्

यथाशिवस्तथादेवी यथा देवी तथा शिवः।
नानयोरन्तरं विद्याच्चन्द्र चन्द्रिकयोरिव॥
चन्द्रो न खलु भात्येषं यथा चन्द्रिकया विना।
न भाति विद्यमानोऽपि तथा शक्त्या विना शिवः॥
प्रभवा हि विना यद्‌वत् भानुरेष न विद्यते।
प्रभा च भानुना तेन सुतरां तदमाश्रया॥
एवं परस्परापेक्षा शक्तिशक्तिमतोः स्थिता।
न शिवेन विना शक्तिर्न शक्त्या च विना शिवः॥
शक्तौ यया शिवो नित्यं मुक्तौ मुक्तौ च देहिनाम्।
आद्या सैवा परा शक्तिश्चिन्मयी शिवसंश्रया॥
यामाहुरखिलेशस्य तैस्तैरनुगुणैर्गुणैः॥
समान धर्मिणीमेव शिवस्य परमात्मनः।
सैका परा च चिद्रूपा शक्तिः प्रसवधर्मिणी।
विभज्य बहुधा विश्वं विदधाति शिवेच्छया॥
सा मूलप्रकृतिर्माया त्रिगुणा च त्रिधा स्मृता।
शिवया च विपर्यस्तं यया ततमिदं जगत्॥

एकधा च द्विधा चैव तथा शतसहस्रधा ।
शक्तयः खलु भिद्यन्ते बहुधा व्यवहारतः ॥ —शि० पु० ७-४-९-१७
एवं शक्तिः समायोगाच्छक्तिमानुच्यते शिवः ।
शक्तिशक्तिमदुत्थं तु शाक्तं शैवमिदं जगत् ॥
यथा न जायते पुत्रः पितरं मातरं विना ।
तथा भवं भवानीं च विना नैतच्चराचरम् ॥ —शि० पु० ४-७-३६-३७
माया तु प्रकृतिम्विद्यां मायिनं तु महेश्वरम् ।
माया विमोचकोऽनन्तो महेश्वर समन्वयात् ॥—शि० पु० ५-९-१३
अव्यक्तं लिंगमाख्यातं त्रिगुणंप्रभवाम्यहम् ।
अनाद्यनन्तं विश्वस्य यदुपादानकारणम् ॥
तदेव मूलप्रकृतिर्माया च गगनात्मिका ।
तत एव समुत्पन्नं जगदेतच्चराचरम् ॥ —शि० पु० ७-३३-८

### शक्तिशिवयोर्वैधर्म्यम्

| शिवः | शक्तिः |
|---|---|
| पुरुषः | स्त्री |
| विषमी | विषमः |
| प्रष्टा | प्रष्टव्यः |
| श्रोता | श्राव्यः |
| द्रष्टा | द्रष्टः |
| रसग्राही | रससमूहः |
| प्रीतिस्वरूपः | प्रीतिसमूहः |
| मन्ता | मान्यः |
| धारकः | धारणः |
| प्राणरूपः | पयरूपिणी |
| क्षेत्रज्ञता | क्षेत्रता |
| दिवा | निशा |
| नभः | धरा |
| अर्णवः | वेला |
| वृक्षः | लता |
| पदार्थः | पदार्थशक्तिः |
| क्षेत्रज्ञः | प्रधान (प्रकृतिः) |
| शब्दः | अर्थः |

तत्कथं शक्यते वक्तुं माहात्म्यं परमेशयोः ।
महतामपि सर्वेषां मनसोऽपि बहिर्गतम् ॥ —शि० पु० ७-४-७३

एषा शक्तिः पंचजगत्कृत्यं[1] पंचायतनं[2] चाधिकृत्य पंचब्रह्ममंचात्परात्परतरा[3] वर्तते ।

---

यः परामपरां चैव विभूतिं वेत्ति तत्त्वतः ।
सोऽपरोभूतिमुल्लंघ्य परांभूतिं समश्नुते ॥ —शि० पु० ७-४-८०
भक्तिः पराः शिवे साम्बे सानुगे सपरिच्छदे ।
यददिष्ठतमं चान्यत्तत्तदाप्नोत्यसंशयम् ॥ —शि० पु० ७-४-८७

१. सृष्टिस्थितिश्च संहारस्तिरोभावोऽप्यनुग्रहः ।
पंचैव मे जगत्कृत्यं नित्यसिद्धमजाच्युतौ ॥ —शि० पु० १-१०-२

| शब्द | अर्थ | अधिकारी |
|---|---|---|
| सृष्टिः | जगदुत्पत्तिः | ब्रह्माः |
| स्थितिः | संसारस्यवृद्धिः | विष्णुः |
| संहारः | सृष्टिलयः | रुद्रः |
| तिरोभावः | संसारस्योद्धारः | उमा-शक्तिः |
| अनुग्रहः | मोक्षः | शिवः |

२. "पंचायतनम्"—

पूर्वः

उत्तरः (बायें) — दक्षिणः (दायें)

| विष्णुः | शिवः | सूर्यः | देवी | गणेशः |
|---|---|---|---|---|
| शिवः गणेशः<br>विष्णुः<br>देवी रविः | विष्णुः सूर्यः<br>शंकरः<br>देवी गणेशः | शिवः गणेशः<br>सूर्यः<br>देवी विष्णुः | विष्णुः शिवः<br>देवी<br>रविः गणेशः | विष्णुः शंकरः<br>गणेशः<br>देवी सूर्यः |

पश्चिमः

३. "पंचब्रह्ममंचम्"—

(पूर्वः)
ब्रह्माः विष्णुः
(उत्तरः) सदाशिवः (दक्षिणः)
ईश्वरः रुद्रः
(पश्चिमः)

पंचभ्यस्त्वधिकं वस्तु वेदेऽव्यक्तमितीर्यते ।
यस्मिन्नोतं च प्रोतं च सैव श्रीभुवनेश्वरी ॥ —श्रीमद्देवी भा० ७-२९-८

निम्नांकिते दार्शनिक चिन्तने शक्तिरेखा एव सर्वोत्कृष्टतां समवाप्नोति ।

| | | | | |
|---|---|---|---|---|
| ओम्— | अ | उ | मँ | |
| | ब्रह्मा | विष्णु | शिव | शक्ति |
| | स्थूल | सूक्ष्म | कारण | तुरीय |

शक्ति—"श" ऐश्वर्यवाचक "क्ति" पराक्रमवाचक इत्यनयोर्द्वयोर्दृष्टा ।

भगवती—"भग" ऐश्वर्य "वती" धारयति । ऐश्वर्यं धारयतीति ।

प्रकृति—"प्र" प्रकष्ट "कृति" सृष्टिकर्तृ वाद :

| | | |
|---|---|---|
| प्र | कृ | ति |
| उत्तम | मध्यम | अधम |
| सत्व | रज | तम |

| | | | |
|---|---|---|---|
| **युगप्रसिद्धि**—धर्म | धर्म–अर्थ | धर्म–अर्थ–काम | अर्थ–काम |
| सत्वयुग | त्रेतायुग | द्वापरयुग | कलियुग |

सर्वदोषनिरासार्थं ध्यायेद्देवी पदाम्बुजम् ॥ —देवी भा० ६-११-५६

मुक्तेश्चत्वारि प्रकाराणि-सालोक्य, सारूप्य, सामीप्य, सायुज्य शक्तेर्भक्ति-सालोक्यता, सारूप्यता, सामीप्यता, सायुज्यता, निर्वाणपददायिनी ।
मुक्तिश्च सेवारहिता भक्तिःसेवा बिवर्धिनी ॥ —देवी भा० ६५-३८-७४

ये भक्तिहीनाः समवाप्यदेहं तं मानुषं भारतभूमिभागे ।
यैर्न्नार्चिता ते धनधान्यहीना रोगान्विता सन्ततिवर्जिताश्च ॥
—देवी भा० ५-२०-८

**षट्पदार्थाः**—

मंत्रो यंत्रं देवता च प्रपञ्चो गुरुदेव च ।
शिष्यश्च षट्पदार्थानामेषामर्थं शृणु प्रिये ॥
पंचवर्णसमाप्तिः स्यान्मत्रपूर्वमुदाहृतम् ।
स एव यंत्रतां प्राप्तो वक्ष्येतन्मण्डल क्रमात् ॥
यंत्रं तु देवतारूपं देवता विश्वरूपिणी ।
विश्वरूपो गुरुः प्रोक्तश्शिष्यो गुरुवपुस्मृतः ॥ —शि० पु० ६-३-३०-३

**शक्तेर्युगभेदाः**—

गीतिस्त्वं सामदेवस्य ग्रन्थिस्त्वं यजुषां हुतिः ।
ऋग्वेदस्य तथा मात्राथर्वणस्य परागतिः ॥ —शि० पु० ३-३-३५

शक्तेश्चरित्रवर्णन-श्रवण-पूजन-यज्ञ-दर्शनादीनि विषयकाणि कतिपयानि साहित्यानीह दीयन्ते ।

**देव्युवाच**

एभिः स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः ।
तस्याहं सकलां बाधां नाशयिष्याम्यसंशयम् ॥

मधुकैटभनाशं च महिषासुरघातनम् ।
कीर्तयिष्यन्ति ये तद्वद् वधं शुम्भनिशुम्भयोः ।।
अष्टम्यांच चतुर्दश्यां नवम्यां चैकचेतसः ।
श्रोप्यन्ति चैव ये भक्त्या मम माहात्म्यमुत्तमम् ।।
न तेषां दुष्कृतं किंचिद् दुष्कृतोत्थान चापदः ।
भविष्यति न दारिद्र्यं न चैवेष्टवियोजनम् ।।
शत्रुतो न भयं तस्य दस्युतो वा न राजतः ।
न शस्त्रानलतो यौघात्कदाचित्सम्भविष्यति ।।
तस्मान्ममैतन्महात्म्यं पठितव्यं समाहितैः ।
श्रोतव्यं च सदा भक्त्या परं स्वस्त्ययनं हितत् ।।
उपसर्गानशेषांस्तु महामारी समुद्भवाम् ।
तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम ।।
यत्रैतपठ्यते सम्यग्नित्यमायतने मम ।
सदा न तद्विमोक्ष्यामि सानिध्यं तत्र मे स्थितम् ।।
बलिप्रदाने पूजायामग्निकार्ये महोत्सवे ।
सर्वं ममैतच्चरितमुच्चार्यं श्राव्यमेव च ।।
जानताऽजानता वापि बलिपूजां तथा कृताम् ।
प्रतीच्छिष्याम्यहं प्रीत्या बह्निहोमं तथा कृताम् ।।
शरत्काले महापूजा क्रियते या च वार्षिकी ।
तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्ति समन्वितः ।।
सर्वाबाधाविनिर्मुक्तो धनधान्यसुतान्वितः ।
मनुष्यो मत्प्रसादेन भविष्यति न संशयः ।।
श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः ।
पराक्रमं च युद्धेषु जायते निर्भयः पुमान् ।।
रिपवः संक्षयं यान्ति कल्याणं चोपपद्यते ।
नन्दते च कुलं पुंसां माहात्म्यं मम शृण्वताम् ।।
शान्तिकर्मणि सर्वत्र तथा दुःस्वप्नदर्शने ।
ग्रहपीड़ासु चोग्रासु माहात्म्यं शृणुयान्मम ।।
उपसर्गाः शमं यान्ति ग्रहपीड़ाश्च दारुणाः ।
दुःस्वप्नं च नृभिर्दृष्टं सुस्वप्नमुपजायते ।।
बालग्रहाभिभूतानां बालानां शान्तिकारकम् ;
संघातभेदे च नृणां मैत्रीकरणमुत्तमम् ।।
दुर्वृत्तानाम शेषाणां बलहानि करं परम् ।
रक्षोभूतपिशाचानां पठनादेव नाशनम् ।।

सर्वं ममैतन्माहात्म्यं मम सन्निधिकारकम् ।
पशुपुष्पार्घ्यधूपैश्च गन्धदीपैस्तथोत्तमैः ॥
विप्राणां भोजनैर्होमैः प्रोक्षणीयै रहर्निशम् ।
अन्यैश्च विविधैर्भोगैः प्रदानैर्वत्सरेण या ॥
प्रीतिर्मे क्रियते सास्मिन् सकृत्सुचरिते श्रुते ।
श्रुतं हरति पापानि तथाऽरोग्यं प्रपच्छति ॥
रक्षां करोति भूतेभ्यो जन्मनां कीर्तनं मम ।
युद्धेषु चरितं यन्मे दुष्टदैत्यनिबर्हणम् ॥
तस्मिंच्छ्ते वैरिकृतं भयं पुंसां न जायते ।
युष्माभिः स्तुतयो याश्च याश्च ब्रह्मर्षिभिः कृतः ॥
ब्रह्मणा च कृतास्तास्तु प्रयच्छन्ति शुभां मतिम् ।
अरण्ये प्रान्तरे वापि दावाग्निपरिवारितः ॥
दस्युभिर्वा वृतः शून्ये गृहीतो वापि शत्रुभिः ।
सिंहव्याघ्रानुयातो वा वने वा वनहस्तिभिः ॥
राज्ञा क्रुधेन चाज्ञाप्तो बध्यो बन्धगतोऽपिवा ।
आघूर्णितो वा वातेन स्थितः पोते महार्णवे ॥
पतत्सु चापि शस्त्रेषु संग्रामे भृशदारुणे ।
सर्वाबाधासु घोरासु वेदनाभ्यर्दितोऽपि वा ॥
स्मरममैच्चरितं नरो मुच्येत संकटात् ।
मम प्रभावात्सिंहाद्या दस्यवो वैरिणस्तथा ।
दूरादेव पलायन्ते स्मरतश्चरितं मम ॥ —मा० पु० दु० स० १२-६-३०
ये शृष्वन्ति सदाभक्त्या देव्या भागवती कथाम् ।
तेषां सिद्धिर्न दूरस्था तस्मात् सेव्या सदानृभिः ॥

—देवी भा० माहात्म्य ६-२४

तथा न गंगा न गया न काशी न नैमिषं नो मथुरा न पुष्करम् ।
पुनाति सद्यो वदरीवनं नो यथा हि देवीगण एष विप्राः ॥

—देवी माहात्म्य ६-३६

अतो भागवतं देव्याः पुराणपरतः परम् ।
धर्मार्थकाममोक्षाणामुत्तमं साधनं मतम् ॥ —देवी भा० माहात्म्य ६-३७
श्रवणाद्वसुदेवोऽस्य प्रसेनान्वेषणं गतम् ।
चिरायतं प्रियं पुत्रं कृष्णंलब्धा मुमोदह ॥ —देवी भा० माहात्म्य ६-४४
पुत्रप्राप्तै यदुश्रेष्ठ देवीमाराध्यमम्बिकाम् ।
तस्या आराधनेनैव सद्यः श्रेयो ह्यवाप्स्यसि ॥ —देवी भा० माहात्म्य २-३३
वसुदेव महाभागः शृणु संक्षेपतो मम ।
देव्या माहात्म्यमतुलं को वक्तुं विस्तरात् क्षमः ॥

या सा भगवती नित्या सच्चिदानन्दरूपिणी ।
परात्परतरादेवी यया व्याप्तमिदं जगत् ॥
यदाराधनतो ब्रह्मा सृजतीदं चराचरम् ।
यां च स्तुत्वा विनिर्मुक्तो मधुकैटभजाद्भयाद् ॥
विष्णुर्यद् कृपया विश्वं बिभर्ति भगवानिदम् ।
रुद्रः संहरतेः यस्याः कृपापांगनिरीक्षणात् ॥
संसारबन्धहेतुर्या सैव शक्तिप्रदायिनी ।
सा विद्यापरमादेवी सैव सर्वेश्वरेश्वरी ॥ —देवी भा० माहात्म्य २-३६-३९
सुरासुरनराराध्या या परा जगदम्बिका ।
तस्यां चेद्भक्तिरुत्पन्ना कार्यसिद्धिर्भविष्यति ॥ —देवी भा० माहात्म्य ४-७८
ब्रह्मेशाऽच्युतशक्राद्यैर्महर्षिभि रूपासिता ।
जगतां श्रयसे साऽस्तु मणिद्वीपाधिदेवता ॥ —देवी भा० माहात्म्य ५-९०२
त्वां संस्तुमोऽम्ब भुवनत्रयसम्बिधानदक्षादयारसयुतां जननी जनानाम् ।
विद्यां शिवां सकललोकहितां वरेण्यां वाग्बीजवासनिपुणां भवनाशकत्रीम् ॥
—देवी भा० माहात्म्य ९-५-५६
धर्मार्थकाममोक्षाणां स्वामिनी सा निराकुला ।
ददाति वांछितान् कामान् पूजिता विधिपूर्वकम् ॥
—देवी भा० माहात्म्य ९-८-४६
न श्रोतव्यं न मन्तव्यमन्येषां वचनं बुधैः ।
शक्तिरेव सदासेव्या विद्वद्भिः कृतनिश्चयैः ॥
प्रक्तसमपि दृष्टव्यमशक्तस्य विचेष्ठितम् ।
अतः सर्वेषु भूतेषु ज्ञातव्या शक्तिरेव हि ॥ —देवी भा० माहात्म्य ९-८-५०-५१
आराध्या परमाशक्ति सर्वैरपि सुरासुरैः ।
नातः परतरं किंचिदधिकं भुवनत्रये ॥
सत्यं सत्यं पुनः सत्यं वेदशास्त्रार्थनिर्णयः ।
पूजनीया पराशक्ति निर्गुणा सगुणाऽथवा ॥ —देवी भा० ९-९-८५-८६
जपनेकाक्षरं मंत्रं बाग्बीजं नारदाच्छुतम् ।
ध्यायन्परां महामायां पुत्रकामस्तपोनिधिः ॥ —देवी भा० माहात्म्य ९-९०-५
अतिष्टत्जगदाधारः शतसम्बत्सरप्रभुः ।
आराधयन्महादेवं तथैव च सदाशिवाम् ॥ —देवी भा० माहात्म्य ९-९०-७
सुदुःखितास्ते दृश्यन्ते भुविभारत ? भारते ।
नाराधिता महामाया यैर्जनैश्च सदाम्बिका ॥
—देवी भा० माहात्म्य २-९२-७९
मा० पु० देवीमाहात्म्य वर्णन अध्याय ५
वा० पु० अ० १७-२१

स्रष्टा त्वं पालकश्चाहं हरः संहारकारकः।
कृताः शक्त्येति संतर्कः क्रियते वेदपारगैः॥
जगत्संजनने शक्तिस्त्वयी तिष्ठति राजसी।
सात्विकीमयि रुद्रे च तामसी परिकीर्तिता॥
—देवी भा० माहात्म्य ६-४-४६-४७

तस्मान्नाहं स्वतंत्रोऽस्मि शक्त्यधीनोऽस्मि सर्वथा।
तावेव शक्ति सततं ध्यायामि च निरन्तरम्॥ —देवी भा० माहात्म्य ६-४-६६
चिन्तयन्तु महामायां विद्यां देवीं सनातनीम्।
सा विधास्यति नः कार्यं निपुणा प्रकृतिः पत॥
ब्रह्मविद्या जगद्धात्रीं सर्वेषां जननी तथा।
यया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम्॥
—देवी भा० माहात्म्य ६-५-४८-४६

महामाया चरित्रं च पवित्रं पापनाशनम्।
पठतां शृण्वतांश्चैव सर्वसम्पत्ति कारकम्॥ —देवी भा० माहात्म्य ६-५-६६२
साऽद्या शक्तिः परिणता सर्वस्मिन्या प्रतिष्ठिता।
दाहशक्तिस्तथा बह्नौ समीरे प्रेरणात्मिका॥
—देवी भा० माहात्म्य ६-८-३०

नन्वद्य शरणं यामि विद्यां शक्ति सुकामदां।
विना तया न सिध्यन्ति कामाः सम्यग्प्रसन्नया॥
—देवी भा० माहात्म्य ६-६-३७

अशक्तो निन्दतो लोके शक्तयस्तु परिपूज्यते। —देवी भा० माहात्म्य ६-६०-८
ईश्वरा यदि कुर्वन्ति जुगुप्सितमहन्तया।
आज्ञास्तदतु वर्तन्ते तदा धर्मक्षयो भवेत्॥ —देवी भा० माहात्म्य ६-६६-५२
मयि त्वयि च या शक्ति क्रियाकारणलक्षणा।
विचारय महाभाग या सा भगवती शिवा॥
यस्याधारे जगत्सर्वं तिष्ठत्यत्र महार्णवे।
साकारा या महाशक्तिरमेया च सनातनी॥
—देवी भा० माहात्म्य ६-६६-२४-२५

संसार बन्धहेतुश्च सैव सर्वेश्वरेश्वरी। —देवी भा० माहात्म्य ६-६६-२७
दृष्टाऽसौ दृश्यमखिलं ब्रह्माण्डं देवतासुरौ।
तस्यैषा कारणं सर्वा माया सर्वेश्वरी शिवा॥ —देवी भा० माहात्म्य ३-३-६६
आत्मानुभूति निष्णान्ताः द्वैतभावविवर्जिताः।
तेऽपि प्रेम्णा भजन्त्येनामित्थं सर्वोत्तमा शिवा॥ —भुव० सं० ह०
मायां तु प्रकृति विद्यां मायिनं तु महेश्वरम्।
तयोर्विभूतिलेशो व जगदेतच्चराचरम्॥ —भुव० सं० ह०

देवी मायां तु श्रीकामस्तेजस्कामो विभावसुम ।
वसुकामो वसून् रुद्रान् वीर्यकामोऽथ वीर्यवान् ॥ —श्रीमद् भा० २-२-०३
यज्ञं यजेद् यशस्कामः कोशकामः प्रचेतसम् ।
विद्याकामस्तु गिरिशं दाम्पत्यार्थं उमा सतीम् ॥ श्रीमद् भा० २-२-१७
वैकारिकस्तैजसश्च तामतश्चेति यद्भिःदा ।
द्रव्यशक्तिः क्रियाशक्तिर्ज्ञानशक्तिरिति प्रभो ॥ श्रीमद् भा० २-५-२४
सा तद्वस्तात्समुत्पत्य सद्यो देव्यम्बरं गता ।
अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा ॥
दिव्यस्त्रगम्बरालेपरत्नकरणभूषिता ।
धनुः शूलेषुचर्मासि शंखचक्रगदाधरा ॥ —श्रीमद् भा० ६०१
इयं हि प्रकृतिः सूक्ष्मामायाशक्तिदुरत्यया । श्रीमद् भा० ६-९९-९९
स्वयमेवाभवतस्त्पाश ब्रह्मरूपेण लोकभृत् ।
स्थितिशक्तिनिजांमायां प्रकृत्याख्यान्ययोजयेत् ॥
महेशो वैष्णवेकाये ज्ञानशक्ति निजां तथा ।
स्थितिकर्ताऽभवत् विष्णुरहमेव महेश्वरः ॥
शर्व्वशक्ति नियोगेन सदातद्रूपता मम ।
अन्तश्शक्तिन्तथाकाये शाम्भवे सन्ययोजयेत् ॥
अन्तकर्ताभवच्छम्भुः स एव परमेश्वरः ।
ततस्त्रिषु शरीरेषु स्वयमेव प्रकाशते ॥ —कालि० पु० १२-३३-३६
नित्यानन्दाज्ञानमयी योगनिद्रां जगत्प्रसूम् ।
प्रणमामि शिवां शुद्धां विधिशैरिशिवात्मिकाम् ॥
मायामयीं महामायां भक्तशोकविनाशिनीम् ।
कामस्य वनितां भद्रां नमामित्वामिति शिवाम् ॥ —का० पु० ४२-२०-२९
प्रीणाति च महादेवी जगन्माता जगन्मयी ।
सोऽपि कायान्परित्यज्य मानुषान्नचिरान्मृतः ॥ —का० पु० ७२-८६
दुर्गा तंत्रेण मंत्रेण प्रणीते दहने शुचौ ।
एवन्दर्प्पा बलिन्मर्त्यो रिपुक्षयभवाप्नुयात् । —कालि पु० ७२-९५२
प्रसादं ते करिष्यामि मत्प्रभावसमं भुवि ।
येन सर्वस्य लोकस्य देवि देवी भविष्यति ॥ —ह० पु० बि० प० २-३०
या तु सा नन्दगोपस्य दयिता भुवि विश्रुता ।
यशोदा नाम भद्रं ते भार्या गोपकुलोद्वहा ॥ —ह० पु० २-३४
त्रैलोक्यवारिणी सा त्वं भुवि सन्त्योपयाचना ।
चरिष्यति महाभागे वरदा कामरूपिणी ॥
तत्र शुम्भनिशुम्भौ द्वौ दानवौ नगचारिणौ ।
तौ च कृत्वा मनसि मां सानुगौ नाशयिष्यसि ॥

कृत्वानु यात्रां भूतैस्त्वं सुरामांसबलिप्रिया ।
तिथौ नवम्यां पूजा त्वं प्राप्यते स पशुक्रियाम् ।।
ये च त्वां मत्प्रभावज्ञाः प्रणमिष्यन्ति मानवाः ।
तेषां न दुर्लभं किंचित्पुत्रतो धनतोऽपि वा ।।
कान्तारेष्ववसन्नानां मग्नानां च महार्णवे ।
दस्युभिर्वा निरुद्धान्तं त्वं गतिः परमानृणाम् ।। —हृ० पु० ३-५०-५४
आर्यास्तव प्रवक्ष्यामि यथोक्तमृषिभिः पुरा ।
नारायणीं नमस्यामि देवी त्रिभुवनेश्वरीम् ।।
त्वं हि सिद्धिर्धृतिः कीर्तिः श्रीविद्या सन्नतिर्मतिः ।
सन्ध्या रात्रिः प्रभानिद्रा कालरात्रिस्तथैव च ।।
आर्या कात्यायनी देवी कौशिकी ब्रह्मचारिणी ।
जननी सिद्धसेनस्य उग्रचारी महाबला ।।
जया च विजया चैव पुष्टिस्तुष्टिः क्षमा दया ।
ज्येष्टा यमस्य भगिनी नीलकौशेयवासिनी ।।
बहुरूपा विरुपा च अनेक विधि चारिणी ।
विरूपाक्षी विशालाक्षी भक्तानां परिरक्षिणी ।।
पर्वताग्रेषु घोरेषु नदीषु च गुहासु च ।
वासस्तव महादेवि वनेषूपवनेषु च ।।
शबरैर्बरैश्चैव पुलिन्दैश्च सुपूजिता ।
मयूरपिच्छ ध्वजिनी लोकान् क्रमसि सर्वशः ।।
कुक्कुटैश्छागलैर्मांषैस्सिंहैर्व्याघ्रैस्समाकुला ।
घण्टानिनाद बहुला विन्ध्यवासिन्यभिश्रुता ।।
त्रिशूली पट्टिशधरा सूर्यचन्द्रपताकिनी ।
नवमी कृष्णपक्षस्य शुक्लस्यैकादशी तथा ।।
भगिनी बलदेवस्य रजनी कलहप्रिया ।
आवासः सर्वभूतानां निष्ठा च परमागतिः ।।
नन्दगोपसुताचैव देवानां विजयावहा ।
चीरवासा सुवासाश्चरौद्री सन्ध्याचरी निशा ।।
प्रकीर्णकेशी मृत्युश्च सुरामांसबलि प्रिया ।
लक्ष्मीरलक्ष्मीरूपेण दानवानां वधाय च ।।
सावित्री चापि देवानां माता मंत्रगणस्य च ।
कन्यानां ब्रह्मचर्यत्वं सौभाग्यं प्रमदासु च ।।
अन्तर्वेदी च यज्ञानामृत्विजां चैव दक्षिणा ।
कर्षुकाणां च सीतेति भूतानां धरणीति च ।।

सिद्धिः सा यांत्रिकाणां तु बेला त्वं सागरस्य च ।
यक्षाणां प्रथमा यक्षी नागानां सुरसेति च ।।
ब्रह्मकारिन्यथो दीक्षा शोभा च परमा तथा ।
ज्योतिषां त्वां प्रभादेवि नक्षत्राणां च रोहिणी ॥
राजद्वारेसु तीर्थेषु नदीनां संगमेषु च ।
पूर्णा च पूर्णिमा चन्द्रे कृत्रिवासा इति स्मृता ॥
सरस्वती च वाल्मीके स्मृतिर्द्वैपायने तथा ।
ऋषीणां धर्मबुद्धिस्तु देवानां मानसी तथा ॥
सुरादेवी तु भूतेषु स्तूयसे त्वं स्वकर्मभिः ।
इन्द्रस्य चारुदृष्टिस्त्वं सहस्रनयनेति च ।।
तापसानांच देवी त्वमरणीं चाग्निहोत्रिणाम् ।
सुधा च सर्वभूतानां तृप्तिस्त्वं दैवतेषु च ॥
स्वाहा तृप्तिर्धृतिर्मेधा वसूनां त्वं वसूमती ।
आशा त्वं मानुषाणां च पुष्टिश्च कृतकर्मणाम् ॥
दिशश्च विदिशश्चैव तथा ह्यग्निशिखा प्रभा ।
शकुनी पूतना त्वं च रेवती च सुदारुणा ।
निद्राऽपि सर्वभूतानां मोहिनी क्षत्रिया तथा ।
विद्यानां ब्रह्मविद्या त्वमोकारीऽथ वषट् तथा ।।
नारीणां पार्वतीऽथ त्वां पौराणामृषयोः विदुः ।
अरुन्धती च साध्वीनां प्रजापतिवचो यथा ॥
यथार्थनामभिर्दिव्यैरिन्द्राणी चेहि विश्रुता ।
त्वया व्याप्तमिदं सर्वं जगस्थावरजंगमम् ।।
संग्रामेषु च सर्वेषु अग्निप्रज्वलितेषु च ।
नदीतीरेषु घोरेषु कान्तारेषु भयेषु च ।।
प्रवासे राजबन्धे च शत्रूणां च प्रमर्दने ।
प्राणात्ययेषु सर्वेषु त्वं हि रक्षा न संशयः ॥
त्वयि मे हृदयं देवी त्वयि चिन्तमनस्त्वयि ।
रक्ष मां सर्वपापेभ्यः प्रसादं कर्तुमर्हति ।। —ह० पु० विष्णुपर्व ३१९-२७
त्वत्प्रसादादविघ्नेन क्षिप्रं मुच्येय बन्धनात् ।
अवेक्षस्व विशालाक्षी पादौ ते शरणं ब्रजे ।।
सर्वेषामेव बन्धानां मोक्षाणां कर्तुमर्हति ।।

—ह० पु० हरिवंशपर्व २-९२०-२६/२७

अष्टादशभुजादेवी दिव्याभरण भूषिता ।। ह० पु० ह० प० २-९२०-३२
सुरामांसोपहारैश्च भक्ष्यभोज्यैश्च पूजिता ।
नृणामशेष कामास्त्वं प्रसन्नासम्प्रदास्यति ।। —वि० पु० अंश ५-९-२४

प्रकृतिस्त्वं परासूक्ष्मा ब्रह्मगर्भाभवः पुरा ।
ततो बाणी जगद्धातुर्वेदगर्भासि शोभने ॥
सृज्य स्वरूप गर्भासि सृष्टिभूता सनातने ।
बीजभूता तु सर्वस्य यज्ञभूता भवस्त्रयी ॥ —वि० पु० ५-२-७/८
एतत्सर्वमिदं विश्वं जगदेतच्चराचरम् ।
परब्रह्मस्वरूपस्य विष्णोश्शक्ति समन्वितम् ॥ वि० पु० ६-७-६०
प्रकृतिर्विकृतिस्तस्य द्वे रूपे परमात्मनः ।
अलक्ष्यं तस्य तद्रूपं प्रकृतिः सा प्रकीर्तिता ॥
साकारा विकृतिर्ज्ञेया तस्य सर्वजगत्स्मृतम् ।
गौरी शुक्लाम्बरादेवी रूपेण प्रतिमा भुवि ॥ —वि० ध० ८२-३-४
उपास्य विधिवत्सन्ध्यामुपस्थात्र च भास्करम् ।
गायत्रीं शक्ति तो जप्त्वा तर्पयेद्देवता पितृन् ॥ —(वृहद् पा० संहिता)
आराध्या परमाशक्तिः सर्वैरपि सुरासुरैः ।
मातुः परतरं किंचिनाधिकं भुवनत्रये ॥ —(पुराणान्तर)
धिग्धिग्धिक्च तज्जन्म यो न पूजयते शिवाम् ।
जननी सर्वजगतः करुणारससागराम् ॥ —(शक्तितत्वविमर्शिनी)
गत्वा मधुवरीं चैव देव्यास्तीर्थे नरः शुचिः ।
तत्रस्नात्वार्चयित्वा च पितृन्देवांश्च पूरुषः ॥ —म० भा० वनपर्व ८३-९४
विराटनगरं रम्यं गच्छयानो युधिष्ठिरः ।
अस्तुवन्मनसा देवीं दुर्गा त्रिभुवनेश्वरीम् ॥
यशोदागर्भसम्भूता नारायण वर प्रियाम् ।
नन्दगोपकुलेजाता मांगल्यां कुलवर्धिनीम् ॥ —म० भा० वि० प० ३-६/२
भारावतरणे पुण्ये ये स्मरन्ति सदाशिवाम् ।
तान् वै तारयते पापात् पंकेगामिव दुर्बलाम् ॥ —म० भा० वि० प० ६-५
विन्ध्ये चैव नगश्रेष्ठे तव स्थानं हि शाश्वतम् ।
कालि कालि महाकाली सीधुमांसपशुप्रिये ॥ —म० भा० वि० प० ६-१७
दुर्गा तारयसे दुर्गे तत् त्वं दुर्गा स्मृता जनैः ।
कान्तारेष्ववसन्नानां मग्नानां च महार्णवे ॥ —म० भा० वि० प० ६-२०
एवं स्तुता हि सा देवी दर्शयामास पाण्डवम् ।
उपगम्य तु राजानमिदं वचनमब्रवीत् ॥
शृणुराजन् महाबाहो मदीयं वचनं प्रभो ।
भविष्यत्यचिरादेव संग्रामे विजयस्तव ॥
मम प्रसादान्निर्जित्य हत्वा कौरववाहिनीम् ।
राज्यं निष्कण्टकं कृत्वा भोक्ष्यसे मेदिनीं पुनः ॥
—म० भा० वि० प० ६-२७/२६

यक्ष रक्षः पिशाचेभ्यो न भयं विद्यते सदा।
न चापि रिपवस्तेभ्यः सर्पाद्या ये च दंष्ट्रिणः॥
न भयं विद्यते तस्य तदा राजकुलादपि।
विवादे जयमाप्नोति बद्धो मुच्यति बन्धनात्॥
दुर्गं तरति चावश्यं तथा चोरैर्विमुच्यते।
संग्रामे विजयेन्नित्यं लक्ष्मी प्राप्नोति केवलाम्॥
आरोग्य बल सम्पन्नो जीवेद्वर्षशतं तथा।
एतद्दष्टं प्रसादस्तु मया व्यासस्य धीमतः॥

—म० भा० भीष्म प० २३-२२/२५

दुर्गेति भद्रकालीति विजया वैष्णवीति च।
कुमुदा चण्डिका कृष्णा माधवी कन्यकेति च॥
माया नारायणीशानी शारदेत्यम्बिकेति च॥

—श्रीमद् भा० १०-२११/१२

चामुण्डा प्रेतगारक्ता विकृतास्यहिभूषणा।
द्रंष्टोग्रा क्षीणदेहा च गर्ताक्षी भीमरूपिणी॥ —वि० ध० १२३-८
भूतधात्रीं भयकरीं कूष्माण्डी कुसुमप्रियाम्।
दारुणीं मधुरावासां विन्ध्य कैलासवासिनीम्॥

—ह० पु० ह० प० २१-२०-१६

आज्यपां सोमपां सौम्यां सर्वपर्वतवासिनीम्। —ह० पु० ह० प० २१-२०-९
ये स्मरन्ति महादेवी न च सीदन्ति ते नराः।
त्वं कीर्तिः श्रीधृतिः सिद्धिर्ह्रीर्विद्या सन्ततिर्मति॥
सन्ध्या रात्रिः प्रभानिद्रा ज्योत्स्ना कान्तिः क्षमा दया।
नृणां च बन्धनं मोहं पुत्रनाशं धनक्षयम्॥
व्याधिं मृत्युं भयं चैव पूजिता नारयिष्यसि।
सोऽहं राज्यात् परिभ्रष्टः शरणं त्वां प्रपन्नवान्॥

—म० भा० वि० प० ६-२२/२४

नमस्ते सिद्धसेनानि आर्ये मन्दरवासिनी।
कुमारी कालि कापालि कपिले कृष्णपिंगले॥
भद्रकालि नमस्तुभ्यं महाकालि नमोऽस्तुते।
चण्डिचण्डे नमस्तुभ्यं तारिणी वरवर्णिनी॥ —म० भा० भी० प० २३-४/५
उमे शाकम्भरी श्वेते कृष्णे कैटभनाशिनी।
हिरण्याक्षि विरूपाक्षी सुधूम्राक्षि नमोऽस्तुते॥ —२३-६
महिषासृक् प्रिये नित्यं कौशिकी पीतवासिनी॥ —२३-८
स्वाहाकारा स्वधा चैव कलाकाष्ठा सरस्वती।
सावित्री वेदमाता च तथा वेदान्त उच्यते॥ —२३-१२

त्वं जम्भिनी मोहिनी च माया ह्रीः श्रीस्तथैव च ।
सन्ध्या प्रभावती चैव सावित्रि जननी तथा ॥
तुष्टिः पुष्टिर्धृतिर्दीप्तिश्चन्द्रादित्यविवर्धिनी ।
भूतिर्भूतिमतां संख्ये वीक्ष्यसे सिद्धचारणैः ॥ —२३-१५/१६
यत्र धर्मो द्युतिः कान्तिर्यत्रह्रीः श्रीस्तथामतिः ।
यतो धर्मस्ततो कृष्णे यतः कृष्णस्ततो जयः ॥ —म० भा० भी० प० २३-२८
यत्रयोगेश्वरः कृष्णः यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयोभूतिर्ध्रुवानीतिर्मतिर्मम ॥ —गीता १८-७८
अभयं सत्व संशुद्धिर्ज्ञानयोग व्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दयाभूतेस्वलोलुप्तां मार्दवं ह्रीरचापलम् ॥
तेजः क्षमाः धृतिः शोचमद्रोहो नाति मानिना ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥
दम्भो दर्पोऽभिमानश्च क्रोधा पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥
दैवी सम्पद् विमोक्षाय निबन्धायासुरीमता ।
मा शुचः संम्पदं दैवीमभिजातोऽसि पाण्डवः ॥
—म० भा० भी० प० ४०-१/५

यावद्भूमण्डलं धत्ते सशैलवनकाननम् ।
तावत्तिष्ठति मेदिन्यां सन्ततिः पुत्र पौत्रिकी ॥
देहान्ते परमंस्थानं यत्सुरैरपि दुर्लभम् ।
प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः ॥
लभते परमं रूपं शिवेन सह मोदते ॥ —व० पु० देवी कवच ५४/५६
जननं मरणं द्वन्द्वं शिवमाया समर्पितम् ।
शिवमायार्पितं द्वन्द्वो न पुनस्तवात्मभाग्भवेत् ॥ —शि० पु० ११-८-१४४
मायाचक्रप्रणेता हि शिवः परमकारणम् ।
शिवमायार्पितं द्वन्द्वं शिवस्तु परिमार्जति ॥ —शि० पु० ११-८-१४५
जगतः पितरं शम्भुज्जगतो मातरं शिवाम् ॥ —शि० पु० २-१-४
दुर्ज्ञेया शाम्भवीमाया सर्वेषां प्राणिनामिह ।
भक्तं विनार्पितात्मानं तथा संमोह्यते जगत् ॥ —शि० पु० २-२-२५
धन्या धन्या महामाया शाम्भवी मुनिसत्तमाः ।
यद्गतिं न हि पश्यन्ति विष्णुब्रह्मादयोऽपि हि ॥ —शि० पु० २-३-२५
स एवमादाय मायां स्वांत्रिधा भवति रूपतः ।
ब्रह्मविष्णुमहेशात्मा निर्गुणोऽनिर्गुणोऽपि सः ॥ —शि० पु० २-४-३२

शक्तिस्तदैकलेनापि स्वैरं विरहतातनुः ।
स्वविग्रहात्स्वयं सृष्टा स्वशरीरानपायिनी ।। —शि० पु० २-६-१९
प्रधानप्रकृतिं वाचं माया गुणवती पराम् ।
बुद्धितत्त्वस्य जननीमाहुर्विकृति वर्जिताम् ।।
त्रिदेव जननी नित्या मूलकारणमित्युत ।
अस्या अष्टौभुजाश्चासन्विचित्र वदना शुभा ।।
राका चन्द्रस्सहस्रस्य वदने भाश्च नित्यशः ।। —शि० पु० २-६-२०/२२
जडात्मकं च तत्सर्वं प्रकृतेः पुरुषं विना ।। —शि० पु० २-६-५८
सैव दक्षा समुद्भूता लोककामार्थमेव च ।
लीलांचकार बहुशो भक्तोद्धरण हेतवे ।। —शि० पु० २-६-३५
त्रिदेवा अपि मे रूपं हरः पूर्णो विशेषतः ।
उमाया अपि रूपाणि भविष्यन्ति त्रिधासुता ।।
लक्ष्मीर्नाम हरेर्पत्नी ब्रह्मपत्नी सरस्वती ।
सा तु पूर्णा सतीनाम रुद्रपत्नी भविष्यति ।। —शि० पु० २-२-१०-५६/५७
सर्वत्र व्यापिनी नित्यां निरालम्बी निराकुलाम् ।
त्रिदेव जननीं बन्दे स्थूलस्थूलामरूपिणीम् ।।
त्वं चित्तिः परमानन्दा परमात्मस्वरूपिणी ।
प्रसन्ना भव देवेशि मत्कार्यं कुरुते नमः ।। —शि० पु० २-२-४-४/५
या श्री सदा केशवमूर्तिमाला विश्वम्भरा या सकलं विर्भात ।
या त्वं पुरा सृष्टिकरी महेशी हर्त्री त्रिलोकस्य परा गुणेभ्यः ।।
शि० पु० २-२११-१११

युवां लीलावतारो वै सतां क्षेमाय सर्वदा ।
खलानां निग्रहार्थाय श्रुतिरेषा सनातनी ।। —शि० पु० २-२१-९-४
दुर्ज्ञेयाशाम्भवीमाया तया सम्मोहितं जगत् ।। —शि० पु० २-२१-९·१४
मोहिनी सर्वलोकानां शिवमाया गरीयसी ।
तदधीनजगत्सर्वं शिवेच्छा सा प्रकीर्तिता ।। —शि० पु० ३-२-१५
गीतिस्त्वं सामवेदस्य ग्रन्थिस्त्वं यजुषां हुतिः ।
ऋग्वेदस्य तथा मात्राथर्वणस्य परागतिः ।। —शि० पु० ३-३-३५
प्रणमामि महामायां योगनिद्रामुमां सतीम् ।
सैव संहरते वाले त्रिगुणा परमेश्वरी ।।
त्रिदेवजननी नित्या भक्ताभीष्टफलप्रदाम् ।
पालिनी सर्वदेवानां करुणावरुणालयम् ।।
—शि० पु० ५-४५-५८-५९

निर्विकारादि साकारा निराकारादि देव्युमा ।
भक्तानां तापनाशार्थं प्रादुरासीद्युगेयुगे ।। —शि० पु० ५-४५-७७

परब्रह्म परंज्योतिः प्रणव द्वन्द्वरूपिणी ।
अहमेवास्मि सकलं मदन्यो नास्ति कश्चन ॥
निराकारापि साकारा सर्वतत्त्व स्वरूपिणी ।
अप्रतर्क्यगुणा नित्या कार्यकारण रूपिणी ॥
कदाचिद्दयिताकारा सर्वाकाराहमीश्वरी ।
कदाचिदुभयाकारा कदाचित्पुरुषाकृतिः ॥
विरंचि सृष्टिकर्ताहं जगत्पाताहमच्युतः ।
रुद्रः संहारकर्ताहं सर्वाविश्व विमोहिनी ॥ —शि० पु० ५-४६-२८-३१

सैवा परा च चिद्रूपा शक्तिः प्रसवधर्मिणी ।
विभज्य बहुधा विश्वं विदधाति शिवेच्छया ॥
सा मूलप्रकृतिर्माया त्रिगुणा च त्रिधा स्मृता ।
शिवया च विपर्यस्तं यया ततमिदं जगत् ॥
एकधा च द्विधा चैव तथा शतसहस्रधा ।
शक्तयः खलु भिद्यन्ते बहुधा व्यवहारतः ॥
—शि० पु० ७-४-१५-१७

महामायां नमस्यामि धर्मकामार्थमोक्षदाम् ।
नन्दनाद्रिकृतावासा धारिणीं जगता प्रभुम् ॥
नारायणीं भद्रकालीं भद्रदां वीरवंदिताम् ।
यज्ञाशिनीं यज्ञदेहां यज्ञपालनतत्पराम् ॥
त्रिशक्ति त्रिगुणारामां गुणातीतां गुणाकराम् ।
नैमिष्यारण्यनितया मलयाचलसंश्रयाम् ॥
वीरभद्रवरां वीरां वीरासनसमास्थिताम् ।
स्वाधिष्ठानाम्बुजरजः पुंजपिंजरितां खगाम् ॥
शिवां सरस्वतीं लक्ष्मीं सिद्धि बुद्धि महोत्सवाम् ।
केदारवास सुभुजां बदरीवाससुप्रियाम् ॥
राजराजेश्वरीदेवीं सृष्टिसंहारकारिणीम् ।
माया मायास्थितां बामां वामशक्ति मनोहराम् ॥
मेनकां मनुपूज्यां च ज्वालां ज्वालामुखीं पराम् ।
एकलिंगकृतोत्संग नारायणपरायणाम् ॥
भागीरथीं भागगम्यां भोगिनीं भोगवल्लभाम् ।
भूरादिकतपोतस्थां वीणापुस्तकधारिणीम् ॥
दारुमूर्तिसमासीनां प्रियं दीनदयोधराम् ।
केयूरांगद भूषाढ्यां चतुर्बाहुमनोहराम् ॥
सिंहासन कृतावासां रक्तवस्त्रां रणप्रियाम् ।
आर्य्याकार्य्यकरीं वन्दे संसारोद्भवहेतवे ॥

इति संस्तुवतस्तस्य ब्रह्मणो विष्णुजन्मनः।
कोटि सूर्यं प्रतीकासा देवी प्रादुरभून्मुने ॥ —स्कन्द पु० के० ११०-१-११
सृष्टिमार्गप्रदां त्वं हि प्रकृतिः परमा मता।
त्वदिच्छया जगत्सर्वं जायते स चराचरम् ॥ —११०-२९
बलारातेश्च हृदये यदस्ति तद्भविष्यति।
मायाया परमाया च श्रीमद्भगवती परा ॥
तयैव सृज्यते सर्वं जगदेतच्चराचरम्।
सैव पालयते देवी सैव नाशयतेतरम् ॥
तयैव मोहितो जंतुर्ब्रह्माणं सृजकं तथा।
पालकं मां च जानाति नाशकं रुद्रसंज्ञितम् ॥
एताभिस्सर्वमूर्तीभिर्जगत्पालयते परा।
चौरराजाग्नि रूपेण दुनोति च तथा भयम् ॥
वर्षते मेघरूपेण तपते सूर्यरूपतः।
शोषते वायुरूपेण क्लेदतेजलरूपतः ॥
सैव सर्वंकरी देवी तां भजस्व भयापहाम्।
नारायणीं हिमवतौ शुभे केदारमण्डले ॥ —स्कन्द पु० के० १३५-२५-३०
नारायणीं नमस्यामि सृष्टिसंहारकारिणीम्।
जगदानन्दरूपां तां जगदम्बा नतोस्म्यहम् ॥
जगदीशीं जगद्बीजां जनयित्रीं जरातिगाम्।
जाज्वाल्यमानां वपुषा नम्रपीनपयोधराम् ॥
धनदां धनदावासां भवानीं भवनाशिनीम्।
भव्यां भावप्रतीकारां गीर्वाणगणमूर्तिताम् ॥
गरिष्ठां गुरुपत्नीं च गुरुविद्यां गुरुत्सताम्।
जालपां कामधेनुं च नमस्यामि सुरेश्वरीम् ॥
प्रकृतिं पुरुषाकारां हिमालयकृतालयाम्।
निरंजनो निर्विकारां निर्गुणां निरुपद्रवाम् ॥
कोटिसूर्य प्रतीकाषां कोटिचन्द्राननां भजे।
धरणीं धीरसेव्यां च चराचरगुरुं भजे ॥
नारदाद्यैः सेव्यमानां सहस्राक्षां महेश्वरीम्।
नमस्यामि महामायां जगन्मोहनकारिणीम् ॥
सरस्वतीं च सावित्रीं रुद्राणीं रुद्रवन्दिताम्।
नमस्यामि नराकारां निराकारां परेश्वरीम् ॥ —के० १३६-३-१०
नताःस्म इन्दीवरनीलशोभां रक्ताम्बरां रक्तसुगन्धभूषाम्।
रक्तानानां रक्तविवीटिकां च श्रीरक्तदन्तामनिशं भजामः ॥

नारायणीं नारद सेवितां च दुःखापहां दनुजदैत्यविनाशिनींच ।
धन्यां च धन्यधनदादि सुसेवितां च श्रीकालिकांकनकचक्षुधरांभजामः ॥
चण्डाट्टहासकरिणीं करिचर्म्मवस्त्रां भीमां महादनुजभैरविकां महेशीम् ।
कंकालजाल विलसद्ग्रहभूषितांगीं नृमुण्डमाल विलसद्धृदयां भजामः ॥
नेत्रत्रयां भगवतीं भवभाविनीं तां भूमाक्षिकां ज्वलितकांचनरूपनेत्राम् ।
जिह्वाशतज्वलित सृक्विणिकां महेशीं नासापुरत्रमिलज्ज्वलनां भजामः ॥
यस्या महेश हरिब्रह्म सुरेशकायाः कर्तुं स्तुतिं भगवतिप्रभवो वयं न ।
तां देवतां दनुजरक्तविलिप्तवक्त्रं स्मेराननां भवविमुक्तिकरां भजामः ॥
स्त्रीरूपिभिः शिवगणैर्गणनामरूपैर्नृत्यद्भिरम्ब गिरिराज अधित्यकानाम् ।
गायद्भिरेव भवतीं भवभूषणां तां श्रीदक्षिणां धनदधेनुमरं भजामः ॥
शिवः परो पारगुणो निरात्मा निरंजनो यो निरुपद्रवश्च ।
यदिच्छया सर्वमिदं चराचरं करोति तां देववतां भजामः ॥
लक्ष्मीवपुर्धृतवतीं मुरनाशनस्य गेहे वपुर्धृतवतीं द्रुहिणस्य वाचम् ।
श्रीपार्वतीति कथितां पुरनाशनस्य तां देवतां निखिलरूपधरां भजामः ॥
श्रीकामरूपनिलयां वरविन्ध्यवासां जालन्धरे ज्वलनरूपधरां भवानीम् ।
कालीतिनामविभवां गिरिराजपीठे तां कालिकां कलहरां सततं भजामः ॥
कोटीनभासुरमहत्कनक प्रपीठे सिंहासने मणिगणांचित सर्वधाम्नि ।
भास्वत्कलाधरवरांचित शेखरां तां नारायणी सुरवरार्चितकां भजामः ॥
संसारसागरसुतारणपादपोतां भक्तार्तिनाशनधृतावतरां महेशीम् ।
वेदान्तशास्त्रपरिगम्यतरां भवानीं भावेन सेवनगमां सुतरां भजामः ॥
देवि त्वया भगवति प्रलयान्तकाले संमोह्यते हरिरसाबुर्दधि प्रसुप्तः ।
तन्नाभिजातसरसीरुह जन्मनस्त्वां दुःखस्यनाशनकरीं भवतीं भजामः ॥
भूयः परा भगवती भवतीहलोकान् दुर्भिक्षपीड़िततरांच्छतवार्षिकीयम् ।
दृष्ट्वाशतेन नयानाम्बुरुहां सुमातः सर्वान्हिरक्षितवतीं भवतीं भजामः ॥

के० ८५-३-१५

शक्त्यैव खलु मन्वन्तरादिकालास्तत्परिमाणाश्च निरूपिता अभवन् । धर्मशास्त्रेषु पुराणेषु च परमाणुमारभ्य हिरण्यगर्भदिवसावसान पर्यन्ताः कालभेदाः ये प्रसिद्धा सन्ति ते सर्वे तयैव कल्पिताः सन्ति ।

## काल-बोधक चक्रम्

| परमाणु | अतिसूक्ष्मपदार्थः | कालातिसूक्ष्मः |
|---|---|---|
| २ ,, | १ अणुः | ,, |
| ३ अणु | १ त्रसरेणुः | ,, |
| ३ त्रसरेणुः | १ त्रुटिः | सूक्ष्मकालः |
| १०० त्रुटि | १ वेधः | ,, |

| | | |
|---|---|---|
| ३ वेधः | १ लवः | ,, |
| ३ लवः | १ निमेषः | ४ विपल या ६ सेकेन्ट |
| | (पलकोन्मीलितावधि) | ९ विपल या ४१ सेकेन्ट |
| ३ निमेषः | १ क्षणः | पलकमयोन्मीलितकालः |
| ६ क्षणः | १ काष्ठा | ८ विपल या २$\frac{1}{5}$ सेकेन्ट |
| ३० काष्ठा | १ कला | ४ पल, १ मिनट ३६ से० (१ पल=२४ से०) |
| ३० कला | १ मुहुर्तः | २ घटी=४८ मिनट (१ घटी=६० पल=२४ मि०) |
| ३० मुहुर्तः | १ मानवानामहोरात्रम् | ६० घटी=२४ घण्टे |
| १५ अहोरात्रम् | १ पक्षः | |
| २ पक्षः (शुक्ल-कृष्ण) | १ मासः | पितॄणामहोरात्रम् |
| ६ मासः | १ अयनम् | |
| २ अयनम् (उत्तरायण-दक्षिणयन) | १ वर्षः | दिवौकसामहोरात्रम् |
| ३६० अहोरात्रदिव्य | ३६० वर्षाणिमानुषाणां | १ वर्षदिव्यम् |
| ४००० दिव्यवर्षाणि | १४४०००० मानववर्षाणि | सत्ययुगस्यमुख्यमानम् |
| ४०० ,, | १४४००० ,, | सत्ययुगसन्ध्यायाः मुख्यमानम् |
| ४०० ,, | १४४००० ,, | ,, सन्ध्यांशस्य ,, |
| ४८०० ,, | १७२८००० ,, | ,, पूर्णमानम् ,, |
| ३००० ,, | १०८०००० ,, | त्रेतायाः मुख्यमानम् |
| ३०० ,, | १०८००० ,, | ,, सन्ध्यायाः ,, |
| ३०० ,, | १०८००० ,, | ,, सन्ध्यांशस्य ,, |
| ३६०० ,, | १२९६००० ,, | त्रेतायुगस्य सम्पूर्णमानम् |
| २००० ,, | ७२०००० ,, | द्वापरस्य मुख्यमानम् |
| २०० ,, | ७२००० ,, | ,, संन्ध्यायाः मुख्यमानम् |
| २०० ,, | ७२००० ,, | ,, सन्ध्यांशत्य ,, |
| २४०० ,, | ८६४००० ,, | ,, सम्पूर्णमुख्यमानम् |
| १००० दिव्यवर्षाणि | ३६०००० मानववर्षाणि | कलियुगस्य मुख्यमानम् |
| १०० ,, | ३६००० ,, | कलियुगस्य सन्ध्यायाः |
| १०० ,, | ३६००० ,, | ,, संन्ध्याशस्य |
| १२०० ,, | ४३२००० ,, | ,, पूर्णमानम् |
| १२००० ,, | ४३२०००० ,, | चतुर्णा युगान्तपूणमानम् |
| +२०००×७१ | ३०६७२०००० ,, | मन्वन्तरस्य पूर्णमानम् |
| १२००० ×१०० = | ४३२००००००० | ब्रह्मणः दिनमानम् किम्बा रात्रिमानम् |
| १२०००००० | | |
| २४०००००० | ८६४००००००० | ब्रह्मण अहोरात्रम् |

त्रिगुणात्मिका सर्वोत्तमा शक्तिः शिवेन सह-
ब्रह्माण्डादुपर्युपरि तदादिकमुमालोकंमधिशेते ।[1]

---

| | | |
|---|---|---|
| १. शक्तिशिवयोर्लोक: | = (उमालोक:) | |
| कौमारलोक: | = स्कन्दलोक: | |
| विष्णुलोक: | = (विष्णुलोक इति स्पष्टम्) | |
| १. सत्यलोक: | = (ब्रह्मलोक:) | |
| २. तपोलोक: | = (देवलोक:) | |
| ३. जनलोक: | = (पितृणांलोक:) | |
| ४. महर्लोक: | = (सनकादिऋषीणांलोक:) | |
| ५. स्वर्लोक | = (ध्रुवेण सह सप्तर्षीणांलोक:) | |
| | योजनम् २००००० शनि: | |
| | ,, २००००० बृहस्पति: | |
| | ,, २००००० मंगल: | |
| ५. भुवर्लोक: | ,, २००००० शुक्र: | |
| (ग्रहाणांलोक:) | ,, २००००० बुध: | |
| | ,, २००००० नक्षत्र: | |
| | ,, १००००० चन्द्रमा: | |
| | सूर्यग्रह: | |
| ७. भूर्लोक: | मनुष्यलोक: | मर्त्यलोक: |
| ८. अतल | | |
| ९. वितल | | |
| १०. सुतल | | |
| ११. तलातल | | |
| १२. रसातल | | |
| १३. पाताल | | |
| १४. सप्तपाताल | | |

ततः परमुमालोको महादिव्यो विराजते ।
यत्र शक्तिर्विभात्येका चिदेव जननी शिवा ॥
परात्परा हि प्रकृति रजस्सत्यतमोमयी ।
निर्गुर्णा च स्वयं देवी निर्विकारा शिवात्मिका ॥ —शि० पु० ५१-६-३७

## तृतीयोऽध्याय:

अध्यायेऽस्मिन् केदारखण्डस्थितानां सिद्धपीठानां सामान्य परिचयं दत्वा सिद्धपीठेष्वेसु शक्तेः पूजोपासनाव्रतोपवासयात्रायज्ञदर्शनादीनां परम्परा संकलिता वर्तते ।

### १. केदारखण्डस्थितानां सिद्धपीठानां सामान्य परिचय:

| **संख्याक्रम:** | **सिद्धपीठ नाम** | **स्थान संकेत** |
|---|---|---|
| १. | उर्वशी (श्रीविद्या) | बदरीनाथ (नारायण पर्वत) |
| २. | नन्दादेवी सिद्धपीठ | नन्दपर्वत (लाताग्राम) |
| ३. | पर्णखण्डासना सिद्ध० | मैखण्डा (जोशीमठ) |
| ४. | ललितादेवी सिद्ध० | ललिताङ्गण (नालाग्राम) |
| ५. | काली सिद्ध० | कालीमठ (यज्ञपर्वत) |
| ६. | शाकम्भरी सिद्ध० | त्रियुगी (शाक्रपर्वत) नारायण |
| ७. | गौरी सिद्ध० | गौरीकुण्ड |
| ८. | सन्मार्गदायिनी सिद्ध० | केदारनाथ |
| ९. | बगलामुखी सिद्ध० | विनकरवाल |
| १०. | कामेश्वरी सिद्ध० | कामेश्वर पर्वत |
| ११. | कूर्मासना सिद्ध० | मैठाणा (कूर्माचल पर्वत) |
| १२. | इन्द्रासना सिद्ध० | कण्डाली ग्राम |
| १३. | छिन्नमस्ता सिद्ध० | भणगा ग्राम |
| १४. | यवनेश्वरी (सुरखण्डादेवी) सिद्ध० | योनिपर्वत |
| १५. | अन्नपूर्णा (पुष्टि) सिद्ध० | उत्तरकाशी |
| १६. | भुवनेश्वरी (चन्द्रवदनी) सिद्ध० | चन्द्रकूट पर्वत |
| १७. | रमणा (भूतेश्वरी) सिद्ध० | देवप्रयाग |
| १८. | काली विकृताख्या (चमराडादेवी) सि० | गर्दभासुर पर्वत (मुन्नाखाल) |
| १९. | रणमण्डना (पावकीदेवी) सिद्ध० | पावकीदेवी पर्वत |
| २०. | सुन्दरीदेवी (जयन्ती) सिद्ध० | ब्रह्मपुरी |
| २१. | कंसमर्द्दिनी (कमला) सिद्ध० | श्रीनगर |

| संख्याक्रमः | सिद्धपीठ नाम | स्थान संकेत |
|---|---|---|
| २२. | चामुण्डा सिद्ध० | श्रीनगर |
| २३. | राजराजेश्वरी सिद्ध० | राणीहाट |
| २४. | महिषमर्दिनी सिद्ध० | देवलगढ |
| २५. | गुह्येश्वरी सिद्ध० | शवधियाररवाल |
| २६. | नन्दभद्रेश्वरी सिद्ध० | भवानग्राम |
| २७. | दीप्तज्वालेश्वरी सिद्ध० | नवलातट ज्वाल्पा |
| २८. | सुरेश्वरी (महेशानी) सिद्ध० | नीलकण्ठ सुरकूट पर्वत |
| २९. | महत्कुमारिका सिद्ध० | कुञ्ज पर्वत |
| ३०. | अनङ्गा (भारती) सिद्ध० | ऋषिकेश |
| ३१. | मुण्डमालेश्वरी सिद्ध० | वीरभद्राश्रम |
| ३२. | मनसादेवी सिद्ध० | हरिद्वार (मनसाश्रम) |
| ३३. | मायादेवी सिद्ध० | हरिद्वार (मायापुर) |
| ३४. | रतिप्रिया सिद्ध० | हरिद्वार (चण्डीघाट) |
| ३५. | चण्डीदेवी सिद्ध० | चण्डी पर्वत (हरिद्वार) |
| ३६. | श्रद्धा (उग्रा) सिद्ध० | कनखल (हरिद्वार) |

केदारखण्ड स्थितानामेतेषां सिद्धपीठानां संक्षिप्तैतिहासिकी परिचयः—

१. वदर्यामुर्वशीतथा ॥ —देवी भा० ७-३०-७९
२. नन्दादेवीपरं गोप्या तत्रैवास्ति सुरार्चिता ॥ —के० ८१-२९
३. पर्णखण्डासना भूत्वा बहुवर्षसहस्रकम् ॥ —के० ५८-३६
४. ललिता ललिताङ्गणे ॥ —कुब्जिका तं० पटल ७-५०
५. कालीति नामविभवां गिरिराजपीठे ॥ —के० ८५-११
६. शाकम्भरी यत्र जाता मुनीनां त्राणकारणात् ॥ —के० ४६-१
७. गौरी पीठं समाख्यातं ॥ —के० १८६-३
८. केदारपीठं सम्प्रोक्ता देवी सन्मार्गदायिनी ॥ — देवी भा० ७-३०-६०
९. बगला तु महादेवी सर्वतंत्रेषु विश्रुता ॥ —के० ४५-५
१०. कामेश्वरी महादेवी पूजयेद्भक्तितत्परः ॥ —के० ४४-११
११. यत्र कूर्मासनादेवी कूर्मपीठे व्यवस्थिता ॥ —के० १९६-१
१२. तत्रहीन्द्रासनाख्याता सर्वदानव मर्दिनी ॥ —के० १९५-२१
१३. छिन्नमस्तेश्वरीपीठं सद्यः प्रत्ययकारकम् ॥ —के० १९५-१
१४. पीठं वै यवनेश्वर्याः सर्वसिद्धिप्रदायकम् ॥ —के० १३२-२
१५. भुवनेश्यन्नपूर्णा च पूर्वाम्नायाधि देवता ॥ —वि० तं० १-१२-२१३

१६. दृष्ट्वा तां चन्द्रवदनीं विश्वानन्दनतत्पराम् ॥ —के० १४१-२७
१७. रमणा रामतीर्थे तु ॥ —देवी भा० ७-३०-६५
१८. चिबुके चामरो देवो विकृताख्या जलस्थले ॥ —कालि० अ० १६
१६. आस्ते तत्र महादेवी नाम्ना तु रणमण्डना ॥ —के० ८६-४०
२०. सुन्दरीति च विख्याता देवदानवसेविता ॥ —के० १३७-२
२१. चामुण्डा भैरवीपीठं कांसमर्द्दनकं तथा ॥ —के० ८८-२३
२२. चामुण्डा भैरवीपीठं ॥ —के० ८८-२३
२३. राजराजेश्वरी पीठं सद्यः प्रत्ययकारकम् ॥ —के० १८६-४
२४. तथा माहिषर्मर्दिनम् ॥ —के० १८६-३
२५. गुह्येश्वरीति विख्याता सर्वसिद्धिप्रदायिनी ॥ के० १७४-४
२६. नन्दभद्रेश्वरीमत्र सर्वदेवनमस्कृता ॥ —के० १७५-१
२७. दीप्तज्वालेश्वरीख्याता सर्वसिद्धिप्रदायिनी ॥ के७ १६८-२
२८. तत्र सुरेश्वरीनाम्ना सर्वसिद्धिप्रदायिनी ॥ —० १३३-१०
२६. महत्कुमारिका पीठं सद्यः प्रत्ययकारकम् ॥ —के० १४०-१
३०. अनङ्गाभरताश्रमे ॥ —देवी० ७-३०-७६
३१. ददाति दर्शनं तस्य मुण्डमालेश्वरी शिवा ॥ —के० १०८-२५
३२. तपसा मनसा तेन बभूव मनसा च सा ॥ —देवी० ६-४८-१३
३३. महामाया भगवती गुणातीता करप्रदा ॥ —चूडा० के० ११८-१०६
३४. गंगाद्वारे रतिप्रिया ॥ —देवी० ७-३०-६६
३५. सरसो दक्षिणेपार्श्वे चण्डी चण्डगणैः स्तुता ॥ —के० ७६-१८
३६. श्रद्धा कनखलेतीर्थे शुद्धबुद्धिर्भुवीश्वरी ॥ —कु० सं० १-७

## २. सिद्धपीठेषु देवी पूजन परम्परा

शक्तेः उपासना पूजा च अनादिकालादेव विद्वांसः स्वीकृतवन्तः। यद्यपि वैदिककाले वैदिकमन्त्रैः भक्ताः शक्तेः मायाऽदित्यजादि भेदेन उपासनामकुर्वन्, किन्तु कालान्तरे शक्ते उपासना पूजनस्य च त्रयो भेदाः विकसिताः दृश्यन्ते। इमे भेदाः पुराणेष्वागमग्रन्थेष्ववलोक्यन्ते उत्तममध्यमाधमरूपाः। अधुनापि शक्तेः उपासनायां पूजने च तेषां त्रयाणामेव भेदानां परिकल्पनाप्रचलिता वर्तते।

### शक्ति पूजनस्योत्तमभेदः

सांसारिक वस्तुषु भोगेषु च सम्पूर्णवासनानां परित्यागः, चिद्ब्रह्मणि शक्तेर्ध्यानम् सर्वेषु भूतेषु समभावना, सर्वेषु प्राणिषु करुणाभावनायाः व्यवहारः, मानमोहाहंकाराभिमानेभ्यः स्वात्भानमपनीय चैतन्यात्मकंचित्तं प्राणं च शक्त्यामेव धारणम्, शक्तेः स्वरूपस्थानसिद्धपीठानाञ्च सदैव स्मरणमिति शक्तेः उपासनायाः उत्तमभेदस्य लक्षणम्। ब्रह्मचारी, गृहस्थी, वानप्रस्थी, सन्यासी यः कोऽपि जनः शक्तेः

विराटरूपस्योपासना पूजा च अनेन विधिना कुरुते स भक्तः शाक्तः महामोहान्धपथं विहाय सर्वैश्वर्यमाप्नोति।[१]

वैदिक सिद्धान्ताधारेण इयमेव सर्वोत्तमा शक्ति उपासना सम्पद्यते। इमामेव शक्तेः आन्तरिकोपासना पूजा च कथ्यते। उपाधिरहितज्ञानोपहितचैतन्यमेव शक्तेः वास्तविक स्वरूपमस्तीति।[२] शक्तेः पीठपूजाऽपि[३] उत्तमा सात्विकी पूजा भवति। सिद्धपीठानामर्चने सप्तशत्यादि जपोऽखण्डदीप आचारप्राप्तमाला-बन्धनमुपवासनक्तैक भुक्तादिनियमः सुवासिनीभोजनकुमारीभोजनपूजनादि अन्ते सप्तशत्याविहितस्तोत्र-मंत्रहोमादीत्येतानि विहितानि कर्माणि सन्ति। प्राचीन काले महाराजो सुरथ महामुनिमार्कण्डेयोपदेशात्सात्विकविधिना शक्तिमर्चयामास। अर्चनेनानेन परहस्तगतवतीं राज्यलक्ष्मीं लब्ध्वा अपरजन्मनि सार्वणिमनुर्वभूव।[४]

---

१. ते धन्या कृतकृत्यास्स्युर्धन्या तेषां प्रसूः कुलम्।
येषां चिन्तं भवेल्लीनं श्रीदेव्या परसंविदि॥ —शिव पु० ५-४५-७
ये ब्रजन्त स्वपन्तश्च तिष्ठन्तो वाप्यहर्निशम्।
उमेति द्वक्षरं नामब्रुवते ते शिवागणाः॥ —शिव पु० ५-५१-३६
सर्वभूतेषु येनैकं भावमव्ययमीक्षते।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धिसात्विकम्॥ —गीता १८-२०
सत्वं सुखे संजयति रजः कर्मणि भारत।
ज्ञानमाकृत्य तु तमः प्रमादे संजयत्युत॥ —गीता १४-९
कर्मणः सुकृतत्याहुः सात्विकं निर्मलं फलम्।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम्॥ —गीता १४-१६
उर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः।
जघन्य गुणवृत्तिस्था अधो गच्छन्ति तामसाः॥ —गीता १४-१८

२. त्वं हि वै प्रकृति सूक्ष्मा रजसत्वतमोमयी।
व्यापारदक्षा सततं सगुणानिर्गुणापि च॥ —शिव० पु० २-३-२९-२४
उपासेनऽति सौम्यां च सिंहोपरि कृतासनाम्॥ —वि० तं० १०-३६३-६
अतः संसारनाशाय साक्षिणीमात्मरूपिणीम्।
भावयेन्निर्मनष्केन योगयुक्तेन चेतसा॥ —देवी भा० ७-३९-४६
आदौ मानसिकी पूजां महापूजा ततः शिवे।
शिवादेवी शिवाकाली शिवारूपाऽहमेव हि॥ —भा० भे० तं० ४९-२
आराध्या परमा शक्तिः सर्वैरपि सुरासुरैः।
नातः परतरं किञ्चिदधिकं भुवनत्रये॥ —देवी भा० १-९-८५

३. उत्तमा पीठपूजास्यात्॥ —श० सं० तं० ६-४३

४. स्वल्पैरहोभिर्नृपते स्वं राज्यं प्राप्स्यते भवान्।
हत्वारिपूनस्खलितं तव तत्र भविष्यति॥

शक्तेः सात्विकीपूजोपासनायां च शक्तेर्ध्यानादीनां[१] विशेष महत्वं वर्तते। ये जनाः लोकेऽस्मिन् शक्तिः सात्विकी पूजोपासना च कुर्वन्ति ते सर्वाणि सुखानि प्राप्नुवन्ति।[२]

## शक्ति पूजनस्य मध्यम भेद—

सिद्धपीठे गत्वा मूर्त्यां, वेद्यां, सूर्ये, चन्द्रमण्डले, जले, बाणाकारचिह्ने, मंत्रे, चित्रपटे, हृदयरूपकमले च परमेश्वर्याः शक्तेर्ध्यानं पूजनञ्चैव शक्तेः राजसपूजनस्य (मध्यम) लक्षणम्।[३]

करुणामयी देवी सगुणां युवावस्थां धारयित्वा परमसुन्दरी अस्ति। सा सान्ध्यराग इव ललितवर्णा शोभते। सर्वांगसुन्दरी मनोरमा रमणीया अलंकरणैः विभूषिता अपि सा स्वभक्तानां प्रति करुणार्द्र स्वभावं धारयति। तस्या जगदम्बायाः मुखमण्डलं अतीवप्रसन्नं, मुकुटे बालशशिकान्तिरिव मयूरपंखम्, द्वयोः हस्तयोः पाशांकुशौर्द्वयोश्च वराभयमुद्रे इति ध्यायन्तो भक्ताः। उषाकाले ब्राह्ममुहूर्ते उत्थाय शौचस्नानादि नित्यकृत्यसम्पादनैः भूतशुद्धिं च कृत्वा गुरुं नत्वा शक्तेर्न्यासध्यानपूर्वकं कुर्वन्तः पञ्चांग पूजनं विदधति। शक्तिपूजनात्पूर्वकं गुरुं सम्पूज्य[४] पीठपूजनं च कर्तव्यम्।[५]

---

मृतश्चभूयः सम्प्राप्य जन्म देवाद्विवस्वतः।
सार्वणिको नाम मनुर्भवान् भुवि भविष्यति॥ —दुर्गा स० १३-२०/२३

१. जपात् श्रान्तः पुनर्ध्यायेत्॥ —श० सं० तं० १५-११५
उच्चैर्जपोऽधमः प्रोक्तः उपांसु मध्यमस्मृतः।
उत्तमा मानसो देवि त्रिविधा कथितो जपः॥ —कुलार्णव तंत्र १५-५४

२. आयुः श्री कान्ति सौभाग्य विद्यारोग्यादिकं भवेत्।
राजाभिषिक्तो लभते चतुः सागरगां महीम्॥ —कु० तं० १६-८९
आयुरारोग्यमैश्वर्यं विद्यालाभं यशो जयम्।
यद् यत् स्वमनसोऽभीष्टं तत्तदाम्नोत्यसंशयम्॥ —कु० तं० १६-९२

३. पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधाम्।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम्॥ —गीता १८-२१

४. गुरुं सम्पूज्य भूषाद्यैः कृतकृत्यत्वमावहेत्।
य एवं पूजयेद्देवीं श्रीमद्भुवनसुन्दरीम्॥
न तस्य दुर्लभं किञ्चित्वचाचित्वचचिदस्ति हि।
देहान्ते तु मणिद्वीप मम यात्येव सर्वथा॥ —देवी भा० ७-४०-३०/३१

५. ततः पीठं समभ्यर्च्य देवीभावाहयेत्प्रिये॥ —कुलार्णव तं० ६-६९
पीठपूजा पुरावत्वा देवी ध्याये ततः परम्॥ —देवी भा० ११-१८-५
एतेषु सर्वपीठेषु गच्छेद्यात्रा विधानतः।
सन्तर्पयेच्च पित्रादीन्छाम्बादीनि विधाय च॥

पौषाषाढाश्विनचैत्रमासानां नवरात्रिसु[१] सम्यग् विधिना ये जनाः सिद्धपीठानां यात्रां तत्र च शक्तिपूजनं कुर्वन्ति ते सकलानभीष्ठान् प्राप्तुवन्ति ।

शुभासु तिथिषु[२] मन्दिरेषु सिद्धपीठेषु च गत्वा वैदिकै स्तांत्रिकै श्चमंत्रैश्शक्तिमाराध्यशक्तेः प्राणप्रतिष्ठां कृत्वा आसनावाहनादि षोडशोपचारपूजनैः वस्त्राभूषणालङ्करणरादिभिः[३] विशेषपूजनैश्च पीठरूपा शक्तिदेवतायाः पूजनं विधेयम्[४] शक्तेः साङ्गोपाङ्ग पूजनानन्तरं होमं कर्तव्यम् पूजनान्ते क्षमापनं नमस्कारपूर्वकं आर्तिक्याद्यावाहनादि क्रियाकलापैः ढोलमृदङ्गादिवाद्यैः सह शक्तेः विसर्जनं कुर्यात् ।[५] शक्त्या सह कुमारी पूजन[६] भैरव पूजनं बलिदानं[७] च आवश्यकं वर्तते । देव्याः विसर्जनानन्तरं कन्या, सौभाग्यवतीवनिता, बालकाः ब्राह्मणाश्च भोजयितव्याः । मध्यमपूजनविधेस्तावन्महत्वं वर्तते यावदन्तर्मुखपूजनस्योत्तमस्याधिकारं न लभ्यते ।

---

कुर्याच्च महती पूजां भगवत्या विधानतः ।
क्षमापये जगध्दात्री जगदम्बा मुहुर्मुहुः ॥
कृतकृत्यं स्वमात्मानं जानीयाज्जनमेजयः ।
भक्ष्यभोज्यादिभिः सर्वान्ब्राह्मणान्भोजयेत्ततः ॥
—देवी भा० ७-३०-८७/८६

१. आश्विने मधुमासे वा तपो मासे शुचौतथा ।
चतुर्षु नवरात्रेसु विशेष फलदायकम् ॥ —देवी भा० भा० १-३१

२. अष्टभ्यां च चतुर्दश्यां नवम्यां च विशेषतः ।
मम पूजा प्रकर्तव्या बलिदान विधानतः ॥ —देवी भा० ३-२४-१८
कृष्णाष्टभ्यां नवभ्यां वामायां वा पञ्चदिक् तिथौ ।
पूजयेज्जगतांधात्री गन्धपुष्पैर्विशेषतः ॥ शिव० पु० ५-५१-४६

३. पूजानाते सदाकार्यं दासैरेनः क्षमापनम् ।
प्रसीद परमेशानि जगदानन्ददायिनी ॥ —शिव० पु० ५-५१-५०
देवी वाह्य पूजा पटल ॥ —देवी भा० ७-३६

४. अलंकार यथाशक्ति दद्यात्कल्याण हेतवे ।
पूजयेद् बहुयत्नेन बिल्वपत्रेण पार्वती ॥ —मातृकाभेद तं० ८-१७
अथवा परमेशानि यथाशत्युपचारतः ।
पूजयेद् बहुयतनेन ततो होमादिकं चरेत् ॥ —मातृकाभेद तं० ११-७
पूजयेद् परया भक्त्या बलिदानं ततः परम् ॥ —मातृकाभेद तं० ६-२६

५. कुमारी भोजनादेव कुमारी पूजनादपि ।
कुमारी चिन्तनादेव त्रैलोक्य विजयी भवेत् ॥ —श० सं० तं० ३७-५३

६. सुरा शक्तिः शिवो मांसं तद्भोक्ता भैरवः स्वयम् ॥ —कु० तं० ५-७६

७. होमकुर्यान्महाष्टम्यां नवम्यां पारणं चरेत् । —श० सं० तं० १६-५५
नवरात्रविधि कुमारीपूजन ॥ —देवी भा० ३-२६

'मद्यमयमदेयम्' इत्यादि निषेधान्मांसमद्यादियुत राजसपूजायां ब्राह्मणस्य नाधिकार: 'बलिमांसादिपूजेयं विप्रवर्ज्या मयेरिता' इत्यपि। क्षत्रियवैश्ययोर्मांसादियुत जपहोम सहित राजसपूजायामप्यधिकार: स च केवलं काम्य एव न तु नित्य:। निष्काम क्षत्रियादे: सात्विकपूजाकरणे मोक्षादिफलातिशय:। एवं शूद्रादेरपि शूद्रादेर्मंत्रहीना जपादिरहिता मांसादि द्रव्यका: तामसपूजादि विहिता:। स्वाभीष्ट सिद्धये पशु-बलिदानेनापि शक्ते: राजसीपूजाकर्तव्यमिति।[1]

शक्ते अधम पूजन प्रकार—

सांसारिकसुखोपलब्धये पशुबलि-दान-मद्य-मांसादिभिरन्यैश्च तामसैर्भक्ष्यभोज्यो-पहारै: शक्ते: या पूजा विधियते सा अधमपूजा अधमाधमपूजा वा निगद्यते।[2] अस्मिन् पूजन संविधाने तंत्र-मंत्र-यंत्राणामपि प्रयोगोविधीयते। पूजनप्रकारेऽस्मिन् च अष्ट-बलिप्रदानेन भैरव पूजनस्यापि विशेष महत्वं वर्तते। मारण-मोहन-वशीकरण-स्तम्भन-उच्चाटन मंत्रै: जना: शक्त्या सह जृम्भिणी-मोहिनी-वशीकरणी-डाकिनी-शाकिन्या-दीनामपि देवीनां पूजनं कृत्वा सद्य एव लौकिक सुखमाप्नुवन्ति।

---

१. बलिप्रदाने पूजायामग्निकार्ये महोत्सवे।
सर्वममैतच्चरितमुच्चार्यं श्राव्यमेव च॥
जानताऽजानता वापि बलिपूजा तथा कृतम्।
प्रतीच्छिष्याम्यहं प्रीत्या वह्निहोमं तथा कृतम्॥ —सप्तशती १२-१०-११
पक्षिणान् महिषान् छागान् मृगान् दिव्यैर्हि यो ददेत्।
स तु गन्धर्वगीत: सन् विमानभास्वर प्रभै:॥
देवीलोके बसेन्नित्यं ततो भूमौ समागत:।
राजास्याद्धार्मिक: सत्यवक्ता पुत्र समन्वित॥ —के० ८९-११
बलिदानेन सन्तुष्टा भवतीह न चान्यथा।
तस्मात्तस्यै बलिर्देया महदैश्वर्यमिच्छता॥ —के० ८०-१०९
अष्टम्यां च चतुर्दश्यां नवम्यां च विशेषत:।
मम पूजा प्रकर्तव्या बलिदान विधानत:॥ —देवी भा० ३-२८-१८
मांसाशनं ये कुर्वन्ति तै: कार्यं पशुहिंसनम्।
महिषाजवराहाणां बलिदानं विशिष्यते॥
देव्यग्रे निहिता यान्ति पशव: स्वर्गमव्ययम्।
न हिंसा पशुजा तत्र निघ्नतां तत्कृतेऽनघ॥
अहिंसा याज्ञिकी प्रोक्ता सर्वशास्त्रोऽपिनिर्णये।
देवतार्थे विसृष्टानां पशूनां स्वर्गतिर्ध्रुवा॥ —देवी भा० २-२६-२२-२४

२. यत्तुकृत्स्नवकस्मिन्कार्यं सक्तमहैतुकम्।
अतत्वार्थवदल्पश्च तत्तामससमुदाहृतम्॥ —गीता १८-२२

अधमपूजाविधानं स्वार्थपरत्वमेव। जनाः सततं स्वसुखोन्नतिविधान तत्परा सन्त अपरेषां जनानाञ्च दुःख हेतवः सन्तः वधादिपापेभ्योऽपि न विभ्यति। लौकिक, सुखसिद्धि सम्पादिकेयं पूजा न पारलौकिक सद्गति प्रदाने समर्थाः। अनेन पूजन विशेषोपासकाः वाक्सिद्धिमपि लभन्ते।[1] लौकिक सुखलाभाय देव्या अधमपूजनरीत्यः पुजनं कर्तव्यामिति धर्मग्रन्था अपि मन्यन्ते। शक्तेः तामसीपूजायां पशूनां पूजनस्य वलिदानस्य च विशिष्ठ महत्वं वर्तते।[2]

## ३. देवीदर्शस्य सामान्य फलम्

शक्तिसिद्धपीठानि परमपवित्राणि यशोवर्द्धकानि च सन्ति। तत्र देवीदर्शनेन मानवाः धर्मार्थकामादिफलान्युपलभ्य परिणामे शक्तेरेवस्थानं प्राप्नुवन्ति। शक्तिदर्शनेन ब्राह्मणः तेजस्वी, क्षत्रियः जगत्पतिः वैश्यो धनी, शूद्रश्च महत्वं लभते। शक्तेः सकृदपि दर्शनेन जनाः धनपुत्रान्वितो भवन्ति मूर्खं च पण्डितं विदधति। ये जनाः सिद्धपीठेषु गत्वा शक्तेः दर्शनं कुर्वन्ति तेषां सर्वाण्येवाशुभानि प्रणश्यन्ति स्वेष्टफलञ्च ते प्राप्नुवन्ति—एतद्दर्शनं[3] धनदायकं, यशोवर्द्धकं, रोगनाशकं, आयुर्वृद्धिकरं, शोकध्नं, अपमृत्यु-

---

१. वाक्सिद्धिर्लभते देवी नात्रकार्या विचारणा। —श० सं० तं० ४९-५३

२. यज्ञार्थ पशवः सृष्टा यज्ञार्थ पशुघातनम्।
अतस्त्वां घातयिष्यामि तस्माद्यज्ञे वधोऽवध॥ —वि० तं० १७-५१९-१
जिह्वाग्ररुधिरं गृह्ण चामुण्डेघोरनिः स्वने।
बलिभुक्त्वा वरं देहि रुधिरं गहने वने॥ —विद्यार्णव तं० १७-४६०-१४
सर्वभांसं सुरायुक्तं दद्यात् देव्यै विशेषतः॥ —वि० तं० १७-५०७-७
शिवा बलिश्च दातव्या शिवा पूज्या निरन्तरम्॥
—श० सं७ तं० ४९-३
पूजयेत् परया भक्त्या बलिदानं ततः परम्॥ —मा० भे० तं ६-२९
बलिदानं महायज्ञं कालिकाले च चण्डिके॥ —मा० भे० तं १०-१६
केवलं बलिदानेन अश्वमेधफलं लभेत्॥ —भा० मे० तं० 10-१७
विधिनानेनदेवेशि सौभाग्यमतुलं लभेत्॥ —कु० तं० १६-६८

३. बभूव परमा देवी दर्शनात्पापहारिणी॥ —शिव पु० २-३-१-४२
देवीदर्शनं वरदानच॥ —देवी भा० ५-३५
अत्र देवगणाः सर्वे विष्ण्वाद्या दर्शनेप्सवः॥
ददृशु जगदम्बां तां तत्कृपा प्राप्य तत्र हि॥ —शिव पु० ३-४-७
जगदम्बा महेशी त्वं शिवस्साक्षात्पतिस्तवः।
तब दर्शनतो नार्यो भवन्ति हि पतिव्रता॥ —शिव पु० २-३-५४-८
शक्त्या दर्शनमात्रेण पुरुषार्थ चतुष्टयस्।
अनायासेन लभते कस्त्यजेतां नरोत्तमः॥ —शिव पु० ५-५४-१२

शमनं, शान्तिकरं, भुक्तिदं, मुक्तिदं, सर्वकामप्रदं, बुद्धिप्रज्ञादिसाधनं, राज्यलाभप्रदायकं, दुःस्वप्ननाशकं, दुर्ग्रहग्रहपीडादिदोषोन्मूलकं, संकलपत्रयपूरकं, तापत्रयविनाशकश्च भवति । किं बहूनोक्तम्—मूलप्रकृतेर्जगन्मातु शक्तेः भुवनेश्वर्य्या दर्शनस्यफलं वर्णनं तु दुः शक्यमेव । शाक्ताः निस्सन्देहोऽत्र सर्वेश्वयं प्राप्नुवन्ति ।

नित्य नैमित्तिक भेदेन द्विविधा भवति शक्तिपूजा ।[1] नित्य पूजायास्तु प्रतिदिन-पूजनमेवेत्यर्थः । विशेवष्वसेरेषु पर्वदिवसेषु च क्रियमाणा शक्तैर्महापूजा नैमित्तिक-पूजेत्युच्यते । शक्तेर्विशेषपूजेयं शुभे मासि चन्द्रताराऽनुकूले तिथिनक्षत्रवारयोगादि[2]

---

स्नानञ्च सर्वतीर्थानां सर्वयज्ञेषु दीक्षणम् ।
सर्वेषाञ्च व्रतानां च तपसां फलमेव च ॥
पाठे चतुर्णां वेदानां प्रादाक्षिण्यं भुवस्तथा ।
फलंभूतमिदं सर्वं मुक्तिदं शक्तिसेवनम् ॥ —देवी भा० ६-३०-१३३-३४
आयुः श्रीकान्तिसौभ्याग्यं विद्यारोग्यादिकं भवेत् ।
राजाभिषिक्तो लभते चतुः सागरगां महीम् ॥ —श० सं० तं० १६-८६
आयुरोरौग्यमैश्वर्यं विद्यालाभं यशो जयम् ।
यद् यत् स्वमनसोऽभीष्टं तत्तदाप्नोत्यसंशयम् ॥ —श० सं तं० १६-६२
त्वद्दर्शनादहमहो सुकृती कृतार्थो ।
त्रातोऽस्मि देवि भुनेश्वरी धन्यजन्या ॥
बीजं न ते न भजनं किलवेदितव्यम् ।
गीतिस्तवाद्य महिमा प्रकटप्रभावः ॥ —देवी ३-२३५४
ब्रह्माऽपि वांच्छति सदैव हरो हरिश्च ।
सेन्द्राः सुराद्य मुनयो विदितार्थ तत्वाः ॥
मद्दर्शनं जननि ? ते ऽद्य मया दुरापं ।
प्राप्तं बिना दमशमादिसमाधिभिश्च ॥ —देवी ३-२३४६
नापराधोऽस्ति देवस्य कर्मण्यपि तु निष्फले ।
यथोक्तकारिणां पुंसामिहैव फलदर्शनात् ॥ —शि० पु० ७-३२-८

१. नित्यार्चनं दिवा कुर्यादात्रौ नैमित्तिकार्चनम् ।
उभयो काम्यकर्माणि चेति शास्त्रस्य निर्णय ॥ —वि० तं० १५-३८६-१

२. तिथि—द्वितीया, तृतीया, पंचमी सप्तमी, अष्टमी, नवमी, द्वादशी, त्रयोदशी, चतुर्दशी ।

बार—रवि, बुध, गुरु, शुक्र ।

नक्षत्र—अश्विनी, रोहिणी, आर्द्रा, पुर्नवसु, पुष्य, उत्तरात्रयम्, हस्त, चित्रा, स्वाती, अनुराधा, धनिष्ठा, रेवती ।

योग—प्रीति, आयुस्मान्, सौभाग्य, शोभन, सुकर्म, धृति, वृद्धि, धुव सिद्धि, हर्षण, बरीयान्, शिव, सिद्ध, ब्रह्म, ऐन्द्र ।

शोधिते नित्यपूजानन्तरं रात्रौ यथाबलं यथाश्रद्धं यथाकालं यशोदेशं यथाविस्तारं वित्तशाठ्यरहितं यथोक्तद्रव्यैर्यथागुणरूपदेशं गृहीत्वा शान्तचेतसा कर्तव्या इति । विशेष-पूजन-व्रत-यज्ञ-पुरश्चरणादि काले विहितकर्माणीहदीयन्ते ।

व्रतकाले—भूतानि न हिंस्यात् किञ्चिन्न शपेत्, मिथ्यान्न वदेत्, नखरोमाणि न छिन्द्यात्, निषिद्धंवस्तु नसंस्पृशेत्, जले प्रविश्य स्नानं न कुर्यात्, कोपं वर्जयेत् दुर्जनैः सह भाषणं न कुर्यात्, अधौतवस्त्रं पूर्वधृतां मालां च न धारयेत्, उच्छिष्टं देव्यैः समर्पितं पिपीलिकादुष्टं रजस्वलाद्दष्टमन्नं मासं निषिद्धमन्नं च न भक्षयेत्, अधौतपादम्, आर्द्रचरणं उदकशिरः पश्चिम मस्तकम् उभयोर्सन्ध्ययोर्नग्नं मुक्तकेशं नग्नशिरः गृहाद्वहि न व्रजेत् न शयीत, धौतैवस्त्रं घृत्वा सर्वमंगलसंयुतां भोजनात्पूर्वं सुवासिनीं कुमारीं गोविप्राञ्च पूजयित्वा स्निग्धान्नं मिष्ठान्नं भोजयेत् ।

व्रतकाले भोज्यानि-भैक्ष्यं-शुक्लैकविधास्विन्नहैमन्त्रिक नीवारषष्ठिकांगुण्य शूद्रानवहताः बहुशः पादाम्यामनुतोल्याबहता गुर्वजितमैक्षवं, कृष्णतिलमुद्गकलायाः केमुकवर्जकन्दविशेषाः नारिकेलकदलीफललवलीपन साम्रामल कार्द्रहरकतकीवास्तुककाल शाकहिसमोचका; सैन्धवसामुद्रेलवणेऽनुद्धृता साराणि गव्यानि, पिप्पलीजीरकनागरं-गति मूलकानि ।

वर्ज्यानि-गुड कृत्रिमलवणक्षारलवणस्विन्नपर्युसितानि-स्नेहकीटादिदूषित कांजिकागृंजनविल्वकरंजलशुनमृणाल —कोद्रबमण्डकतैलपक्वमासमसूरचणकगोधूमदेव-धान्यादीनि अतिभोजनं दिवाभोजनं वा ।

शयनम्—कुशनिर्मितायां शय्यायां प्रक्षालितायां क्षाराद्भिः प्रक्षालितं वस्त्र-मास्तीर्य शय्यांषड्जाग्रतादि[1] मूलमन्त्रैरामंत्र्य पूर्व-पश्चिम, दक्षिण वा शिरो कृत्य शयितव्यमिति ।

---

१. षाज्जाग्रतोदूरसुदैतिदैवन्तदुसुप्तस्य तथैवैति ।
दुरंगमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मेमनः शिवसंकल्पमस्तु ।५।
षेनकर्म्मर्ण्यपसोमनीषिणोयज्ञेकृण्वतिव्विदथेषुधीराः ।
यद्पूर्वंय्यक्षमन्तः प्प्रजानान्तन्मेमनः शिवसंकल्पमस्तु ।६।
षत् प्रज्ञानमुतचेतोधृतिश्चषज्ज्योतिरन्तरमृतम्प्रजासु ।
यस्म्मान्नऋतेकिञ्चनकर्म्मक्रियते तन्मेमनः शिवसंकल्पमस्तु ।७।
षेनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेनसर्व्वम् ।
येनयज्ञस्तायतेसप्प्तहोतातन्मेमनः शिवसंकल्पमस्तु ।८।
यस्म्मिन्नृचसामषजूँषस्म्मिन्प्रतिष्ठ्ठितारथानाभाविवाराः ।
यस्म्मिंश्चितँ सर्व्वमोतम्प्रजानान्तन्न्मेमन : शिवसंकल्पमस्तु ।९।
सुषारथिररश्वानिवषयन्न्मनुष्य्यान्नेनीयतेभीशुभिर्व्वाज्जिनऽइव ।
हृत्प्रतिष्ठ्ठन्षदज्जिरञ्जविष्ठन्तन्मेमनः शिवसंकल्पमस्तु ।१०।
—यजुर्वे० रुद्राष्टाध्यायः

पुरश्चरण काले यज्ञकाले च विहितानि—मनः संहरणाशौच मौनमंत्रार्थ चिन्तनाव्यग्रतानिर्वेदश्रद्धाजपोत्साहक्रोधत्यागस्ववर्णाश्रमधर्मानुष्ठानपरितुष्टतेन्द्रियब्रह्मचर्यगुरुनतिकेवलामलकस्नानमंत्राभिमंत्रितजलाभिषेका:, त्रिषवर्णद्विसवनमक्तौ सकृद्वास्नानं देर्वाषिपितृस्वेष्टदेवतातर्पण मध्यपत्र रहितपलाशपत्र रहितपत्रावल्यां रात्रौ भोजनं गोविप्रबालादिष्वनुकम्पाचेति ।

## शक्ति यंत्र पूजा

सिद्धपीठेषु शक्तेः पीठ पूजा-यंत्रपूजा-मूर्तिपूजा च प्राचीनकालादेव प्रचलिता वर्तते । एतासु पीठपूजा. सात्विकीपूजा[1], यंत्रपूजा[2] राजसीपूजा, मूर्तिपूजा च तामसी-पूजा कथ्यते । महाकवेः व्यासस्याभिमते[3] अन्येषामर्चनानामभावे शक्तियंत्रस्य पूजनं कर्तव्यमिति ।

## शक्तियंत्रस्य पूजा विधि

शुक्लपक्षस्य सप्ताम्या मष्टम्यां नवम्यां वा तिथौ प्रातःकाले स्नात्वा शक्ति[4] नमस्कृत्य हस्तषोडशपरिमितां वेदिकां निर्माप्य तस्योपरि वा स्वर्णरजतताम्रादि-

---

१. उत्तमा पीठपूजास्याद्यंत्र पूजा च मध्यमा ।
अधमामूर्तिपूजा च पादपूजा वृथा भवेत् ॥ —श० सं० तं० ६-४३
पीठरूपा समुद्रादितनया क्षेत्ररूपिणी ॥ —वि० ते० ३-५१-२
ततः पीठं समभ्यर्च्य देवीमाबाहयेत्प्रिये ॥ —कु० तं० ६-६९
पीठपूजा पुरा कृत्वा देवीध्यायेत्ततः परम् ॥ —देवी० भा० ११-१८-५
पीठानि संस्मरेद्विद्वान् सर्वकमार्थसिद्धये ॥ —वि० तं० ६-१२७-२

२. यंत्र मंत्रमयं प्रोक्तं देवता मंत्ररूपिणी ।
यंत्रे सा पूजिता देवि सहसैव प्रसीदती ॥ —कु० तं० ६-८५
अहो यंत्रस्य माहात्म्यं मयावक्तुं न शक्यते ।
अहो धन्यमहो धन्यं यंत्रं ज्ञानं निरन्तरम् ॥ —श० तं० ५२-२२

३. अर्चाभावे तथा यंत्रं नवार्णमंत्र संयुतम् ।
स्थावयेत्पीठपूजार्थं कलशं तत्र पार्श्वतः ॥ —देवी भा० ३-२६-२१

४. हरिर्हरौ विरञ्चिश्च सृष्ट्यादीन् कुरुते यया ।
प्रातस्त्रिपुरसुन्दर्या नमामि पादपंकजम् ॥ —वि० तं० १४-३७४-३
शंखचक्रधनुर्वाणान् धारयन्ती त्रिलोचनाम् ।
दूर्वादलनिभां बन्दे दुर्गा दुर्गति हारिणीम् ॥
कपालं खेटकं चैव त्रिशूलं बिभ्रतीं करैः ।
भिन्नांजनचयप्रख्यां भद्रकालीं नमाम्यहम् ॥ —वि० तं० ५-१०२-७९

पट्टिकासु च शक्तियंत्र विलिख्य[1] तन्मध्ये शक्तिं प्रतिष्ठाप्य[2] ओं रक्ष-रक्ष हुं फट्[3] स्वाहा इति मंत्रेणासन भूमिमभ्युक्ष्य ओं पवित्र वज्रमये रक्ष-रक्ष हुं फट् स्वाहा इति मंत्रेण भूमिमभिमंत्र्य आ सुरेखे वज्ररेखे हुं फट् स्वाहा इति भूमौ विलिख्य तदुपर्य्युपविश्य यंत्रस्य पूर्वादिदिक्षुमध्ये ब्रह्मविष्णुरुद्रेश्वरसदाशिवान् सम्पूज्य यंत्रमध्येस्थितभव्याकृतं शक्तिस्वरूपं संचिन्त्य कोषमध्ये पीठं सम्पूज्य मातृकामण्डलं ध्यात्वा भूमिं संप्रार्थ्य दीपनाथं सम्पूज्य गणेश कलश-षोडशमातृका-अष्टवसुदेवता-नवग्रहादीनां पूजनं कुर्यात्। यंत्र मध्ये प्रतिष्ठितायाः शक्त्याः दक्षिणहस्ते गं गणपतयेनमः। वामे दुं दुर्गायै नमः। दक्षिणजानुनि क्षं० क्षेत्रपालाय नमः। वामजानुनि सं० सरस्वत्यैनमः ओं श्रीगुरुभ्यो नमः। ओं परमगुरुभ्यो नमः। ओं परमेष्टिगुरुभ्यो नमः इति शक्तिरूपर्यक्षतान् क्षिप्त्वा शक्तेः प्राणप्रतिष्ठां[4] कृत्वा गुरुं नत्वा[5] षडंगन्यासान् कृत्वा[6]—

---

१. भूमौ सिन्दूररजसा रचितं सर्वकामदम्।
सुवर्ण रचितं यंत्रं सर्वकाम वशंकरम्॥
रजतेन कृतं यंत्रमायुरारोग्य कामदम्।
ताम्रे तु रचितं यंत्रं सर्वैश्वर्यप्रदंभवेत्॥ —बि० तं० ८-१८७-१-२

२. यंत्रंसंस्थापयेदेवि सर्वसिद्धि प्रदायकम्।
यंत्रं त्रिकोणमित्युक्तं तत्रस्थं परमेश्वरी॥ —श० सं० तं० ५३-१४

३. फट् च प्रष्टौ वषट्वश्ये, हुं फट् चैव तु मारणे।
स्तम्भने च नमः प्रोक्तं स्वाहा शान्तिकपौष्टिके॥
होमतर्पणयोर्स्वाहा न्यासपूजनयोर्नमः॥ कु० तं० १६-४३-४४

४. ओं अस्य श्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुरुद्राऋषयः ऋग्यजुसामानि छन्दांसि चैतन्यरूपा प्राणशक्तिर्देवता ओं बीजं ह्रीं शक्ति क्रौं कीलकं प्राणस्थापने विनियोगः। तत्र मंत्र—ओं ऐं ह्रीं श्रीं आं ह्रीं क्रोंयं रंलंशंषं होंसोहं हंसः श्रीमन्महा-त्रिपुरसुन्दर्याः प्राणा इह प्राणाः जीव इह स्थितः सर्वेन्द्रियाणि वाग्मनश्चक्षुस्त्वह-श्रोमप्राणप्राणा इहागत्य सुखं तिष्ठन्तु स्वाहा इति मंत्रेण शक्तेः प्राणप्रतिष्ठां कुर्यात्। —वि तं ५-१०८

५. गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निरोधकः।
अन्धकार निरोधत्वाद् गुरुरित्यभिधीयते॥ —कु० तं० १७-७
श्रीगुरुं परमं तत्वं तिष्ठन्तं चक्षुरग्रतः।
मन्दभाग्या न पश्यन्ति ह्यन्धासूर्यमिवोदितम्॥ —कु० तं० १३-९५
न सिध्यन्ति क्रिया कापि सर्वेषां सद्गुरुं बिना।
मयाश्रुता पुरा सत्यं श्रुतिरेषा सनातनी॥ —शि० पु० १३-२१-३३

६. न्यासान्निवर्तयेद्देवि षोढ़ान्यासापुरस्सरम्।
गणेशे प्रथमो न्यासो द्वितीयश्च ग्रहैर्मतः॥
नक्षत्रैश्च तृतीयः स्याद्योगिनीभिश्चतुर्थकः।

## शक्ति यंत्रम




देवीषटकोण मध्यस्था यंत्रराजोपरिस्थिता । देवी भा० ३-३-४६ ॥ अर्चाभावे तथा यंत्रं नवार्ण मंत्र संयुतम् । देवी भा० ३-२६-२१ ॥ इच्छाज्ञानक्रियाशक्ति-स्त्रिपुकोणेषु पूजयेत् मध्ये देवीं हेतिनूतां पूजयेदष्टमी शिवाम् । विद्या० तं० पू० १४-३६५-८ ॥ पूजयेच्चाष्टयुग्मके । विद्या० तं० १४-३६५-६ ॥ पूजयेतषोडशद्वये । विद्या० तं० १४-३६५-१३ ॥ गुरुमण्डलपूजादि साधारणमुदीरयेत । मातृका भेद तं० १४-३६८-८ ॥ यंत्रं त्रिकोणमित्युक्तं तत्रस्थं परमेश्वरी । मातृतका भेद तं० १३-३४ ॥ इच्छाशक्तिः क्रियाशक्तिर्ज्ञानशक्तिः समन्विता । देवी भा० १२-१२-३४ ॥ ततः परात्पराशक्तिः परमा त्वं हि गीयसे । इच्छाशक्तिः क्रियाशक्तिर्ज्ञानशक्ति-स्त्रिशक्तिदा । देवी भा० १२-५-१६ ॥

भैरवंसंपूज्य[1] रात्रौ[2] शक्तियंत्रमध्ये स्थितायाः देव्याः पूजां च कुर्यात्। यंत्र स्थितानां सर्वासां शक्तेर्विभूतीनां पूजनमपि पञ्चोपचार षोडशोपचार विधिना सम्पाद्य अन्ते च बलिदानेन[3] शक्तेः पूजनं कर्तव्यमितियंत्र पूजनस्य संक्षेपः।

देवीयज्ञ—

सिद्धपीठेषु शक्तियज्ञपरम्परा प्राचीनकालादेवप्रचलिता आसीत्। अधुनाऽपि बहवो देवीभक्ताः नवरात्रावसरेषु सिद्धपीठेषु गत्वा देवी मरवनामकं यज्ञं कुर्वन्ति। यज्ञमिदं महाकाली-महालक्ष्मी-महासरस्वती स्वरूपात्मिकायाः शक्तेरादिदेव्याः प्रसाधनार्थं भवति।

पात्रभेदेन कर्मणा विधिदृष्टेनं च त्रीणि सन्ति दुर्गयज्ञकर्माणि मुनीनां सात्विकं[4]—

---

राशिभिः पञ्चमोन्यासः षष्ठपीठैर्निगद्यते ॥ —वि० तं० ६-१२३-१-२
विनामुद्रां न्यसेद् यस्तु न्यासो भवति निष्फलः ॥—गा० तं० १
यो न्यासकवचच्छन्नो मंत्रं जपति तं-प्रिये।
विघ्ना दृष्ट्वा पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥
—वि० तं० ११५-५

१. योगिनी चक्रमध्यस्थं मातृमण्डल वेष्टितम्।
नमामि शिरसा नाथं भैरवं भैरवी प्रियम् ॥ —कु० तं० ८-३२

२. शिव प्रदोष सम्पूज्य शक्तिं रात्रौ प्रपूजयेत् ॥ —श० सं० तं० ६१-५०
रात्रौ पूजा विशेषेण कर्तव्या सिद्धिमिच्छता ॥
—वि० तं० १७-५०२-१४

३. शुक्लाष्टम्यां बलिदत्वा अश्वमेधफलं लभेत् ॥
शरत्काले महाष्टम्यां न च दद्यान्महाबलिम् ॥ —गा० तं० ४६
कृष्णछागद्वयं भद्रे महिषद्वयमेव च।
महाबलिरिति प्रोक्तो महाष्टम्यां परित्यजेत् ॥ —गा० तं० ५०

४. सात्विकस्तु महाराज दुर्ल्लभो वै मरवस्मृतः।
वैरवानस मुनीनां हि विहितोऽसौ महामरवः ॥
सात्विकं भोजनं ये वै नित्यं कुर्वन्ति तापसाः।
न्यायार्जितं च वन्यं च तथा ऋष्य सुसंस्कृतम् ॥
पुरोडासपरा नित्यं वियूपा मंत्रपूर्वकाः।
श्रद्धाधिका मरवा राजन् सात्विका परमाः स्मृताः ॥
—देवी भा० ३-१२-३४/३६

अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते।
यष्टव्यमेवेति मनः समाधाय स सात्विक ॥ —श्रीमद्भ० १७-११

नृपाणां राजसं[२] राक्षसाणां तामसं[२] चेति, किन्तु ज्ञानसम्पन्नानां महात्मा-पुरुषाणां निर्गुण-ज्ञानमये मानसिके[३] द्वे यज्ञे भवतः।

यज्ञ विधि—

शक्तियज्ञे विहितानि कर्माणि-अखण्डदीपयवांङ्कुराचारप्राप्त—मालाबन्धनैक-भक्तादिनियम—कुमारी भोजन[४] सुवासिनि भोजन दुर्गासप्तशतीमार्कण्डेयपुराण पाठ-देव्याः ध्यान[५] स्तोत्र—

---

१. राजसा द्रव्यबहुलाः सयूपाश्च सुसंस्कृताः।
क्षत्रियाणं विशां चैव साभिमानश्च वै मरवाः॥
—देवी भा० ३-१२-३७

अभिसंधाय तु फलं दम्भार्थमपि चैव यत्।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम्॥ —गीता १७-१२

२. तामसा दानवानां वै सक्रोधा मदवर्धकाः।
समर्षाः संस्कृताः क्रूराः मरवाः प्रोक्ता महात्मभिः॥
—देवी भा० ३-१२-३८

विधिहीनमसृष्ठान्नं मंत्रहीनमदक्षिणम्।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते॥ —गीता १७-१३

३. मुनीनां मोक्षकामनां विरक्तानां महात्मनां।
मानसंस्तु स्मृतोयाग सर्वसाधन संयुतः॥ —देवी भा० ३-१२-३९

४. होमतर्पण मंत्राद्यैर्न्यासध्यानविशेषकैः।
आत्मनश्च परस्यापि षट्कर्माणि समाचरेत्॥ —कु० तं० १६-११
कुमारी भोजनादेव कुमारी पूजनादपि।
कुमारी चिन्तनादेव त्रैलोक्य विजयी भवेत्॥ —श० सं० तं० ३७-५३

५. न हि ध्यानात्परो मंत्रो न देवस्त्वात्मनः परः।
नानु सन्ध्यात्परा पूजा न हि तृप्तेः परं फलम्॥ —कु० तं० ९-३८
जपात् श्रान्तः पुनर्ध्यायेदध्यानात् श्रान्तः पुनर्जपेत्।
जपध्यानादि युक्तस्य क्षिप्रे मंत्रं प्रसिध्ययति॥ —कु० तं० १५-११५
देवीं ध्यात्वा जपेन्मंत्रनिष्टसिद्धिभवाप्नुयात्॥
—श० सं० तं० ४९-३३

न वेदेन बिना यज्ञा न वेदा यज्ञ वर्जिता।
तस्माद्वेदः परोमंत्रो न मंत्रो वेद उज्झितः॥ —वि० तं० २-२८-४
जकाराज्जन्मविच्छेदः पकारः पापनाशकः।
तस्माज्जप इति प्रोक्तो जन्मपाप विनाशकः॥ —अग्निपुराणात्
जपं रात्रौ विवर्जयेत्॥ —देवी भा० ११-२३-२३

नवार्णवमंत्रजप[1] पुरश्चरणादीनि[2] भवन्ति। बलिदानकर्मणा देव्याः राजसतामसयज्ञे भवतः। शुभमूहर्ते नक्षत्रग्रहवाराणामनुकूल-स्थित्यामेव मखमण्डपनिर्माणं[3] लिंगात्मकभद्रनिर्माणं कलश-स्थापनं-स्तम्भारोपणं-वितानबन्धनं-पताकोद्घाटनं-यवाङ्राणामारोपणं विदुषांवरणं[4] च कर्तव्यम्।[5] शक्तेर्याज्ञिकी पूजा प्रतिष्ठा च विद्वद्भिरेव कर्तव्या इति। शक्तियज्ञं शस्त्रोक्तरीत्यैवकर्तव्यम्। विधिहीन यज्ञेन यज्ञकर्तॄणां महान्त्यनिष्ठानि सम्भवन्ति।[6]

ये जनाः शास्त्रोक्तविधिना शक्तियज्ञं विदधति ते सहस्राणां राजसूयादि यज्ञानां फलं निश्चितमेव प्राप्नुवन्ति[7] अतः सर्वेषु शास्त्रेषु शक्ति यज्ञस्य विशिष्ठमहत्वं वर्तते।[8]

## नवरात्रपर्वषु[1] शक्तिपूजन परम्परा—

भारतवर्षे सिद्धपीठयात्रायाः सिद्धपीठेषु नवरात्रव्रतस्य नवरात्रिषु शक्तेः-

---

१. ओं ऐं ह्रीं क्लीं चामुण्डायैविच्चै इति। (नवार्णवमंत्र)

२. जपोहोमस्तर्पणं च सेको ब्राह्मण भोजयेत्।
पञ्चाङ्गोपासनं लोके पुरश्चरणमुच्यते॥ —वि० तं० १६-४०६-१

३. नक्षत्रग्रहवाराणामनुकूले शुभेऽहनि।
पुण्याहं वाचयित्वा तु मण्डपं रचयेच्छुभम्॥ —११-२७५-२

४. विप्रैः सन्तोषितै कार्यं सम्पूर्णं सर्वथा भवेत्।
नवपंचत्रयश्चैको देव्याः पाठे द्विजाः स्मृताः॥ —देवी भा० ३-२६-१६

५. यो हि विद्वानुच्चारणं यथाकरोति तथा न किमपि स्वरं न किमप्यक्षरं न किमपि पदमस्फुटं स्यात् स यज्ञकर्मण्यधिकारी भवितुमर्हति।
विनापात्रेण यः कुर्यात् प्रतिष्ठा याज्ञिकी क्रिया।
विफला जायते सर्वाः वाहनादि धनापहा।

६. बलिहीने तु दुर्भिक्षं गन्धहीने त्वभाग्यता।
धूपहीने तथोद्वेगं वस्त्रहीने धनक्षयम्॥
छत्रहीने हरेच्छत्रं वितानेन बकोभवेत्॥
वेदिहीने तु नाशस्यान्नगरस्य प्रशस्य च।
कलशैर्वधुनाशश्च भवेदवैः गिरिकन्यके॥ —वि० तं० ९-१९५-१-३

७. राजसूय सहस्राणा फलमाप्नोति निश्चितम्।
देवी यज्ञात्परो यज्ञो नास्ति वेदे फलप्रदः॥ —देवी भा० ९-३०-१२५

८. सर्वेभ्योऽपि मखेभ्यो हि परो देवी मखस्मृतः॥
—देवी भा० ९-३०-११८
शक्तियज्ञः प्रधानश्च सर्वयज्ञेषु सुन्दरी॥ —देवी भा० ९-३०-१२०

९. नवशक्तिभिः संयुक्त नवरात्र तदुच्यते।
एकैव देवदेवेशि नवधा परिनिष्ठिता॥ श० सं० तं० १६-२

पीठपूजनस्य, सिद्धपीठे स्थित शिवशक्त्यात्मकलिङ्गस्य च पूजन परम्परा प्राचीन-कालादेव प्रचलिता वर्तते। त्रेतायुगे ऋषेः नारदस्योपदेशेन मर्यादा पुरुषोत्तमरामः लंकापतेः रावणस्य वधाय शारदीयं नवरात्रव्रतं शक्त्याः पूजनं चाकरोत्। येन प्रभावेण स लंकां विजित्य रावणं कुम्भकणं च हतवान् स्वपत्नी त्रिलोकजननीं रावणेनापहृतां जानकीं च समुपलब्धवान्।[१]

इदं नवरात्रव्रतं पुरा खलु विश्वामित्रभृगुवशिष्ठकश्यपादि ऋषियोऽपि चक्रुः। येन[२] व्रतप्रभावेण देवगुरुः बृहस्पतिः चन्द्रेणापहृतां स्वभार्या तारांमुपलब्धवान्[३] नवरात्रव्रत प्रभावेण इन्द्रः स्वरिपुं वृत्रासुरं जघान, त्रिपुरदानवस्य नाशाय शिवोऽपि इदं व्रतमकरोत्[४], मधुदैत्यस्य वधाय विश्वात्मा भगवानपि एतद्व्रतं चकारेति[५] सर्वं नारदो रामचन्द्रं न्यगादीत्। रामचन्द्रस्य मनोवांछितसिद्धये देवर्षिनारदः शक्तेर्महत्वम-प्यवर्णयत्।[६] भारतवर्षे मन्दबुद्धय[७] एव शक्तेरर्चनादिषु विश्वासं न कुर्वन्ति—ते

---

१. नवरात्रोपवासं च भगवत्याः प्रपूजनम्।
सर्वसिद्धिकरं राम ! जपहोमविधानतः॥
मेध्यैश्च पशुभिर्देव्या बलिंदत्वाविशंसितैः।
दशांश हवनं कृत्वा सुशक्तस्त्वं भविष्यसि॥
विष्णुना चरितं पूर्वं महादेवेन ब्रह्मणा।
तथा मघवता चीर्णं स्वर्गमध्यास्थितेन वै॥
सुखिना रामकर्तव्यं नवरात्रव्रतं शुभम्।
विशेषेण च कर्तव्यं पुंसां कष्टमतेन वै॥

२. विश्वामित्रेण काकुत्थ ! कृतमेतन्न संशयः।
भृगुणाऽथ वसिष्ठेन कश्यपेन तथैव च॥

३. गुरुणा हृतदारेण कृतमेतन्महाव्रतम्।
तस्मात्वं कुरु राजेन्द्र ! रावणस्य वधाय च॥

४. इन्द्रेण वृत्रनाशाय कृतं व्रतमनुत्तमम्।

५. त्रिपुरस्य विनाशाय शिवेनापि पुरामतम्॥

६. हरिणा मधुनाशाय कृतं मेरौ महामते।
विधिवत् कुरु काकुत्थ व्रतमेतदतन्द्रित॥ —देवी ३-३०-१८

७. श्रृणु राम ? सदा नित्या शक्तिराद्यासनातनी।
सर्वकाम प्रदा देवी पूजिता दुःखनाशिनी॥
कारणं सर्व जन्तूनां ब्रह्मादीनां रघुद्वह।
तस्याः शक्तिं विना कोऽपि स्पन्दितुंन क्षमोभवेत्॥
विष्णोः पालनशक्ति सा कर्तृ शक्तिः पितुर्मम।
रुद्रस्य नाशशक्तिः सा त्वन्या शक्ति पराशिवा॥
यच्च किंचित्कचिद्वस्तु सदसद्गुणनामये।

स्वजीवनमन्धकूपेषु निपतन्ति ।[1]

## नवरात्रपर्वषु व्रत-पूजन-विधि—

आश्विनचैत्रमासयो[2] रामावास्यां तिथौ भक्तिपूर्वकं सर्वां सामग्रीं सम्पाद्य

---

तस्य सर्वस्य या शक्तिस्त्वदुत्पतिः कुतो भवेत् ।।
न ब्रह्मा न यदा विष्णुर्न रुद्रो न दिवाकरः ।
न चेन्द्राद्याः सुराः सर्वे न धरा न धराधराः ।।
तदा सा प्रकृति पूर्णा पुरुषेण परेण वै ।
संयुता विहरत्येव युगादौ निर्गुणा शिवा ।।
सा भूत्वा सगुणा पश्चात्करोति भुवनत्रयम् ।
पूर्वं संसृष्ट्य ब्रह्मादीन्दत्वा शक्तिश्च सर्वशः ।।
तां ज्ञात्वा मुच्यते जन्तुर्जन्म संसार बन्धनात् ।
सा विद्या परमा ज्ञेया, वेदाद्या वेदकारिणी ।। —देवी भा० ३-३०-२८-३५

१. न या स्वकीयं विजहाति भारतं
मदानने नृत्यति चाऽप्यनारतम् ।
सरस्वती सा जननीव मद्वचः
कथं न कुर्यात् प्रतिभा प्रभारतम् ।।
भणच्चलाच्चित्रपटप्रिये जने
वृथा यथा शास्त्रपुराण जल्पना ।
तथाद्य यूनां निवहं प्रभा हृते
वृथाऽस्मदीया रणकीर्ति कल्पना ।।
—प्रताप० ना० क्षणसमीक्षणम् शीर्षक १-२

ते मन्दास्तेऽति दुर्भाग्या रोगैस्तै समभिद्रुता ।
येषां चित्ते न विश्वासो भवेदम्बार्चनादिषु ।। —देवी भा० ३-१८-२६
सर्वत्र भारते लोके सर्ववर्णेषु सर्वथा ।
भजनीया भवानी तु सर्वेषामभवत्तदा ।।
शक्तियन्तिरताः सर्वे मानिनश्चाभवन्नृप ।
आगमोक्तेरथ स्तोत्रजपध्यानपरायणाः ।।
नवरात्रेषु सर्वेषु चक्रुः सर्वे विधानतः ।
अर्चनं हवनं यागं देव्या भक्तिपरा जनाः ।। —देवी ३-२५-४४-४६

२. द्वावेव सुमहाघोरावृतु रोगकरौनृणाम् ।
बसन्तशरदावेव सर्वनाशंकरावुभौ ।।
तस्मात्तत्र प्रकर्तव्यं चण्डिका पूजनं बुधैः ।
चैत्राश्विने शुभे मासे भक्तिपूर्वनराधिपः ।। —देवी भा० ३-२६-६-७

सिद्धपीठेषु गत्वा यज्ञकर्मण्यधिकारिणः सुशिक्षितानाचारनिरतान् देवीतत्व विशारदान् द्विजानाहूय[1] शुभेस्थले देवी मन्दिरे वा हस्तषोडशमानेन वेदिकां विरच्य चतुर्षुकोणेषु कदलीस्तम्भानुद्घाट्य तत्र वितानतोरणपताकादीनि प्रकल्य आमावास्या प्रतिपत्योः सन्धिकाले पूर्वाभिमुखं तिलतेलेन दीपं प्रज्वाल्य व्रतोपवासादि नियमान् परिपाल्य प्रतिपदायां तिथौ गणेशादि पंचागं पूजनं कृत्वा वेदिकायां यवबीजानि प्रक्षिप्य वेदिमध्ये पयसापूरितं अश्वत्थाम्रादि पंचपल्लवैः संयुक्तं ताम्रकलशं संस्थाप्य कलशोपरि श्रीफलं निधाय्य तत् पीतवस्त्रेणाच्छाद्य पूर्वमंत्रित ब्राह्मणानां पाद्यार्घ्यमधुपर्कादिकैश्च पूजनं विधाय्य तेषां वस्त्रपात्रादिद्रव्यैः वरणंकृत्वा शिवशक्त्यात्मकं पीठस्थितं लिंगं[2] पूजयेत् । तत्र सिद्धपीठे स्थित भैरवं सम्पूज्य सिद्धपीठे स्थितायाः सौम्यवस्त्रै समन्वितायाः रत्नभूषणैः विभूषितायाः मुक्ताहारेण विराजितायाः सौम्यायाः सुलक्षणैः संयुतायाः हस्तेषु शंखचक्रगदापद्मादि धारिण्याः कमलासनायाः शक्तेरम्बिकायाः पूजनं स्वशक्तिभिर्विधिमंत्रव्रतैश्च चन्दनाक्षतकर्पूरकुसुममन्दारकरजाशोकचम्पककरवीर-मालतीब्रह्मकापुष्पैः विल्वदल धूपदीपार्घ्यहोमार्तिक्यानानाविध नैवैद्यालंकारफलादिभिः गीतवादित्रनिर्घोषपुरस्सरैः सम्पादयितव्यम् । नवरात्रपर्वषु स्नानदानादिनियम[3] पीठपूजन[4] कुमारीपूजन[5] दुर्गासप्तशती पाठ-मार्कण्डेयपुराणपाठ-श्रीमद्देवीभागवतपाठ-ब्राह्मण भोजन-कुमारी भोजन—सुवासिनीभोजन—ह्रीं, वा नवार्णव मंत्र जप[6]-होम-

---

१. विप्रैः सन्तोसितैः कार्यं सम्पूर्णं सर्वथा भवेत् ।
नवपंचत्रयश्चैको देव्याः पाठे द्विजाः स्मृताः ॥
—देवी भा० ३-२६-१६

२. लिंगतत्वमविज्ञाय शिवलिंग प्रपूजयेत् ।
सा पूजा मातृका पूजा जीवात्मा अपवित्रता ॥
शिवशक्तिमयं लिंगं निर्वाणसदृशं फलम् ।
मनोबुद्धिमयं लिंगं सह दृष्टाभवेद्यदा ॥
सदृशं कथ्यते तेन मुनिभिस्तत्व कोविदैः ॥ —गा० तं० पृष्ठ १०
वांसासि च विचित्राणि सूक्ष्माणि च नवानि च ।
दर्शन्तेयानि देयानि गानवाद्यादिभिः सह ॥ —शि० पु० ७-३२-३९

३. यथाशक्ति प्रकर्तव्यो नियमो व्रतहेतवे ।
पश्चात्पूजा प्रकर्तव्या विधिवन्मंत्रपूर्वकम् । देवी भा० ३-२६-२७

४. पीठपूजां समाचार्य पंचोपचारतोर्चयेत् ॥ —श० सं० तं० १८-६५

५. एवं नवकुमारीणामर्चनं.................. ॥ —कु० तं० १०-३२

६. ह्रीं ह्रींमिति प्रतिदिनं जपतां जनानां
किं नाम दुर्ल्लभमिह त्रिपुराधिवासो ।
मालाकिरीटमदवारण माननीयां
तां सेवते मधुमती स्वयमेव लक्ष्मी ॥ —वि० तं० ५-६६-११

तर्पण-अभिषेक-आर्तिक्य-क्षमापन-परिक्रमण यवांकुर वितरणादीनि कर्माणि[1] विहितानि सन्ति। स्वाभीष्ठसिद्धये नवरात्रपर्वषु प्रतिदिन नियतव्रताभावेऽपि सप्तम्यामष्टम्यां नवम्यां चैव शक्ते त्रिरात्रव्रतं[2] कृत्वा अष्टम्यां महाष्टम्यां वा शक्तेर्विशेष पूजनं कर्तव्यम्।[3] शरत्काले शक्त्याः महापूजा कर्तव्या।[4] चैत्राश्विनाषाढमाघमासेषु

---

ह्लींकारमेव तव नाम गृह्णन्ति वेदाः।
मातास्त्रिकोणनिलये त्रिपुरे त्रिदेशे ॥ —वि० तं० ५-९५-४
ओं ऐं ह्लीं क्लीं चामुण्डायै विच्चे इति नवार्णवमंत्रः।

१. पूजनं भगवत्याश्च हवनं भोजनंतथा ॥
वेदपारायणं शक्तिजपोहोमादिकं तथा।
कुरुष्वाद्य यथाशक्ति तव कार्यं भविष्यति ॥
—देवी भा० ३-२७-४५-४६

नवावरणपूजां च कृत्वा देवीं प्रतर्प्य च।
षोडशैरुपचारैस्तु सांगां सावरणां शिवाम् ॥ —वि० तं ११-२३४-१
अष्टभिस्तत्व संख्याभिः कुर्यादारार्तिकं बुधः।
त्रिकोण चैवषट्कोणं मध्ये बिन्दु निपातयेत् ॥ —श० सं० तं० १९-२
पूजनान्ते सदाकार्यं दासैरेनः क्षमापनम्।
प्रसीद परमेशानि जगदानन्ददायिनी ॥ —शि० पु० ५-५१-५०

२. सप्तम्यां च तथाऽष्टम्यां नवम्यां भक्तिभावतः।
त्रिरात्रकरणात्सर्वं फलं भवति पूजनात् ॥ —देवी भा० ३-२७-१५

३. अशक्तो नियतं पूजां कर्तुं चैन्नवरात्रके।
अष्टम्यां च विशेषेण कर्तव्यं पूजनं सदा ॥
पुराष्टम्यां भद्रकाली दक्षयज्ञ विनाशिनी।
प्रादुर्भूता महाघोरा योगिनी कोटिभिः सहः ॥
—देवी भा० ३-२७-८-९

तथैव योगिनी चक्रं चतुः षष्टिगणान्वितम्।
निर्ययो सहसा क्रुद्धं दक्षयज्ञ विनाशितुम् ॥ —शि० पु० २-२-३३-१५

४. आश्विने धवले पक्षे नवरात्रतं चरेत्।
यत्कृते सकलाः कामाः सिद्ध्यन्तेव न संशयः ॥ —शि० पु० ५-५१-७३
शरत्काले महापूजा कर्तव्या मम सर्वदा।
नवरात्र विधानेन भक्तियुक्तेन चेतसा ॥ —देवी० भा० ३-२४-२०
शरत्काले महापूजा क्रियते या च वार्षिकी।
तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्ति समन्वितः ॥
सर्वाबाधा विनिर्मुक्तो धनधान्यसुतान्वितः।
मनुष्यो मतप्रसादेन भविष्यति न संशयः ॥ —दुर्गा स० १२-१२-१३

शक्तेर्महोत्सवा आयोजितव्या[1] नवरात्रपर्वषु शक्तेः सम्यक् व्रतेन पूजनेन मंत्रजाप्येन च मानवा इहलौकिकं पारलौकिकं च सुखं लभन्ते।[2] सिद्धपीठेषु सर्ववर्णाः शक्तिपूजनं कर्तुं शक्नुवन्ति।[3]

नवरात्रपर्वषु ये जनाः—

प्रतिवासरीय पूजनविधौ नियतरूपेण[4] नवानां[5] सुकुमारीणां पूजनं कुर्वन्ति,

---

१. चैत्राश्विने तथाऽषाढे माघे कार्यो महोत्सवैः।
नवरात्रे महाराज पूजाकार्या विशेषतः॥
कृष्णपक्षे चतुर्दश्यां मम भक्ति समन्वितैः।
कर्तव्या नृपशार्दूल तथाऽष्टम्यां सदा बुधैः॥ —देवी भा० ३-२४-२१-२२
कृष्णाष्टभ्यां नवभ्यांवामाया वा पंचदिक् तिथौ।
पूजयेज्जगतां धात्री गन्धपुष्पैविशेषतः॥ —शि० पु० ५-५१-४६

२. एतस्मादपरं किञ्चिद् व्रतं नास्ति धरातले।
नवरात्राभिधं वैश्यं पावनं सुखदं तथा॥
ज्ञानदं मोक्षदं चैव सुख सन्तान वर्धनम्।
शत्रुनाशकरं कामं नवरात्रव्रतं सदा॥ देवी भा० ३-२७-४७-४८
धनधान्यप्रदं नित्यं सुखसन्तान वृद्धिदम्।
आयुरारोग्यदं चैव स्वर्गदं मोक्षदं तथा॥
विद्यार्थी वा धनार्थी वा पुत्रार्थी वा भवेन्नरः।
तेनैवं विधिवत्कार्यं व्रतं सौभाग्यदं शुभम्॥ —देवी भा० ३-२७-१६-१७
नवरात्रव्रतस्यास्य प्रभावं वक्तुमीश्वरः।
चतुरास्यो न पंचास्यो न षडास्यो न सप्तम॥ —शि० पु० ५-५१-७४
भूतप्रेतपिशाचादि दुष्टेभ्यो न भयं क्वचित्।
पुत्रपौत्रादि सम्पत्ति लभत्येव न संशयः॥ —शि० पु० ५-५१-८७

३. चतुर्णामपि वर्णानामाश्रमाणामपीश्वरी।
पुंस्त्रीनपुंसकानान्तु पूजितेष्ट फलप्रदा॥ —कु० तं० ५-५८
शाक्त साम्भव सौराणां गाणेशेवैष्णवेषु च।
ब्रह्मक्षत्रिय वर्णानां संकराणां विशेषतः॥ —वि० तं० २-२६-१

४. एवं नवकुमारीणामर्चनं प्रतिवत्सरम्॥ कु० तं० १०-३२
कुमारी भोजयेन्नित्यं भोजयेत्प्रार्थयेच्च यः।
सुवासिनीश्च विप्रांश्च तस्य सिद्धिर्न संशयः॥ —देवी भा० महात्म्य ५-१८

५. अरोगिणी सुपुष्टांगी सुरूपां व्रणवर्जिताम्।
एकवंश समुद्भूतां कन्या सम्यग् प्रपूजयेत्॥ —वि० तं० १५-४००-१
द्विवर्ष कन्यामारभ्यदशवर्षान्तकन्यका॥ —वि० तं० १५-४००-२

तेषां सर्वाण्यभिष्ठानि सिद्धयन्ति ।[1] सर्वेषां कार्याणां सिद्धये विप्रकन्यां, युद्धे विजयलाभाय क्षत्रियकन्यां, धनार्थे वैश्यकन्यां, सुतार्थे शूद्र कन्यां च भोजयितव्या ।[2]

### अथ नवार्णविधिः

श्रीगणपतिर्जयति ओँ अस्य श्रीनवार्णमन्त्रस्य ब्रह्माविष्णुरुद्रा ऋषयः गायत्र्युष्णिगनुष्टुभश्छन्दांसि, श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः, ऐं बीजम्, ह्रीं शक्तिः, क्लीं, कीलकम्, श्रीमहाकालीमहालक्ष्मीमहासरस्वती प्रीत्यर्थे जपे विनियोगः ।

### ऋष्यादिन्यासः

ब्रह्मविष्णुरुद्रऋषिभ्यो नमः, शिरसि । गायत्र्युष्णिगनुष्टुप् छन्दभ्यो नमः, मुखे । महाकालीमहालक्ष्मीमहासरस्वतीदेवताभ्यो नमः, हृदि । ऐं बीजाय नमः, गुह्ये । ह्रीं शक्तये नमः, पादयोः । क्लीं कीलकाय नमः, नाभौ । ऊं ऐं ह्रीं क्लीं चामुण्डायै बिच्चै ।

### करन्यासः

ऊं ऐं अंगुष्ठाभ्यां नमः । ऊं ह्रीं तर्जनीभ्यां नमः । ऊं क्लीं मध्यमाभ्यां नमः । ऊं चामुण्डायै अनामिकाभ्यां नमः । ऊं बिच्चे कनिष्ठिकाभ्यां नमः । ऊं ऐं ह्रीं क्लीं चामुण्डायै बिच्चे करतलकरपृष्ठाभ्यां नमः ।

### हृदयादिन्यासः

ऊं ऐं हृदयाय नमः । ऊं ह्रीं शिरसे स्वाहा । ऊं क्लीं शिखायैवषट् । ऊं चामुण्डायै कवचाय हुम् । ऊं बिच्चे नेत्रत्रयाय वौषट् । ऊं ऐं ह्रीं क्लीं चामुण्डायै बिच्चे अस्त्राय फट् ।

---

१. कुमारी भोजनादेव कुमारी पूजनादपि ।
कुमारी चिन्तनादेव त्र्यैलोक्य विजयी भवेत् ॥ —श० सं० तं० ३७-५३
नवरात्रविधि कुमारी पूजन ॥ —देवी० भा० ३-२६
यत्र यत्र भवेद्वांछा तत्र सिद्धि करे स्थिताम् ।
मोक्षार्थी लभते मोक्ष धनार्थी लभते धनम् ॥
पुत्रार्थी लभते पुत्रं सुखार्थी लभते सुखम् ॥ —श० सं० तं० २०-१७-१८

२. ब्रह्माणी सर्वकार्येषु जपार्थे नृपवंशजा ।
लाभार्थे वैश्यवंशोत्था मता वा शूद्रवंशजा ॥ —देवी भा० ३-२७-५
ब्रह्माणी सर्वकार्येषु जपार्थे नृपवंशजा ।
लाभार्थे वैश्यवंशोत्था सुतार्थे शूद्रवंशजा ॥ —वि० तं० १५-४००१-२

**अक्षरन्यासः**

ऊं ऐं नमः, शिखायाम् । ऊं ह्रीं नमः, दक्षिणनेत्रे । ऊं क्लीं नमः, वामनेत्रे । ऊं चां नमः, दक्षिणकर्णे । ऊं मुं नमः, वामकर्णे । ऊं डां नमः, दक्षिणनासापुटे । ऊं यै नमः, वामनासापुटे । ऊं विं नमः, मुखे । ऊं च्चे नमः गुह्ये ।

**दिङ्न्यासः**

ऊं ऐं प्राच्यै नमः । ऊं ऐं आग्नेय्यै नमः । ऊं ह्रीं दक्षिणायै नमः । ऊं ह्रीं नैर्ॠत्यै नमः । ऊं क्लीं प्रतीच्यै नभः । ऊं क्लीं वायव्यै नमः । ऊं चामुण्डायै उदीच्यै नमः । ऊं चामुण्डायै ऐशान्यै नमः । ऊं ऐं ह्रीं क्लीं चामुण्डायै विच्चेऊर्ध्वायैनमः । ऊं ऐं हीं क्लीं चामुण्डायैविच्चेभूम्यैनमः ।

महाकाली महालक्ष्मी महासरस्वतीनां ध्यानानि यानि तंत्रशास्त्रेण विहितानि तान्यधोलिखितानि विद्यन्ते—

**"महाकाली ध्यानम्"**

खड़्गंचक्रगदेषुचापपरिघांच्छूलं भुशुण्डीं शिरः,
शंखं संदधतीं करैस्त्रिनयनां सर्वांगभूषावृताम् ।
नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां,
यामस्तौत्स्वपिते हरौ कमलजौ हन्तुं मधुं कैटभम् ॥

**"महालक्ष्मी ध्यानम्"**

अक्षस्त्रक्परशुं गदेषुकुलिशं पद्मं धनुः कुण्डिकां,
दण्डं शक्तिमसिं च चर्मजलजं घण्टासुराभाजनम् ।
शूलं पाशसुदर्शने च दधतीं हस्तैः प्रसन्नाननां,
सेवे सैरिभमर्द्दिनीमिहमहालक्ष्मी सरोजस्थिताम् ॥

**"महासरस्वती ध्यानम्"**

घण्टाशूलहलानि शंखमुशले चक्रधनुः सायकम्,
हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम् ।
गौरीदेहसभुद्भवां त्रिजगतामाधारभूतां महा-
पूर्वामत्र सरस्वतीमनुभजे शुम्भादिदैत्यार्दिनीम् ॥

श्री नवदुर्गाणां नवग्रहसत्वपूर्ण सिद्धियंत्राण्यधोलिखितानि विद्यन्ते ।

### शैलपुत्री—रवि—।१। नमो दैव्यै ॥ योगनिन्द्रा

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ८ | ९ | १ | २ | ३ | ४ | ५ | ६ | ७ |
| स्वावि | हाञ्चे | ह् ए | स्तिही | पि क्री | शापा | चिमुं | लिडा | खेप |
| ५ | ६ | ७ | ८ | ९ | १ | २ | ३ | ४ |
| चिमु | लिडा | खेपै | स्वावि | हाचे | ह ऐ | स्तिही | पिकी | शाचा |
| २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १ |
| स्तहीं | पिकीं | शाचा | चिमुं | लिडा | खेपे | स्वावि | हाञ्चे | ह ऐ |
| ९ | १ | ८ | ३ | ४ | २ | ६ | ७ | ५ |
| हाञ्चे | ह ऐ | स्वावि | पिकी | शाचा | स्तिहीं | लिडा | खेपैं | चिमुं |
| ६ | ७ | ५ | ९ | १ | ८ | २ | ५ | २ |
| लिडा | खेपै | चिमुं | हाञ्चे | ह ऐ | स्वावि | पिकी | शाचा | स्तिही |
| ३ | ४ | २ | ६ | ७ | ५ | ९ | १ | ८ |
| पिकी | शाचा | स्तिही | लिडा | खेपै | चिमुं | हाञ्चे | ह ऐ | स्वावि |
| १ | ८ | ९ | ४ | २ | ३ | ७ | ५ | ६ |
| ह ऐ | स्वावि | हाञ्चे | शाचा | स्तिही | पिकी | खेपै | चिमुं | लिडा |
| ७ | ५ | ६ | १ | ८ | ९ | ४ | २ | ३ |
| खेपै | चिमुं | लिडा | ह ऐ | स्वावि | हाञ्चे | शाचा | स्तिही | पिकी |
| ४ | २ | ६ | ७ | ५ | ६ | १ | ८ | ९ |
| शाचा | स्तिही | पिकी | खेपै | चिमुं | लिडा | ह ऐ | स्वावि | हाञ्चे |

ब्रह्मचारिणी ।।सोम।। २ महादैव्यै देवजाता

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ९ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
| हाच्चे | ह ऐ | स्तिही | पिकी | शाचा | चिमुं | लिडा | खेपै | स्वावि |
| ६ | ७ | ८ | ९ | १ | २ | ३ | ४ | ५ |
| लिडा | खेपैं | स्वावि | हाच्चे | हं ऐ | स्तिही | पिकी | शाचा | चिमुं |
| ३ | ४ | ५ | ६ | ७ | ८ | ९ | १ | २ |
| पिकी | शाचा | चिमुं | लिडा | खेपै | स्वावि | हाच्चे | ह ऐ | स्तिही |
| १ | २ | ९ | ४ | ५ | ३ | ७ | ८ | ६ |
| ह ऐ | स्तिही | हाच्चे | शाचा | चिमुं | पिकी | खेपै | स्वावि | लिडा |
| ७ | ८ | ६ | १ | २ | ५ | ४ | ५ | ३ |
| खेपै | स्वावि | लिडा | ह ऐ | स्तिही | हाच्चे | शाचा | चिमुं | पिकी |
| ४ | ५ | ३ | ७ | ८ | ६ | १ | २ | ९ |
| शाचा | चिमुं | पिकी | खेपै | स्वावि | लिडा | ह ऐ | त्तिही | हाच्चे |
| २ | ९ | १ | ५ | ३ | ४ | ८ | ६ | ७ |
| स्तिही | हाच्चे | ह ऐ | चिमुं | पिकी | शाचा | स्वावि | लिडा | खेपै |
| ८ | ६ | ७ | २ | ९ | १ | ५ | ३ | ४ |
| स्वावि | लिडा | खेपै | स्तिही | हाच्चे | ह ऐ | चिमुं | पिकी | शाचा |
| ५ | ३ | ४ | ८ | ६ | ७ | २ | ९ | १ |
| चिमुं | पिकी | शाचा | स्वावि | लिडा | खेपै | स्तिही | हाच्चे | ह ऐ |

चन्द्रघण्टा मंगल ।३। शिवायै । महिषमर्दिनी

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
| ह ऐ | स्तिही | पिकी | शाचा | चिमुं | लिडा | खे यै | स्यावि | हाच्चे |
| ७ | ८ | ९ | १ | २ | ३ | ४ | ५ | ६ |
| खे यै | स्वावि | हाच्चे | ह ऐ | स्तिही | पिकी | शाचा | चिमुं | लिडा |
| ४ | ५ | ६ | ७ | ८ | ९ | १ | २ | ३ |
| शाचा | चिमुं | लिडा | खे यै | स्वावि | हाच्चे | ह ऐ | स्तिही | पिकी |
| २ | ३ | १ | ५ | ६ | ४ | ८ | ९ | ७ |
| स्तिही | पिकी | ह ऐ | चिमुं | लिडा | लिडा | शाचा | स्वावि | खे यै |
| ८ | ९ | ७ | २ | ३ | १ | ५ | ६ | ४ |
| स्वावि | हाच्चे | खे यै | स्तिही | पिकी | ह ऐ | चिमुं | लिडा | शाचा |
| ५ | ६ | ४ | ८ | ९ | ७ | २ | ३ | १ |
| चिमुं | लिडा | शाचा | स्वावि | हाच्चे | खे यै | स्तिही | पिकी | ह ऐ |
| ३ | १ | २ | ६ | ४ | ५ | ९ | ७ | ८ |
| पिकी | ह ऐ | स्तिही | लिडा | शाचा | चिमुं | हाच्चे | खे यै | स्वावि |
| ९ | ७ | ८ | ३ | १ | २ | ६ | ४ | ५ |
| हाच्चे | खे यै | स्वावि | पिकी | ह ऐ | स्तिही | लिडा | खे यै | चिमुं |
| ६ | ४ | ५ | ९ | ७ | ८ | ३ | १ | २ |
| लिडा | शाचा | चिमुं | हाच्चे | खे यै | स्वावि | पिकी | ह ऐ | स्तिही |

## कूमाण्डा ॥ बुध ॥ ४ प्रकृतै शैलजा

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १ |
| स्तिही | पिकी | शाचा | चिमुं | लिडा | खे य | स्वावि | हाच्चे | ह ऐ |
| ८ | ९ | १ | २ | ३ | ४ | ५ | ६ | ७ |
| स्वावि | हाच्चे | ह ऐ | स्तिही | पिकी | शाचा | चिमुं | लिडा | खे यै |
| ५ | ६ | ७ | ८ | ९ | १ | २ | ३ | ४ |
| चिमुं | लिडा | खे यै | स्वावि | हाच्चे | ह ऐ | स्तिही | पिकी | शाचा |
| ३ | ४ | २ | ६ | ७ | ५ | ९ | १ | ८ |
| पिकी | शाचा | स्तिही | लिडा | खे यैं | चिमुं | हाच्चे | ह ऐ | स्वावि |
| ९ | १ | ८ | ३ | ४ | २ | ६ | ७ | ५ |
| हाच्चे | ह ऐ | स्वावि | पिकी | शाचा | स्तिही | लिडा | खे यै | चिमुं |
| ६ | ७ | ५ | ९ | १ | ८ | २ | ४ | ५ |
| लिडा | खे यै | चिमुं | हाच्चे | ह यै | स्वावि | पिकी | शाचा | स्तिही |
| ४ | २ | ३ | ७ | ५ | ६ | १ | ८ | ९ |
| शाचा | स्तिही | पिकी | खे यै | चिमुं | लिडा | ह ऐ | स्वावि | हाच्चे |
| १ | ८ | ९ | ५ | २ | ३ | ७ | ५ | ६ |
| ह ऐ | स्वावि | हाच्चे | शाचा | स्तिही | पिकी | खे यै | चिमुं | लिडा |
| ७ | ५ | ६ | १ | ८ | ९ | ४ | २ | ३ |
| खे यै | चिमुं | लिडा | ह ऐ | स्वावि | हाच्चे | शाचा | स्तिही | पिकी |

## स्कन्दमाता ॥ गुरु ॥ ५ भदारी ॥ धूम्रहा

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ३ | ४ | ५ | ६ | ७ | ८ | ९ | १ | २ |
| पिकी | शाचा | चिमुं | लिडा | स्वावि | हाच्चे | ह ऐ | ह ऐ | स्तिही |
| ९ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
| हाच्चे | ह ऐ | स्तिही | पिकी | शाचा | चिमुं | लिडा | खे यै | स्वावि |
| ६ | ७ | ८ | ९ | १ | २ | ३ | ४ | ५ |
| लिडा | खे यै | स्वावि | हाच्चे | ह ऐ | स्तिही | पिकी | शाचा | चिमुं |
| ४ | ५ | ३ | ७ | ८ | ६ | १ | २ | ३ |
| शाचा | चिमुं | पिकी | खे यै | स्वावि | लिडा | ह ऐ | स्तिही | हाच्चे |
| १ | २ | ९ | ४ | ५ | ३ | ७ | ८ | ६ |
| ह ऐ | स्तिही | हाच्चे | शाचा | चिमुं | पिकी | खे यै | स्वावि | लिडा |
| ७ | ८ | ६ | १ | २ | ९ | ४ | ५ | ३ |
| खे यैं | स्वावि | लिडा | ह ऐ | स्तिही | हाच्चे | शाचा | चिमुं | पिकी |
| ५ | ३ | ४ | ८ | ६ | ७ | २ | ९ | १ |
| चिमुं | पिकी | शाचा | स्वावि | लिडा | खे यै | स्तिही | हाच्चे | ह ऐ |
| २ | ९ | १ | ५ | ३ | ४ | ८ | ६ | ७ |
| स्तिही | हाच्चे | ह ऐ | चिमुं | पिकी | शाचा | स्वावि | लिडा | खे यै |
| ८ | ६ | ७ | २ | ९ | १ | ५ | ३ | ४ |
| स्वावि | लिडा | खे य | स्तिही | हाच्चे | ह ऐ | चिमुं | पिकी | शाचा |

कात्यायनी ।। शुक्र ।। ६ रौद्रायै ।। चमुण्डहा

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ४ | ५ | ६ | ७ | ८ | ९ | १ | २ | ३ |
| शाचा | चिमुं | लिडा | खे यै | स्वावि | हाच्चे | ह ऐ | स्तिही | पिकी |
| १ | २ | ३ | ४ | ५ | ६ | ५ | ८ | ९ |
| ह ऐ | स्तिही | पिकी | शाचा | चिमुं | लिडा | खे यै | स्वावि | हाच्चे |
| ७ | ८ | ९ | १ | २ | ३ | ४ | ५ | ६ |
| खे यै | स्वावि | हाच्चे | ह ऐ | स्तिही | पिकी | शाचा | चिमुं | लिडा |
| ५ | ६ | ४ | ८ | ९ | ७ | २ | ३ | १ |
| चिमुं | लिडा | शाचा | स्धावि | हाच्चे | खे यै | स्तिही | पिकी | ह ऐ |
| २ | ३ | १ | ५ | ६ | ४ | ८ | ९ | ७ |
| स्तिही | पिकी | ह ऐ | चिमुं | लिडा | शाचा | स्वावि | हाच्चे | खे यै |
| ८ | ९ | ७ | २ | ३ | १ | ५ | ६ | ४ |
| स्वावि | हाच्चे | खे यै | स्तिही | पिकी | ह ऐ | चिमुं | लिडा | शाचा |
| ६ | ४ | ५ | ९ | ७ | ८ | ३ | १ | २ |
| लिडा | शाचा | चिमुं | हाच्चे | खे यै | स्वावि | पिकी | ह ऐ | स्तिही |
| ३ | १ | २ | ६ | ४ | ५ | ९ | ७ | ८ |
| पिकी | ह ऐ | स्तिही | लिडा | शाचा | चिमुं | हाच्चे | खे यै | स्वावि |
| ९ | ७ | ८ | ३ | १ | २ | ६ | ४ | ५ |
| हाच्चे | खे यै | स्वावि | पिकी | ह ऐ | स्तिही | लिडा | शाचा | चिमुं |

कालरात्रि ।। शनि ।। ७ नित्यायै ।। रक्तबीजा

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ५ | ६ | ७ | ८ | ९ | १ | २ | ३ | ४ |
| चिमुं | लिडा | खे यै | स्वावि | हाच्चे | ह ऐ | स्तिही | पिकी | शाचा |
| २ | ३ | ४ | ५ | ६ | ७ | ९ | ९ | १ |
| स्तिही | पिकी | शाचा | चिमुं | लिडा | खे यै | स्वावि | हाच्चे | ह ऐ |
| ८ | ९ | १ | २ | ३ | ४ | ५ | ६ | ७ |
| स्वावि | हाच्चे | ह ऐ | स्तिही | पिकी | शाचा | चिमुं | लिडा | खे यै |
| ६ | ७ | ५ | ९ | १ | ८ | ३ | ४ | २ |
| लिडा | खे यै | चिमुं | हाच्चे | ह ऐ | स्वावि | पिकी | शाचा | स्तिही |
| ३ | ४ | २ | ६ | ७ | ५ | ९ | १ | ८ |
| पिकी | शाचा | स्तिही | लिडा | खे यै | चिमुं | हाच्चे | ह ऐ | स्वावि |
| ९ | १ | ८ | ३ | ४ | २ | ६ | ७ | ५ |
| हाच्चे | ह ऐ | स्वावि | पिकी | शाचा | स्तिही | लिडा | खे यै | चिमुं |
| ७ | ५ | ६ | १ | ८ | ९ | ४ | २ | ३ |
| खे यै | चिमुं | लिडा | ह ऐ | स्वावि | हाच्चे | शाचा | स्तिसी | पिकी |
| ४ | २ | ३ | ७ | ५ | ६ | १ | ८ | ९ |
| शाचा | स्तिही | पिकी | खे यै | चिमुं | लिडा | ह ऐ | स्वावि | हाच्चे |
| १ | ८ | ९ | ४ | २ | ३ | ७ | ५ | ६ |
| ह ऐ | स्वावि | हाच्चे | शाचा | स्तिही | पिकी | खे यै | चिमुं | लिडा |

महागौरी ।। राहू ।। ८ गौर्यै ।। निशुम्भुहा

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ६ | ७ | ८ | ९ | १ | २ | ३ | ४ | ५ |
| लिडा | खे यै | स्वावि | हाच्चे | ह ऐ | स्तिही | पिकी | शाचा | चिमुं |
| ३ | ४ | ५ | ६ | ७ | ८ | ९ | १ | २ |
| पिकी | शाचा | चिमुं | लिडा | खे यै | स्वावि | हाच्चे | ह ऐ | स्तिही |
| ९ | १ | २ | ३ | ४ | २ | ६ | ७ | ८ |
| हाच्चे | ह ऐ | स्तिही | पिकी | शाचा | चिमुं | लिड. | खे यै | स्वावि |
| ७ | ८ | ६ | १ | २ | ९ | ४ | ५ | ३ |
| खे यै | स्वावि | लिडा | ह ऐ | स्तिही | हाच्जे | शाचा | चिमुं | पिकी |
| ४ | ५ | ३ | ७ | ८ | ६ | १ | २ | ९ |
| शाचा | चिमुं | पिकी | खे यै | स्वावि | लिडा | ह ऐ | स्वाडि | लिडा |
| १ | २ | ९ | ४ | ५ | ३ | ७ | ८ | ६ |
| ह ऐ | स्तिही | हाच्चे | शाचा | चिमुं | पिकी | खे यै | स्वावि | लिडा |
| ८ | ६ | ७ | २ | ९ | १ | ५ | ३ | ४ |
| स्वावि | लिडा | खे यै | स्तिही | हाच्चे | ह ऐ | चिमुं | पिकी | शाचा |
| ५ | ३ | ४ | ८ | ६ | ७ | २ | ९ | १ |
| चिमुं | पिकी | शाचा | स्वावि | लिडा | खे यै | स्तिही | हाच्चे | ह ऐ |
| २ | ९ | १ | ५ | ३ | ४ | ८ | ६ | ७ |
| स्तिही | हाच्चे | ह ऐ | चिमुं | पिकी | शाचा | स्वावि | लिडा | खे यै |

सिद्धिदात्री ।। केतु ।९। धात्रयै शुम्भहा

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ७ | ८ | ९ | १ | २ | ३ | ४ | ५ | ६ |
| खे यै | स्वावि | हाच्चे | ह ऐ | स्तिही | पिकी | शाचा | चिमुं | लिडा |
| ४ | ५ | ६ | ७ | ८ | ९ | १ | २ | ३ |
| शाचा | चिमुं | लिडा | खे यै | स्वावि | हाच्चे | ह ऐ | स्तिही | पिकी |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
| ह ऐ | स्तिही | पिकी | शाचा | चिमुं | लिडा | खे यै | स्वावि | हाच्चे |
| ८ | ९ | ७ | २ | ३ | १ | ५ | ६ | ४ |
| स्वावि | हाच्चे | खे यै | स्तिही | पिकी | ह ऐ | चिमुं | लिडा | शाचा |
| ५ | ६ | ४ | ८ | ९ | ७ | २ | ३ | १ |
| चिमुं | लिडा | शाचा | स्वावि | हाच्चे | खे यै | स्तिही | पिकी | ह ऐ |
| २ | ३ | १ | ५ | ६ | ४ | ८ | ९ | ७ |
| स्तिही | पिकी | ह ऐ | चिमुं | लिडा | शाचा | स्वावि | हाच्चे | खे यै |
| ९ | ७ | ८ | ३ | १ | २ | ६ | ४ | ५ |
| हाच्चे | खे यै | स्वावि | पिकी | ह ऐ | स्तिही | लिडा | शाचा | चिमुं |
| ६ | ४ | ५ | ९ | ७ | ८ | ३ | १ | २ |
| लिडा | शाचा | चिमुं | हाच्चे | खे यै | स्वावि | पिकी | ह ऐ | स्तिही |
| ३ | १ | २ | ६ | ४ | ५ | ९ | ७ | ८ |
| पिकी | ह ऐ | स्तिही | लिडा | शाचा | चिमुं | हाच्चे | खे यै | स्वावि |

दशमहाविद्यानां तिथ्यादिभेदक्रमः

१. काली-जयन्ती, भाद्रपद कृष्णपक्षस्य ८ तिथि
२. तारा-महाविद्या, चैत्र शुक्लपक्षस्य ८ तिथि
३. ललिता-श्रीविद्या, चैत्रऽषोडशी, माघ शुक्लपक्षस्य ८ तिथि
४ भुवनेश्वरी-भाद्रपद शुक्लपक्षस्य ८ तिथि
५. भैरवी-मार्गशीर्ष ,, ,, ,,
६. छिन्नमस्ता-वैसाख ,, १४ ,,
७. धूमावती-ज्येष्ठ ,, ७ ,,
८. बगलामुखी-वैसाख ,, ६ ,,
९. मातंगी-वैसाख ,, २ ,,
१०. कमला-कार्तिक कृष्णपक्षस्य ३० तिथि

दशमहाविद्यानाम् विष्णुना सहसाधर्म्यम्

तारादेवी मीनरूपा वगला कूर्मरूपिका ।
धूमावती वराहः स्यात् छिन्नमस्ता नृसिंहिका ॥
भुवनेश्वरी वामनः स्यान्मातंगी राममूर्तिका ।
त्रिपुरा जामदग्न्यः स्याद् वलभद्रस्तु भैरवी ॥
महालक्ष्मीभवेत् वुद्धो दुर्गास्यात् कल्किरूपिणी ।
स्वयं भगवति काली कृष्णमूर्तिः समुद्भवा ॥ (ताडेलतंत्रेदशमोल्लासः)



शाकम्भरी सिद्धपीठम्



सन्मार्गदायि सिद्धपीम् केदारनाथ मन्दिरं च



गौरी सिद्धपीठे शक्ति मन्दिरम्



कूमसिना सिद्धपीठ



कामेश्वरी सिद्धपीठ भवनम्



बगलामुखी सिद्धपीठम्

# चतुर्थोऽध्यायः

## १. उर्वशीक्षेत्रे सिद्धपीठानां विशेषवर्णनम्—

निर्धारितस्यास्योर्वशी क्षेत्रस्य विस्तारं हिमालयादारम्यारुद्रप्रयागमवगम्यते। अस्य क्षेत्रस्य प्रमुखं तीर्थस्थानं बदरीक्षेत्रं केदारक्षेत्रंचास्ति। अस्मिन् क्षेत्रे विद्यमानाद्धिमालयखण्डादनेकाऽलकनन्दा मन्दाकिनी विष्णुगंगा सरस्वती प्रभृतयो नद्यः संजायन्ते। अस्मिन्क्षेत्रे विद्यमानान्यसंख्यानि पुण्यस्थानानि हिमालयस्य देवभूमित्वं ख्यापयन्ति। रुद्रप्रयागादारम्य आनारायण पर्वतमुपत्यकासु निवसन्तो भावाः पर्वतीयाः गृहं कल्पयित्वा तथैव निवसन्ति। निम्नोन्नततेषु भूमिभागेषु सोपाननिभानि क्षेत्राणि कल्पयित्वा कृषिकर्माण्यपि सम्पादयन्ति। अत्र सेवआल्वाद्रालुनारंगनिम्बुका क्षोटकादीनि मुख्य फलानि भवन्ति। अत्राऽस्मिन् अर्धभागेऽरण्यै विशालैः पर्वतखण्डैश्च संवेष्टितो वरीवर्ति पर्वतेषु वनस्पतीनां बाहुल्यं वरीवृत्यते तत्रैव हेतोरत्रत्या जनाः पशुपालनंप्रायेण कुर्वन्ति। अत्रत्यानां मुख्योव्यवसायः पशुपालनं कृषिकमंचास्ति। अत्रत्या पालनीयाः पशवः गावः महिषान् अजा अविप्रभृतयश्च सन्ति तत्र अजा अवथ एवं बाहुल्येनात्रत्याजनाः पालयन्ति अत्र निवासिनां जनानां वेशभूषा सरणिः प्राचीनायाः भारतीयायाः संस्कृते स्मृतिं दृढाजनयति। एषां पारावारिको दम्पत्योः, पितापुत्रयोः भ्रातृभगिन्योश्च सम्बन्धः शोभनो दरीदृश्यते। विदुषी सर्वगुणसम्पन्नापि पत्नी गुणरहितं साधारणमपि पति पातिव्रत्यं समास्थाय श्रद्धया सेवमाने प्रायो दृश्यते। एवमेव खलु विद्वानपि पुत्रः गुणहीनावपि पितरौ परमेश्वर बुद्ध्या सम्यक् समाद्रियते। अत्रत्यानां जनानां मुख्याः कुलदेवताः नागराजः शिवः नृसिहः दुर्गा भैरवः घण्टाकर्ण एवं रूपा सन्ति। अस्मिन् क्षेत्रे भिन्नानां देवीनां देवानां चासंख्यानि प्राचीनान्यर्वाचीनानि मन्दिराणि सन्ति किन्त्वत्रत्यानां जनानां शक्तिसिद्धपीठेषु महती धार्मिकी श्रद्धा समवलोक्यते नवरात्रपर्वष्चत्रत्या जनाः परिवारेण मित्रजनैश्च साकं महत्या श्रद्धया शक्ति सिद्धपीठेषु नियमपूर्विकां यात्रां कुर्वन्ति। धर्मार्थकाममोक्षाख्य चतुर्विध पुरुषार्थ सिद्धये साधकाः जनाः सिद्धपीठानां दर्शनं तत्र स्थितानां शक्तीनां पूजनमेव एकान्ततः साधनं मन्यन्ते। उर्वशीक्षेत्रे अष्टसिद्धपीठानि प्रतिष्ठितानि सन्ति। येषां उर्वशी नन्दादेवी पर्णखण्डासना-ललितादेवी-काली-शाकम्भरी-गौरी-सन्मार्गदाय्येतेषां विस्तारवर्णनमधस्तात् क्रियते।

### उर्वशी सिद्धपीठम्

भूमण्डलेस्मिन् भगवदवताराणां रामकृष्णादीनां महापुरुषाणां लीलाभूमौ

भारतस्योत्तरस्यांदिशि गिरिराज हिमालयः[1] देशस्यास्य भारतवर्षस्य प्रहरीव तिष्ठति। अस्योपत्यकायां उर्वशी इतिनाम्ना ख्यातं सिद्धपीठमिदं स्वालौकिक प्राकृतिक सौन्दर्येण जनान् मोहयति। अत्रोर्वशी नाम्नी देवी निवसतिस्म येनेदं सिद्धपीठं उर्वशीपीठम् इति लोके प्रसिद्धं जातम्।[2] पुराणाध्ययनेनावगम्यते यद् उर्वशी भगवतः जघ्नस्थला-त्समुत्पन्ना तां च बदरिकाश्रमे चन्द्रवंशीयः, पुरुखा नाम नृपः स्वप्रियां विद्धे[3] किञ्चित्समयानन्तरमेव सा परित्यज्य पुरुरवसम् अस्मिन् सिद्धपीठे समायाता। यद्यप्यस्य सिद्धपीठस्य प्रतिष्ठा सत्याः मृतशरीरांगपतनकाले एव समभूत् किन्तु उर्वशीपीठमित्यमिधेयं तु उर्वश्याः निवासानन्तरमेव सञ्जातम्। इदं पीठं वदरिकाश्रम धाम निकषैव सुशोभते। अस्यापरं नाम[4] श्रीविद्यापीठं कथ्यते।

उर्वशी सिद्धपीठस्य सम्मुखमेव किञ्चिदवतीर्यालकनन्दानदी स्वकल कलोच्चनादैः अस्य सौन्दर्यमावहतीव प्रवहति। पृष्टतश्चास्य भगवतश्चरणपादुके नीलकण्ठपर्वतश्च विराजते। परितश्चात्र सर्वासुदिक्षु हिमाच्छादितानां पर्वतशृङ्गाणां रजतमयीव-शोभा, भूमौ च वनस्पतीनां श्यामिका मन्दं मन्दं प्रवहश्च शीतपवनः परमानन्दमनुभावयति। शीतकुण्डोष्णकुण्डसमशीतोष्णकुण्डानामत्र महती विशेषता वर्तते। नीलकण्ठपर्वतो नरनारायणपर्वतो विष्णोश्चरणपादुकास्थलं, शेषनेत्रं, उर्वशीकुंड[5] मातामूर्तिमन्दिरं ब्रह्मकपाल (कपाल मोचन तीर्थ) कुसुमानामधित्यका. ऋषिगंगा

---

१. ऋग्वेद १०-१२१-४, अर्थववेद ६-२४-१, २१-१-११
केनोपनिषद् ३-१२, बृहदारण्यकोपनिषद् ६-१-३
महाभारतस्य सर्वेषु पर्वेषु हिमालयस्य बृहद्वर्णनं दृश्यते।
मार्कण्डेय पु० देवी माहात्म्य। —कुमारसम्भवम् १-१
श्रीमद् भा० स्क० १-४५, ११

२. कन्यां तु चन्द्रभागायां अच्छोदे शिवधारिणी।
वेणायाममृतानाम वर्दयामुर्वशी तथा॥ —देवी भा० ७-३०-७६

३. नारद पु० अ० ६७, वराह पु० अ० १४१। स्क० पु०
माहेश्वरखण्ड मत्स्य पु० अ० ११६-१२०। विक्रमोर्वशीयम्।

४. श्रीविद्या वदरीतीर्थे रामतीर्थे महाधृति। कुञ्जिकातंत्र ७-६६
जयन्ती च जपन्ते त्वं विजयन्ते धराश्रिता॥
बद्धगोदांगुलीत्राणा बदर्याश्रमवासिनी।
बृन्दारका बृहत्कन्या बृहती वाणपातिकी। —देवी भा० १२-६-११४

५. उर्वशी कुण्डमाख्यातं सर्व सौन्दर्यदायकम्।
पुरा पुरुखा यत्र रेमे वत्सर पंचकम्॥
उर्वश्या सह वामाक्षि जनयामास वै सुतान्।
अत्र यः पन्चरात्रं वै स्नान्ति भक्ति समन्वितः॥
कंदर्प इव रूपाढ्यो जायते नात्र संशयः॥ —के० ५८-१३६-४१

शंकराचार्य मन्दिरं, आदिकेदार मन्दिरं, विष्णुचरणपादुका, कञ्चनगंगा, गणेशगुहा, व्यासगुहा, मुचकुन्दगुहा, कालगुहा, सरस्वत्युद्गमस्थलं, गरुडशिला, नारदशिला, मार्कण्डेयशिला, नरसिंहशिला, वाराहीशिला, भीमसेतु, केशवप्रयागो स्वर्गारोहण वसुधारा, बदरीशभवन, गंगाऽलकनन्दाया उद्गमस्थलमिति पावनस्थलानि उर्वशी-वदरिकाश्रमं परितः विराजन्ते, वैशिष्ट्यान्येतान्यवगत्य त्रेतायुगे मर्यादापुरुषोत्तम रामोऽप्यस्य वदरीशधाम्नः यात्रां चकार।[1]

श्रीकृष्णः धाम्नोऽस्य माहात्म्यमुद्धवादकथयत्।[2] त्रेता युगे मर्यादापुरुषोत्तम रामोऽप्यस्य धाम्नः यात्रां चकार, सरस्वत्याः तटेऽत्र शम्याप्रासनाम्नः प्रसिद्धा-श्रमोऽस्ति। बदरीतरुमण्डिते तस्मिनाश्रमे व्यास आचम्य स्थितः सन् मनसि चिन्तयामास। तदनन्तरं स्वचेतसि प्रधानपुरुषं परमात्मनस्तस्य मायां चापश्यत्। यया मोहवशंगतो जीव आत्मानं त्रिगुणात्मकं मन्वानोऽनर्थः करोति। ततस्तदनर्थनाशकं भगवति भक्तियोगं चापश्यत्। एतत्सर्वमवलोक्य अज्ञानीनां नृणां कल्याणाय तां भागवतसंहितां रचितवान्[3] आश्रममिदं समुद्रतटात् १०५०० फीटावधितुंगतां..........

---

१. नरनारायणौ गत्वा दर्शनान्मुक्तिदौ नृणाम्।
वदरिकाश्रमे रामः केदारेशं विलोक्य सः॥ —आ० रा० ९-५

२. गच्छोद्धव मयाऽदिष्टो वदर्याख्यं ममाश्रमम्।
तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचिः॥
ईक्षयाऽलकनन्दाया विधूताशेषकल्मषः।
वसानो वल्कलान्यंग वन्यभुक् सुखनिस्स्पृहः॥
तितिक्षुर्द्वन्द्वमात्राणां सुशीलः संयतेन्द्रियः।
शान्तः समाहितधिया ज्ञानविज्ञान संयुतः।
मत्तोऽनु शिक्षितं यत्ते विविक्तमनुभावयम्।
मय्यावेशितवाक्चित्तो मद्धर्मनिरतोभव।
अतिव्रज्य गतीस्तिस्रो गमिष्यति ततः परम्॥—श्रीमद्भा० ११-२९-४१-४४

३. ब्रह्मनद्यां सरस्वत्यामाश्रम पश्चिमे तटे।
शम्याप्राश इति प्रोक्त ऋषीणां सत्रवर्धन॥
तस्मिन् स्व आश्रमे व्यासो वदरीखण्ड मण्डिते।
आशीनोप उपस्पृश्य प्रबिदध्यौ मनः स्वयम्॥
भक्तियोगेन मनसि सम्यग्प्रणिहिते मये।
अपश्यत्पुरुषंपूर्वं मायां च तदुपाश्रयम्॥
मयासंमोहितो जीव आत्मानं त्रिगुणात्मकम्।
परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते॥
अनर्थोपसमं साक्षाद्भक्तियोगमधोक्षजे।
लोकस्याजनतो विद्वांश्चक्रे सात्वत संहिताम्॥ —श्रीमद्भा० १-७-१-६

धारयति । सर्वोच्चं नीलकण्ठपर्वतमत्र समुद्रतटाच्चत्वारिंशदधिक षडशतोत्तरैकविंश-तिसहस्रफीटावधि । २१६५० । तुंगतां दधाति ।

सिद्धपीठेऽस्मिन्नुर्वशी मन्दिरमति प्राचीनं वर्तते । किन्त्वधुना प्राचीन मन्दिरस्य स्थाने अश्मचूर्णेन सह प्रस्तरखण्डान् मेलापयित्वा नवीनमन्दिरस्य निर्माणमभवत् । वर्गाकारमिदं मन्दिरमष्टादशफीटमितं वर्तते, पञ्चविंशतिफीट-मिताश्चेदमुच्छ्रायतां दधाति । शीर्षप्रान्तेऽस्य पित्तलधातुमयं कलशं लोहमयं त्रिशूलं रक्तवस्त्र निर्मिता पताका च शोभते । मन्दिरस्योर्ध्वभागोवर्तुलाकारश्चाधोभागः वर्गाकारो विद्यते । प्रांगणेऽत्रास्त्येवहवनवेदिका यस्यां वहवो होतारः प्रतिदिनं जुह्वति । उर्वशीमन्दिरस्य पूर्वद्वारेणान्तः प्रविश्य पश्चिमाशायांभित्तौपाषाणखण्डैः निर्मितवेदिकायां देव्या मूर्तिरेका रक्तवस्त्रेणावेष्टिता दृश्यते । मध्ये च मन्दिरस्य पाषाणलिङ्गमेकं दृष्टिगोचरं भवति यत् आदिशक्तेर्लिङ्गमिति कथ्यते । भैरवगणेशादीनां अन्येषामनेकेषां दिवौकसां च मूर्तयोऽप्यत्र प्रतिष्ठां लभन्ते । भक्तानां प्रवेशाय निर्गमनाय च मन्दिरे-ऽस्मिन् एकमेव द्वारमस्ति ।

हिमालयस्योपत्यकायां विद्यमानेऽस्मिन् सिद्धपीठेशीततौं यात्रा नास्ति सम्भवा । अत एवात्र ग्रीष्मवर्षाशरद्दतुषु संख्यातीता यात्रिणः समायान्ति । ते उषसि तप्तकुण्डे स्नात्वा मुहूर्तमेकं भगवतो वदरीशस्य ध्यानं दर्शनञ्च कुर्वन्ति अनन्तरमुर्वशीपीठे समागत्य शक्तेरुर्वश्याः दर्शनं पूजनं च विदधति ।

उर्वशीमन्दिरे षष्मासान् यावत् प्रतिदिनं शक्तेः सात्विकी पूजा भवति । समीपेव विष्णोः धाम्नः प्रभावादत्र राजसी तामसी वा पूजा परम्परा नास्ति प्रचलिता । डिमरी इति जात्युद्भवाः विप्राः पीठेऽस्मिन् सम्प्रति शक्तेस्सात्विकीं पूजां कुर्वन्ति ।

अत्र शासनेन गठितैका समितिः बदरीनाथकेदारनाथ मन्दिर समितिः उर्वशीमन्दिरस्यापि संचालनं करोति । इयं समितिः सर्वेषां मन्दिराणामायव्ययादि विवरणैः सह उर्वशीमन्दिरस्यायव्यय विवरणमपि सर्वकारस्य समक्षं प्रस्तौति ।

बदरीनाथधाम्नः पण्डा देवप्रयागाभिधाने स्थाने निवसन्ति, देवप्रयाग निवासी विद्वद्वर्यश्चक्रधरजोशी महाभागः समये-समये देशेभ्यः विदेशेभ्यश्चागतेभ्यः यात्रिभ्यः धर्मार्थकाममोक्षविषयकानुपदेशान् ददाति । यद्यपि कोऽप्यधिकारी नास्त्यसौ अस्मिन् धाम्नि, तथापि तस्य सदुपदेशेन महान्तो जनाः भक्ताः यात्रिणोऽयं धाम्नः उन्नयनाय प्रचुरं धनं समर्पयन्ति ।

बदरीनाथधाम्नः बदरीशमन्दिरे प्रतिवासरो पूजायै दक्षिणभारतीयो राउल जात्युद्भवो विप्रः प्राचीनकालादेव जगद्गुरु शंकराचार्येण विनियुक्त आसीत् । साम्प्रतमपि तज्जातीयो ब्रह्मचारी (अपाणिग्राही) नम्बूदरी बदरीनाथधाम्नि भगवतो बदरीशस्य पूजां करोति । धर्मगुरुः आदि शंकराचार्य उत्तरभारतीय मन्दिरेषु दक्षिण-भारतीय ब्राह्मणान् दक्षिणभारतीय मन्दिरेषु चोत्तरभारतीय द्विजान् पूजनार्थं भगवतः विष्णो शंकरस्य च सयोज्य भारतीयजनानैक्य सूत्रे बबन्ध । प्रयत्नेनानेन भारतीयानां

विभिन्न वेशभाषादीनामादान-प्रदानस्य च सुगमा व्यवस्था तेन महापुरुषेण कृता।[1] धर्मातिचारस्य रिपु आदिगुरुः शंकराचार्य सप्तम्यां अष्टम्यां वा शतब्यां प्रादुरभूदिति वहवोविद्वांसः मन्यते।[2]

भारतीय संस्कृतेरनुपोषकोस्मिनुर्वशीबदरीनाथधाम्नि यात्रिणां कृते भोजनावास-भ्रमण-यातायातादीनां सुव्यवस्था कृता शासनेन धार्मिकवृन्दैश्च। बहवो वैदिकाः यात्रिणः पर्यटकाश्चात्र समागत्य भारतीय धार्मिकस्थलेऽस्मिन् भारतीयानां सांस्कृतिक, धार्मिक, सामाजिक, दार्शनिक, राजनीतिक दशासमवलोक्य धन्योऽयं भारतोदेशः इति मुक्तकण्ठेन गायन्ति। अस्मिनुर्वशीपीठे बदरीनाथ धाम्नि च ये जनाः स्नान्ति शक्ते-र्विष्णोश्च दर्शनं-पूजनं प्रदक्षिणं च कुर्वन्ति ते घोरेऽस्मिन् भवसागरे उच्च-नीच योनिषु गच्छतां पुंसो कृते अप्सु मज्जतां नौरिव ब्रह्मवित्साधुः परमाश्रयो भवन्ति सात्विकं सुखं[3] च प्राप्नुवन्ति। बहूनि पुराणानि काव्यग्रन्थाश्चात्र बदरीनाथ धाम्नः महिमानं[4] गायन्ति।

## नन्दादेवी सिद्धपीठम्

चमोली जनपदेस्थितं ज्योतिर्मठधामाभिधेयं एकं पसिद्धं पर्वतीयनगरमस्ति।

---

१. दुष्टाचार विनाशाय प्रादुर्भूतो महीतले।
स एव शंकराचार्यः साक्षात् कैवल्यनायकः॥
अष्टवर्षेचतुर्वेदान् द्वादशे सर्वशास्त्रकृत्।
षोडषो कृतवान् भाष्यं द्वात्रिंशे मुनिरम्यगात्॥
—बलदेव उपाध्याय शंकराचार्य ३४-३

२. आदिगुरु शंकराचार्य के सम्बन्ध में अनेक मतभेद मिलते हैं लेकिन आधुनिक विद्वानों की यह धारणा बन गयी है कि जगद्गुरु शंकराचार्य का समय ८४५ विक्रमी से ८९७ विक्रमी तक है। इस मत की कटुभावना तथा पृष्टि करने का श्रेय स्वर्गीय डा० के० वी० पाण्डे को है। —उत्तराखण्ड यात्रा दर्शन पृष्ठ ४९७

३. सात्विकं सुखमामोत्थं विषयोत्थं तु राजसम्।
तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम्॥ —श्रीमद् भा० १-२५-२९

४. न विष्णुसदृशो देवो न विशाला समा पुरी।
न भिक्षु सदृशं पात्रमृषितीर्थं सम नहि॥
—स्क० पु० वै० खं० बदरिकाश्रम ५-५८

मातर्मयाति तपसा परितोषितात्वं,
प्राग्जन्मनि प्रसुमनादिभिरर्चितासि।
धर्मात्मजेन बदरीबनखण्डमध्ये,
किं विस्मृतो जननि ते त्वयि भक्तिभावः॥
—देवी भा० ४-२४-४८, के० अ० ५८-६२

अस्माद्धिमालयं प्रति द्वौ मार्गौ गच्छतः । अनयोरेकेण मार्गेण यात्रियाः बदरीनाथधाम्नि प्रविशन्ति । अपरो मार्गः नीतिमार्ग इति प्रसिद्धः । अनेन मार्गेण ज्योतिर्मठधाम्नः क्रोशद्वादशपरिमित पथमतिक्रम्य धवलगंगायाः दक्षिणतटवर्तिनि क्षेत्रे बहुविधवनस्पतिभिर्परिपूरितस्य एकस्य नन्दाभिधेयस्य सुरम्यपर्वतस्य दर्शनं भवति । तस्योपत्यकायां नन्दादेवी इति परमं पवित्रं सिद्धपीठमधितिष्ठति ।[1] पीठमिदं समुद्रतटादनुमानतः सप्तसहस्रफीटावधि (७००० फीट) तुंगतां दधाति ।

नन्दपर्वतस्य शिखरमत्युच्छ्रितं वर्तते । शिखरादेतस्मात् कैलासपर्वत, धवलगिरी, ऋषिशैल, त्रिशूल पर्वत, द्रोणगिरि, काकभूषणपर्वत, कामेटादीनां पर्वतशिखराणां दर्शनीयतमाच्छटाऽवलोक्यते । नन्दादेवी सिद्धपीठं निकषैव भविष्यबदरीतीर्थ, गणेश मन्दिर[2] सुकामेश्वर शंकरमन्दिर[3] भुजगढ़, बाम्याग्रामे पंचमुखी शेषनाग मन्दिर, टेमरुसैणग्रामे शंकरमन्दिर, इमानि मन्दिराणि सन्ति बहूनि तीर्थस्थलानि च । ऋषिगंगानद्यावप्यत्रैव धवलगंगायां विलीने भवतः । किं बहुनोक्तेनात्र शतसहस्त्रशः शैलास्तेषां नितम्बप्रवभा नदा नद्यश्च सन्त्यसंख्याताः ।

नन्दादेवी सिद्धपीठस्य विषये पुराणेस्वियं गाथा प्रचलिता वर्तते पुरा महिषासुरचण्डमुण्डरक्तबीजनिशुम्भ-शुम्भादयोऽसुरा आविर्भूय स्वदुराचारैर्देवान् मानवांश्च पीडयामासुः । दुःखितास्ते देवाः मानवाश्च समुदिता भूत्वा भक्तवत्सलां शक्ति स्वस्तुतिभिः प्रसन्नामकुर्वन् । तेषां दुःखशमनार्थञ्च सा भगवत्याभिर्मूय विविधरूपैस्तान् देवार्तिकरान् राक्षसान् जघान । स्वकीयं कर्म समाप्य कालान्तरेऽहं धर्मविध्वंषिणः सकलान् दैत्यान् पुनः शक्तिरूपेण नन्दगोपस्य पत्न्याः यशोदायाः गर्भादाभिर्भूय हनिष्यामि[4] इति समाश्वास्य देवान्, सा तत्रैवान्तरधीयत । यदा चास्यां भुवि दुर्वृ तः कंसः धरणीमयीडयत् तदा शक्तिः पापोन्मूलनार्थं नन्दस्य गृहे यशोदायाः गर्भात्

---

१. नन्दादेवी परं गोप्या तत्रैवास्ति सुरार्चिता ।
सर्वकामप्रदा नित्यं सर्वकाम फलप्रदा ।। —के० ८१-२९

२. नन्दाया उत्तरे शैले गणेशो देवपूजितः ।
त्रिरात्रं यः परं मंत्रं गणेशस्य जपेन्नरः ।।
परं धाम समाप्नोति न विध्नं जायते क्वचित् ।
नन्दगंगा सुमहात्म्यं को वा वर्णयितुं क्षमः ।। —के० ८१-३१-३२

३. सौदामिनी दक्षतीरे सुकामेश्वरसञ्ज्ञकः ।
शिवस्तद्दर्शनाद्देव सर्वपापैः प्रमुच्यते ।। —के० ८१-३०

४. श्रीमद्भागवत द० स्क० पू० अ० ३-५
वैवस्वतेऽन्तरे प्राप्ते अष्टाविंशतिमे युगे ।
शुम्भो निशुम्भश्चै वान्यावुत्पत्स्येते महासुरौ ।।
नन्दगोप गृहे जाता यशोदागर्भसम्भवा ।
ततस्तौ नाशयिष्यामि विन्ध्याचल निवासिनी ।।
—दुर्गासप्तशती ११-४१-४२

समुत्पन्ना सती नन्दादेवीति नाम्ना लोके प्रसिद्धा जाता। कथ्यते ज्योतिस्वरूपा नन्दाशक्तिः हिमालयप्रान्ते स्वनिवासाय स्थानं पर्यचिनोत्।[1] दिवौकसोऽपि तस्याः नन्दा शक्तेः स्थापनां अत्रैव चक्रुः। यद्यपि सिद्धपीठमिदं सत्याः पार्थिवशरीरस्य किञ्चिद्भाग पतनेन सज्जातम् तथापि नन्दा शक्तेः स्थापनाकालादेव नन्दादेवी सिद्धपीठमत्र प्रसिद्धम्। येन प्रभावेण च पर्वतोऽप्यत्र नन्दा पर्वतनाम्नः प्रसिद्धो बभूव। नन्दादेवी मन्दिरं नन्दपर्वतस्य पृष्ठभागे अल्मोड़ा जनपदेऽपि विद्यते।

नन्दादेवी मन्दिरम् जगद्गुरुणा शंकराचार्येण निर्मायितं वर्तते। मन्दिरमिदं दैर्घ्येण पंचविंशतिफीटमितां वर्गाकारतां द्वाविंशतिफीटमितां चोच्छ्रायतां दधाति। एकस्यां वर्तुलाकार वेदिकायाः उपरि अस्य मन्दिरस्य रचना संजाता। शिखरप्रान्तेऽस्य कांस्यधातुनिर्मितमेकं कलशं, एकारक्तवस्त्रेणनिर्मिता पताका, एकं त्रिशूलं च विलसति। यात्रिणां निवासाय मन्दिरस्योभयतः द्वे धर्मशाले विद्येते। मन्दिरं परितः साम्प्रतं वर्गाकार चतुष्पथं निर्मीयते स्वामिना निजानन्देन प्रदत्त वित्तेन।

सिद्धपीठभवनस्य पूर्वद्वारेण प्रविश्यान्तः गृहे पश्चिमवर्तिन्यां भित्तिकायां निर्मित वेदिकायांमुपरि काष्ठपीठासने समासीना सती त्रयफीटपरिमितोन्नतायाः रक्तवस्त्रो-परिवेष्टितायाअष्टाभिर्मुजाभिः समलंकृतायाः शक्तेर्नन्दादेव्याः दर्शनं भवति। सिंह-धिरूढायाः देव्याः मूर्तिरत्र पाषाणनिर्मिता वर्तते। महार्घमूल्य स्वर्णरजतालंकरणै-र्विभूषितेयं मूर्तिः जनानां मनांसि आह्लादयति। अनया सह चतुष्षष्टियोगिनीनां मूर्तयोऽपि वर्तन्ते। वामाङ्के शक्तेरस्याः नन्दादेव्याः गणेशस्यैकदन्तस्य भव्या मूर्तिः विराजते। आसां मूर्तीनां दर्शनमात्रणैव सर्वाण्येव विघ्नानि समूलानि विनश्यन्ति। सुखं भाग्यं च लभ्यते।

पूर्वकालादेवास्मिन् पीठे शक्तेर्दैनिकी पूजा प्रचलिताऽऽसीत्। अधुनाऽपि प्रति-वासरं प्रातःकाले शक्तेर्वैदिकी पौराणिकी तांत्रिकी चात्रपूजा भवति। नवरात्रावसरेषु अत्र पशुबलिप्रदानेनापि जनाः शक्तिमर्चयन्ति। सम्प्रति नन्दादेवी मन्दिरस्य सञ्चालनं वुटोलाजातीयो क्षत्रियो नाम्ना रत्नसिंहः करोति।

प्रतिवर्षे चैत्रमासे गोपीनृत्यभिधेयस्य मासमेलापकस्यायोजनमत्र भवति। मेलापकेऽस्मिन् क्षेत्रीयाः संख्यातीताः जनाः सम्मिलिताः भवन्ति। सम्पूर्णे मधुमासे भक्ताः समुदिता भूत्वा प्रातः नन्दपर्वते गाश्चारयित्वा मध्यान्हे गोपीनृत्यं कुर्वन्ति। सन्ध्याकाले च ते शक्तेः स्तवपाठरार्तिकां च कृत्वा गोपीगीतं गायन्ति। सर्वे च ते प्रतिरात्रं कृष्णलीलां कुर्वन्ति। मासान्ते विषुवत्संक्रात्यां बृहद्धोमं कृत्वा शक्तेः प्रसादं च गृहीत्वा स्वगृहान् प्रति निवर्तन्ते।

षोडशवर्षानन्तरं षोडशाब्दनामक शक्तियज्ञमप्यत्र भवति। मखेऽस्मिन् जोशी-मठान्नीतिग्रामं यावत् निवसन्तः संख्यातीताः जनाः सम्मिलिता भवन्ति। इमे जनाः मिलित्वा अस्ययज्ञस्यायोजनं कुर्वन्ति। यज्ञावसान काले नन्दादेवी मन्दिरस्य पूर्वभागे

---

१. हिमालये सदादेवी तिष्ठतीति मयाश्रुतम्। —देवी भा० ५-२२-२०

कालीचक्रं निर्माय भक्ताः कालीपूजनं विदधति। पूजनस्यान्तकाले त्रयोधिकषष्ठि-संख्यका अजा एकश्च महिषः भक्तैः देव्यै बलिरूपेणनुपह्नियते। यज्ञे चाऽस्मिन् चर्तुभिः शृङ्गैर्युक्त एको मेषोऽपि नन्दाशक्तये समर्प्यते जनैः।

महति सिद्धपीठेऽस्मिन् समितेः परमावश्यकता दृश्यते। यात्रिणां कृते आवासादीनां अपि व्यवस्था भवितव्या। सुरम्येऽस्मिन् स्थले यात्रिणां मनोविनोदाय प्रकृत्या बहूनि साधनानि प्रदत्तानि, परं शासनेन प्रदत्तसाधनानामभावेऽत्र पर्यटकानामाकर्षण भूताः सुविधाः नोपलभ्यन्ते। भूगर्भशास्त्रिणोऽपि, अस्मिन् क्षेत्रे यदि कार्यं कुर्युस्र्तर्हि विपुलां खनिजसम्पत् प्राप्तुं शक्यते।

## पर्णखण्डासना सिद्धपीठम्

पर्णखण्डासना सिद्धपीठस्य पावनस्थानमिदं चमोली जनपदे स्थित जोशीमठ क्षेत्रे विष्णुगंगाऽलकनन्दयोः संगमस्थलादूर्ध्वभागवर्तिनो विशालपर्वतस्योच्चशिखरे मैरवंडाभिधाने स्थाने वर्तते। पर्णखण्डासना सिद्धपीठमत्राति प्राचीन कालादेव प्रतिष्ठितम्। जनश्रुतीनामनुसारेण सिद्धपीठमिदं सत्याः मृतशरीरस्यागपतनेन प्रतिष्ठितम्। कालान्तरं सत्याः द्वितीयावतार रूपिणी पार्वत्यपि शंकरं प्रसादयितुमत्र पर्णखण्डानामासनं कृत्वा तपश्चकार।[1] तदारभ्य सिद्धपीठस्थलमिदं देवीपर्णखण्डासना सिद्धपीठनाम्नः लोके प्रसिद्धं बभूव। शक्तिरियं नवदुर्गा रूपिणी चण्डिकानाम्नी ज्योतिर्धाम्न्यपि (ज्योतिर्मठे) प्रसिद्धा बभूव।[2] पर्णखण्डासना सिद्धपीठात् क्रोशद्वयपरिमित पथमतिक्रम्यैव ज्योतिर्धाम्नो वर्तते।[3]

पावनतीर्थेऽस्मिन् ज्योतिर्मठ शंकराचार्येण निर्मितं शक्तेर्नवदुर्गायाः मन्दिरं सुप्रसिद्धं वर्तते। तस्य समीपे शंकराचार्यस्य विशालमठः, दण्डधारा नृसिंहमन्दिर, आशुतोषशिव मन्दिर, गरुड मन्दिर, अष्टभुजागणेश मन्दिर, वासुदेव मन्दिर, अन्नपूर्णामन्दिरेत्यादीनां देवस्थानानि धाम्नोऽस्य पावनतां वर्धयन्ति।

पर्णखण्डासनापीठे शक्तिमन्दिरमपि शंकराचार्येण निर्मितमिति कथ्यते। मन्दिरमिदंपाषाणखण्डैः निर्मतं वर्तते। दैर्ध्येणेदं पंचविंशत्फीटमितां वर्गाकारतां विंशतिफीटमितां चोच्छ्रायतां दधाति।

---

१. यत्र पूर्व महादेवी तपः परममास्थिता।
पर्णखण्डासना भूत्वा बहुवर्षसहस्रकम्॥
तदारभ्य महत्पुण्यं बभूव वरवर्णिनी।
पर्णखण्डासनादेवी जाता दैवतपूजिता॥ —के० ५८-३६-३७

२. तस्मात्पूर्वाश्रिते याम्ये देवीस्थानमनुत्तमम्।
तत्रास्ते चण्डिकादेवी सद्यः प्रत्यय कारिणी॥ —के० ८०-५७

३. ततः क्रोशद्वये पुण्ये ज्योतिर्धाम शुभप्रदम्।
नृसिंहरूपी भगवान् यत्रास्ते मुक्तिदायकः॥ —के० ५८-४०

शिखरप्रदेशेऽस्य एकं कलशं एकं त्रिशूलमेका च ध्वजा विलसति। मन्दिरस्य परितः सर्वासु दिक्षु पर्वतशिराणां मुच्चावचादीनां भूभागानां वनस्पतिपूरितवनानां च दर्शनं भवति। मन्दिरमिदमनुमानतः षट्सहस्राणिफीटावधि समुद्रतटादुत्तुंगतां दधाति। पर्णखण्डासनामन्दिरस्य पश्चिमभित्तिकायामत्र एका विशाला शक्ति मूर्तिः प्रतिष्ठति। इयं मूर्तिश्चाष्टभुजा समायुक्ता पाषाणखण्डेन निर्मिता त्रयफीटपरिमितोन्नता विविधैरायुधैः सुशोभिताः रक्तवस्त्रैःपरिवेष्टिता रक्तमुखा च वर्तते सा कण्ठे रक्तकुसुमैः निर्मितां मालां धारयति। शिवशक्त्यात्मकमेकं प्राकृतिकं लिङ्गमप्यत्र वर्तते।

पर्णखण्डासना मन्दिरं निकषैव एकं कालभैरव मन्दिरमस्ति मन्दिरेऽस्मिन् कालभैरवस्य पाषाणखण्डनिर्मिता मूर्तिः प्राचीनकालादेव प्रतिष्ठिता अस्ति। पर्णखण्डासना मन्दिरे दैनिकी पूजा भवति। सात्विक-राजस-तामस विधिभिः डिमरीज्ञात्युद्भवाः विप्रा अत्र पर्णखण्डासना शक्तेर्दैनिकी पूजां कुर्वन्ति। चैत्रमास्याश्विनमासस्य च नवरात्रिसु अत्र बृहद्मेलापकानामायोजनं भवति। नवरात्रपर्वष्वेषु संख्यातीता क्षेत्रीयजनाः सपरिवारेण सह सिद्धपीठस्यास्य यात्रां कुर्वन्ति। श्रद्धया पूजितेयं पर्णखण्डासना शक्तिः सुफलं ददाति।

पर्णखण्डासना सिद्धपीठेऽस्मिन् प्राचीनकाले पशुबलिप्रथा प्रचलितासीत् अधुनाऽपि नवरात्रावसरेषु स्वामीष्टसिद्धये जनाः पशुबलिमत्र कुर्वन्ति। हिंसात्मिकेयं प्रथा समाप्तये क्षेत्रीय विद्वांसः प्रयत्नशीलाः दृश्यते। अस्मिन्पीठे जनानां महती भावना दरीदृश्यते।

पीठस्यास्य संरक्षणार्थं नास्त्यत्र काऽपि समिति। न वर्तते शक्तिमन्दिरस्य दशा सुरक्षिता। सिद्धपीठस्य महत्वमवलोक्य मन्दिरस्यास्य व्यवस्था समितेः परमावश्यता दृश्यते। एवं च सुगठित समितिरेव सिद्धपीठस्यास्य सम्यग् सुसंरक्षणं कर्तुं शक्नोति।

ज्योतिर्धामस्थित नवदुर्गामन्दिरस्य गर्भगृहे शक्तेर्नवदुर्गायाः मूर्तयः पृथक्-पृथक् स्थलेषु विराजन्ते। एताः मूर्तयः पाषाणखण्डनिर्मिताः कृष्णवर्णाः परमश्लाध्यतमाः दृश्यते। विष्णु-शंकर-गणेश, भैरव लिङ्गात्मिकाशक्ति मूर्तयोऽपि अत्र प्रस्तरखण्डैः निर्मिता विद्यन्ते। पूर्वाभिमुखोऽत्र घृतपूरिता खण्डदीपकः सदैव प्रज्वलति।

अस्मिन् मन्दिरे शक्तेर्दैनिकी पूजा सात्विक विधिना सम्पाद्यते। ऋत्विजा साहाय्यैन पर्वदिनेषु नवरात्रावसरेषु च क्षेत्रीयजनाः शाक्ताश्चात्र शक्तेः षोडशोपचार पूजनं कुर्वन्ति। विशिष्टा पूजा शक्तश्चात्र हैयंगवेन भवति। नवरात्रावसरेषु चैत्राश्विनपौषमासेषु पशुबलिदानेनाऽपि शक्तेर्पूजनं क्रियते। चैत्रमासस्य नवरात्रिषु प्रतिवर्षमत्र देवीमखनामको यज्ञः सम्पाद्यते। तस्मिन्मरवे बहवो विद्वांसः देवीभागवत महापुराण-मार्कण्डेयपुराण दुर्गासप्तशतीत्यादीनां पाठं विदधति। ते यवबीजाकुंराण्यपि शक्तिमन्दिरे समुत्पादयन्ति। पुण्यकालेऽस्मिन् संख्यातीता जनाः पाठ श्रवणार्थं शक्तेपूजनार्थं दर्शनार्थं चात्रागच्छन्ति पुण्यप्रसादं यवांकुरं-सुफलद्रव्यं च ते प्राप्नुवन्ति।

जोशीमठे यात्रिणां निवासाय धर्मशालादीनामपि प्रबन्धो विद्यते।

यात्रिभ्यो भोजनस्नानादीनां चापिव्यवस्थाऽत्र समुचिता दृश्यते। व्यवस्थामेतां बदरीनाथकेदारनाथ मन्दिर समितिः करोति। समितेराज्ञया भिन्न-भिन्न पुजारिणोऽत्र शक्तेपूर्जनं कुर्वन्ति। साम्प्रतं तु डिमरीजातियो ब्राह्मणः पीठेऽस्मिन् नवदुर्गादेव्याः प्रतिवासरीयपूजनं करोति। बसन्तग्रीष्मवर्षादिषु ॠतुषु संख्यातीताः जनाः शक्ते-दर्शनार्थमत्रागच्छन्ति न केवलं क्षेत्रीयजना एव शक्तिपूजनार्थमत्रागच्छन्ति, अपितु शाक्ताः सर्वस्मादेव भारतवर्षात् समागत्य शक्तैर्दर्शनं पूजनञ्चात्र कुर्वन्ति।

ये मानवाः देवीमखे शक्तिपूजने चात्र सम्मिलिताः भवन्ति वा श्रद्धया शक्तेर्यज्ञंपूजनञ्च कुर्वन्ति ते महत्पुण्यमाप्नुवन्ति।[१]

## ललितादेवी सिद्धपीठम्

परमपावनस्थले चमोलीजनपदस्थित नालाचट्टी इत्यभिधेये स्थाने पुरा शक्तिर्प्रसाधनार्थं चन्द्रवंशीयो राजा नलस्तपश्चके।[२] सूर्यवंशीयो महाराजो मान्धाताऽप्यत्र[३] तपश्चकारेत्यपि प्रसिद्धम्। दैत्यवंशीयो बलिपुत्रो बाणासुरः[४] सहस्रभुजामिर्मृदङ्गवादयित्वा शक्तिशंकरावत्र इयाज। एवं चात्र प्राचीनकाले महान्तो संम्राजः शक्त्या तपसा प्रभावेण परमसिद्धमलभनिति, ललितांगणेनाला इति सुरम्य स्थाने ललितादेवीति नामधेयं शक्तिसिद्धपीठमतिप्राचीनकालादेव प्रसिद्धम्।[५] अत्र देवीसिद्धपीठे पञ्चत्वंगतायाः शिवभार्यायाः सत्याः शरीरस्य शिरोनली भागः विष्णु-चक्रखण्डितः पतित इति पौराणिकी प्रसिद्धिः।[६] प्रथिता चात्र किम्बदन्ती यत्

---

१. एत्पीठं समं नास्ति सिद्धिदं सर्वकामदम्।
यदस्मिन् क्रियते कर्म तत्सर्वं कोटिसंख्यकम्॥ —के० ५८-४२
दर्शनात्स्पर्शनाच्चैव पूजनाद्बलिदानतः।
संतुष्टा वरदा नित्यं स्वर्लोकं संप्रयच्छति॥ —के० ८०-५८

२. ततो वै पूर्वदिग्भागे नलो नाम महीपतिः।
तपश्चकार परमं त्यक्त्वा राज्यसुखानि च।
राजराजेश्वरी देवीमर्चयन्ससमाधिना॥ —के० २००-२३

३. मान्धाता नामविख्यातस्तत्रैव तप्तवांस्तपः।
प्राप वै परमां सिद्धिं स च राजो महाबलः॥ —के० २००-२५

४. ततः पश्चिमदिग्भागे नाम्ना बाणासुरोमुने।
अजेयत्ववरप्राप्त्यै ध्यायन्वै मनसाशिवम्॥ —के० २००-२६

५. हयेश्चा सुभदा गौरी मानसे च सरोवरे।
नन्दापुरे महानन्दा ललिता ललितांगणे॥ —कुंजिका तं० ७-५०
ललिता भैरवी चैव कामेशी भैरवी तथा॥ —वि० तं० ५-८९-६

६. शिरोनली पतन्ती तु नलहट्ट्या पुराभुवि।
शक्तिं च कालिकां चक्रे योगेशं भैरवं तथा॥ —द० सं० इ० २१

प्राचीनकालेऽत्र सुधियां तपस्विनां तपस्यास्थलमासीत्। एकदा शक्तिः स्वपीठेऽस्मिन् तपश्चरतः साधून् दृष्ट्वा परमप्रसन्ना भवती स्वभक्तेभ्यस्तेभ्यः सुन्दरं स्वां ललितमयंरूपं चादर्शयत्। अतः सा ललितादेवीति नाम्ना जगति प्रसिद्धा। समुत्पन्नेयं देवी शंकरस्य वामहस्तात् समुत्पन्ना गाथेयमपि प्रचलिता वर्तते। तदैवात्र देवीभक्ताः शक्तेः स्थापना ललितादेवीति नाम्ना कारयामासुः। कालान्तरे पीठमिदं राजराजेश्वरी कालिका दुर्गादेवीति नामभ्योऽपि लोके प्रसिद्धम्।

गुप्तकाशीति नाम्नः प्रसिद्धनगरात् क्रोशैकपरिमितपथमतिक्रम्य ललितादेवी सिद्धपीठस्य दर्शनं भवति। पीठस्यास्यपूर्वस्यांदिशि मन्दाकिनी नदी प्रवहति, अन्यासु दिक्षु शस्य श्यामला पर्वतीयभूमिः दरीदृश्यते। मन्दाकिन्यां चात्र एकं नल नामक कुण्डं वर्तते।[1] मन्दाकिनी निर्मल जलपूरित स्यास्य कुण्डस्नानस्य महान् महिमा। केदारनाथस्य दक्षिणदिग्भागेऽत्र बहूनि सन्ति देवतानां मन्दिराणि तीर्थस्थलानि च। शक्तिपीठस्य निकट एव गुप्तकाशीति[2] स्थाने गंगायमुनेति नाम्नी द्वे निर्झर स्तः। शंकरोऽप्यत्र निवसति सुगुप्तमाद्वापरयुगम्। स्थानादस्मात् द्विक्रोशपरिमितपथमुत्क्रम्य नारायणकोटीति नाम्नि प्राचीन ग्रामे जाखदेवता (यक्ष) मन्दिरं, नवग्रह मन्दिरं, भैरव मन्दिरं चाति प्रसिद्धम्। अमूषु प्रतिष्टितदेवानां दर्शनेन सद्यः स्वाभीष्टफलानि लभ्यन्ते। ग्रामादस्मादेव कालशिला-कालीमठ शाकम्भरी पीठ-त्रियुगीनारायण-गौरीकुण्ड-केदारनाथस्थित सन्मार्गदायिनी सिद्धपीठानि प्रति मार्गाः गच्छन्ति। ललितादेवी सिद्धपीठं समुद्रतटात् १२०० द्विशतैकसहस्रमीटरावधि तुंगतां दधाति।

ललितादेवी सिद्धपीठे एकं विशालमन्दिरमस्ति। प्राक्सृष्टमिदं शक्तिमन्दिरं पंचविंशतिफीटमितां वर्गाकारतां त्रिंशत्फीटमितां चोच्छ्रायतां दधाति। शीर्षस्थलेऽस्य एकं कलशं विराजते। वामभागे शक्ति मन्दिरस्य राज्ञ्याः दमयन्त्याः भूपतेः नलस्य च समाधिस्थले स्तः। एतस्यांभूमावेव लक्ष्मी-नारायण मन्दिरं वर्तते। विद्यते चात्र नलेश्वरनामकंशिवलिंगालंकृतं पाषाण-खण्डेभ्यः सुश्लिष्टमतिप्राचीनं भूतनाथ मन्दिरम्। मन्दिरेऽस्मिन् शिवलिंगस्य प्रतिष्ठा राज्ञानलेन अक्रियत इति जनाः कथयन्ति ; शक्ति ललितादेवी मन्दिरस्य पृष्टभागे स्थिते एकस्यां स्मारकीशिलापट्टिकायांमुत्कीर्ण शिलालेखेन ज्ञायत इदं ललितादेवी मन्दिरं त्रयोधिकत्रयोदशशततमे ईशवीये वर्षे अष्टादश्यैकशतोस्तरैकसहस्रतमे साकीयवर्षे यात्रिणां मणदेवेन निर्मापितम्। मन्दिरस्यान्तः गृहे एका शक्तिमूर्तिरपि तेन यात्रिणा प्रतिष्ठिता। उत्कीर्णस्य शिलालेखस्य

---

१. नलकुंडं च तत्रैव मन्दाकिन्याः परे तटे।
तत्र यः स्नाति मनुजो दहेज्जन्मार्तितं तमः॥ —के० २००-२४

२. केदार दक्षिणे भागे माने योजन ससृके।
ऊह्यं वाराणसी क्षेत्रं योजनद्वय विस्तरम्॥ —के० २००-१५
इदं स्थानं गुह्यतमं यतो गुप्तेति काशिका।
यस्याः संस्मराणादेवनश्यन्ति परमापदः॥ —के० २००-१७

भाषानुवादो उत्तराखण्डेतिहास पुस्तके शिवप्रसाद डबरालेन कृतः।[1]

प्रस्तरखण्डेभ्यः निर्मितमिदं ललितादेवी मन्दिरं द्वयोर्भागयोर्विभाजितं वर्तते- सभामण्डप गर्भगृहश्च। सभामण्डपे अखण्डाग्निः सदैव प्रज्वलति। तद्दर्शनात् मन्दबुद्धि जनाः धीमान् भवन्ति इति कथ्यते। शाक्ताः प्रभातकाले सभामण्डपेऽस्मिन् समागत्य मिलित्वा च शक्तिस्तवं पठन्ति। तदनन्तरं गर्भगृहं वर्तते, अत्रैकस्याः अष्टभुजासमायुक्तायाः सिंहाधिरूढायाः रक्तवस्त्र परिवेष्टितायाः शक्ते ललितादेवीमूर्तेः दर्शनं भवति। शिवशक्त्यात्मकमेकं पाषाणमयंलिंगमप्यत्र वर्तते। अन्येषामपि देवतानां गणेश. विष्णु, लक्ष्मी, सरस्वती, काली, योगेश भैरवादीनां मूर्तयः विराजन्तेऽत्र। ललितां मन्दिरेऽत्र विविधानि सन्ति भोजनपात्राणि, भोगपात्राणि, पूजापात्राणि, आयुधानि च। सर्वाण्येतानि वस्तूनि प्राचीनतमानि संदृश्यन्ते।

शक्तेर्दैनिकी पूजाऽस्मिन्पीठे भवति। पुरुषोत्तम नौटियाल इति नामा उच्चकोटीयो ब्राह्मण इदानीमत्र शक्तेर्पूजनं करोति। प्रतिदशवर्षानन्तरं शक्तिमूर्तिः शिविकायां संस्थाप्य ढोलमृदंगशंखादिभिर्वाद्यैः सह मासैकपर्यन्तं बदरीनाथ केदारनाथ- कालीमठादीनां पावनतीर्थानां यात्रां कुर्वन्ति क्षेत्रीयाः जनाः। यात्राकाले शिबिकातः सा शक्तिस्तान्भक्तान् प्रतिबोधयति। यस्मिन्दिशि गंतुं सा कांक्षति तत्रैव सा नीयते जनैरिति वाक्कथा लोके प्रसिद्धा जायते।

प्रतिवर्ष ज्येष्टमासस्य संक्रान्त्यामत्र बृहद् मेलापकस्यायोजनं भवति। मेलापकेऽस्मिन् शक्त्याः पूजनं कर्तुं संख्यातीताः भारतवर्षीयाः शक्तिभक्तारन्येजनाश्चापि सम्मिलिताः भवन्ति। अस्यां संक्रान्त्यामत्र समुपस्थिताः सर्वे भक्ताः प्रत्यूषे नलकुण्डे स्नान्ति। अनन्तरं ललितामन्दिरे समागत्य देव्याः दर्शनं कृत्वा परं मन्दाकिनीपयेन शक्तेरभिषेचनं, षोडशोपचाररीतया पूजनं हवनकुण्डे चात्र होमाष्टकद्रव्येण होमं

---

१. लिपि-कुटिला, भाषा-संस्कृत, तिथि ११६८ साके।

(१) स्वस्ति। श्रीदेवी·······नुमः। तत्र·······भद्रस्य।

(२) मनसा कर्मणा वाचा अंगुष्टाशा·······धीवत।
देवपितृ-प्रसादेन मण्देवस्य······· ।

(३) पुण्यकर्म भरादेव करिष्यिन्ति सुरालयम्।
भुक्तिमुक्ति फले तस्य······· ।

(४) सरस्वती प्रसादेन घटिता प्रतिभा सुभा।
सुक्र धरम·······साके ११६८।

भाषानुवाद-स्वस्ति। श्रीदेवी को नमस्कार। मन, कर्म और वचन से देव- सेवा में तत्पर मणदेव ने माता-पिता के प्रसाद से पुण्यार्थ तथा भुक्ति-मुक्ति की प्राप्ति हेतु देव-मन्दिर का निर्माण किया और सरस्वती के प्रसाद से उत्तम प्रतिमा की प्रतिष्ठा की। शुक्रवार ११६८ शाके।

कुर्वन्ति ।[1] भूयोभूयः शक्तिनाम्नां गायनतस्ते प्रदोषकाले स्वगृहान् निवर्तन्ते । तस्मिन्दिने विभावर्यामपि स्वगृहे दुर्गापूजनं तस्यारार्तिक्यं च भक्ताः कुर्वन्ति ।

अस्मिन्पीठे प्राचीनकालादेव पशुबलिना पूज्यते, नवरात्रावसरेषु शाक्ताः बहुसंख्यकानजान् महिषांश्च शक्तये उपहाररूपेण समर्पयन्ति ।[2] पूर्वं प्रचलितां हिसांत्मिकामिमांप्रथां समुन्मूलयितुं सात्विकीपूजायाश्च प्रयासाय क्षेत्रीयाः विद्वांस उत्सुकाः दृश्यन्ते ।

गुप्तकाशी इति क्षेत्रे निवसन्तः शाक्ताः प्रतिदिनमत्र महाकाली, महालक्ष्मी, महासरस्वती इति त्रिगुणात्मिकायाः शक्तेर्पूजनं कुर्वन्त्येव, किन्त्वत्र आश्विनमासस्य चैत्रमासस्य त नवरात्रिषु सकलोद्देश्यानां सिद्धये गुप्तकाशीस्थित विद्यापीठ संस्कृत महाविद्यालयस्य शिक्षकाः छात्राश्च देवीभागवतं मार्कण्डेयपुराणं चापि पठन्ति ।[3] ललिताशक्तेः दर्शनात्पूजनाच्च त्रिविधानि दुःखानि नश्यन्ति भक्ताश्चात्र शान्तिः सुखं चानुभूयते । धार्मिकाणां विश्वासकेन्द्रस्यास्य सिद्धपीठस्य संरक्षणार्थं शक्तेः पूजन-सामग्र्याः संकलनार्थं चात्र सम्यग् व्यवस्थाया अभावो वर्तते । मन्दिरस्य क्षेत्रे विद्यमानायाः द्वे् यकड़भूमेश्चापि नास्ति व्यवस्था काऽपि । एतस्य सिद्धपीठस्य महत्व-मवलोक्य ललितामन्दिरस्य सम्यग् प्रबन्धाय एकस्याः प्रबन्धकर्त्रेसमितेरावश्यता दृश्यते ।

## गौरीसिद्धपीठम्

गौरीदेव्याः नाम्ना प्रसिद्धं गौरीसिद्धपीठं हिमालयपर्वतस्य सुरम्याया-मुपत्कायां कैलासस्य ईशानकाणे मन्दाकिन्याः वामतटे विद्यते । ईशानदिशि प्रतिष्टता गौरीदेवी महेशानीति नाम्नाऽपि लोके प्रसिद्धा बभूव । अस्मै पुराणेषु मन्दासिद्धपीठमपि कथ्यते ।[4] यात्रिणः सोनप्रयाग इत्यस्मात्प्रसिद्धस्थानात् क्रोशत्रयपरिमितपथमतिक्रम्य गौर्याश्रमे गौरीदेव्याः दर्शनं कुर्वन्ति । अयमेव मार्गोऽत्रागन्तुमुपलभ्यते । केदारनाथ इत्यस्मात् स्थानादपि त्रिगव्यूति पथमतिक्रम्य अत्रागंतुं शक्यते ।[5]

---

१. वटादुम्बर सम्भूताः पर्प्पट्याः पिप्लस्य च ।
समिधस्तिलसिद्धार्थहविराज्यानिच क्रमात् ।। —वि० तं० ४-८१-५५

२. तत्र पूजा तु दुर्गायाः वलिपुष्पोपहारकैः ।
तस्य देवी परं तुष्टा सर्वसम्पद्करी भवेत् ।। —के० २००-२६

३. वसन्ते च शरत्काले यः कुर्य्याः पूजनं परम् ।
बलिपुष्पोपहारैश्चः तस्यै सर्वं विनिर्दिशेत् ।। —के० २००-३०

४. मन्दा हिमवतः पृष्टे गोकर्णे भद्रकर्णिका ।। —देवी भा० ७-३०-५६

५. त्रिगव्यूतौ मम स्थानाद्दक्षिणे श्रृणुतीर्थकम् ।
गौरीतीर्थमिदं ख्यातां सर्वसिद्धि प्रदायकम् ।।
यत्र त्वया महेशानि मन्दाकिन्यास्तटे पुरा ।
ऋतुस्नानं कृतं तद्वै गौरीतीर्थमितिस्मृतः ।। —के० ४२-४६-४७

गौरीपीठं परितः सर्वासुदिक्षु हिममण्डितशैलानामुच्चशिखराणि सुरम्योपवनानि वनानि च दृश्यन्ते। दर्शनीये द्वे जलकुण्डेऽप्यत्र वर्तेते, तयोरेकं शीतलजलपूरितम-परञ्चोष्णजलपूरितं विद्यते। शीतकुण्डमत्र पार्वत्याः ऋतुस्नानार्थं कटुष्णकुण्डं दैनिक स्नानार्थं च समुत्पन्नतां गतम्।[१] स्थानमिदं समुद्रतटात् द्विसहस्रमीटरावधि तुगंतां धारयति। शीताधिकतायाः प्रभावादत्र वर्षस्य ग्रीष्मवर्षाशरदृतुष्वेव यात्रिणः यात्रा कर्तुं शक्नुवन्ति गौरीपीठादस्मात् क्रोशैकपरिमितपदातिपथमाश्रित्य केदारनाथमार्गे चीरवासेति नाम्नः भैरवस्य स्थापना पूर्वकाले एव समभवत् स च क्षेत्रपालः क्षेत्रस्यास्य रक्षां करोतीति लोक विश्रुतं जातम्।[२]

इदं सिद्धपीठं पूर्वस्मिन् काले सत्याः पार्थिव शरीरस्य मुखभाग पतनेन सञ्जातमियं किम्वदन्ती लोके प्रसिद्धा। पुराणेष्वियं च गाथा निगद्यते-पुरा किल त्रिलोकजननी सती स्वपितुर्दक्षस्य मखे योगाग्निना निर्दग्ध शरीरा, अपरजन्मनि हिमालय पत्न्याः मेनयाः गर्भात्प्रसूता पार्वतीति नाम्ना विख्याता बभूव।[३] अष्टवर्ष-देशीयाः पार्वतीयं गौरीति नाम्ना जगति प्रसिद्धाऽभूत्। यतः शास्त्रेषु। (अष्टवर्षा भवेद् गौरी नववर्षा च रोहिणी दशवर्षंभवेत्कन्या अत ऊर्ध्वं रजस्वला) अष्टवर्षीया कन्या गौरीत्यभिधेयेन प्रथिता। सा अष्टवर्षीया गौरी पार्वती शंकरं वरयितुं कैलाश-नामपर्वतं जगाम। अपूर्वसुन्दरीमिमां गौरीमवलोक्य[४] भूतानामधिपतिश्शंकरः कामदेव प्रभावेण कामातुरोऽभवत्, कुमारीं गौरी प्रति कामस्येदं कर्मनिन्दनीयमिति मत्वा शिवस्तृतीयनेत्रानलेन कामं भस्मावशिष्टं चकार।[५] कान्तिमत्ता शैलात्मजा सौन्दयर्येण हरं विजेतुमक्षमा, मनोरथसिद्धये मन्दाकिनी तटे एकं कटुष्णकुण्डं निर्माय विष्णोस्तपश्च-कार।[६] तपसः प्रभावेण सुप्रसन्नोवशीभूतश्च भूतपतिः शंकरः तां गौरी पार्वतीं

---

१. कटूष्णं तु जलं तत्र सिन्दूराभा तु मृत्तिका।
तत्स्थानं देवदेवेशि ! न त्यजामि कदाचन ॥ —के० ४२-४६

२. गौरीतीर्थादूर्ध्वभागे पर्वते सौम्यदिक् स्थिते।
चीरवासा भैरवस्तु क्षेत्रं रक्षति मामकम् ॥ —के० ४२-५०

३. अथावमानेन पितुः प्रयुक्ता दक्षस्यकन्या भवपूर्वपत्नी।
सती सती योगविसृष्टदेहा तां जन्मने शैलवधू प्रपेदे ॥
—कुमार सं० १-२१, शिव पु० २-२-४३-३६

४. चन्द्रंगता पद्मगुणान्न भुंक्ते पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखं तु प्रतिपद्य लोलां द्विसंश्रयां प्रीतिमवाप लक्ष्मी ॥ —कु० १-४३
आवर्जिता किञ्चिदिवस्तनाभ्यां वासो वसना तरुणार्क रागम्।
पर्याप्तपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव ॥ —कु० ३-५४

५. क्रोधं प्रभो संहर संहरेति यावत् गिरः खे मरुताश्चरन्ति।
तावत् सवन्हिर्भवनेत्र जन्मा भस्मावशेषं मदनञ्चकार ॥ —कु० ३-७२

६. ततः पूर्वोत्तरे कोणे गौर्याश्रम इतीरितः।
यत्र पूर्वं महादेवी तपः मरममास्थितः ॥ —के० ५८-६५

स्वार्धांगिनीरूपेण स्वीचकार[१] अस्मिनेव काले गौर्याश्रमे पीठस्यास्य स्थापना शंकेरण कृतः। तदारम्य गौर्याश्रमे गौरीसिद्धपीठमिदं जगति प्रसिद्धं बभूव। कटूष्ण जलकुण्डमप्यत्र गौरीकुण्डनाम्ना प्रसिद्धमभूत्। कालान्तरे देवाः श्री क्षेत्रेऽपि शक्तेरस्याः स्थापना कारयामासुः।

गौरीपीठे शक्तेरेकंविशालमन्दिरं वर्तते। प्राचीनमन्दिरमिदं त्रिशत्फीटमितां वर्गाकारतां पञ्चाशत्फीटमितां चोच्छ्रायतां दधाति शिखर प्रदेशेऽस्य एका सुसज्जिता रक्तवस्त्र निर्मिता ध्वजा एकं च कांस्यनिर्मितं कलशं विलसति। यात्रिणा प्रवेशाय निर्गमनाय च द्वे द्वारेऽस्मिन् वर्तते। इमे द्वारे मन्दिरस्य पूर्वदक्षिणयोर्दिशोः स्तः। भक्ताः पूर्वद्वारेणप्रविश्यान्तगृहे शक्तिदर्शनं कृत्वा दक्षिणद्वाराद्बहिरागच्छन्ति। मन्दिरस्यास्य पूर्वभागे एकं सभाभवनमस्ति। तस्य च वाह्यभित्यामेकं सूचनापट्टं विद्यते। पट्टादस्मात् बदरीनाथकेदारनाथमन्दिरयोर्कपाटानामावर्तनावर्तयोर्व्यवस्था, दर्शनपूजनादीनाञ्चनियमाः सम्यग् ज्ञायते।

ये वदन्त्यपि केदारं गमिष्यामि इति क्वचिद्।
देवेशि ? पितरस्तेषां त्रिशतं कुलसंयुता॥
गच्छन्ति शिवलोके तु सत्यं सत्यं न संशयः।
यथा सतीनां त्वं चैव देवानां च यथा हरिः॥

एतच्छ्लोकद्वयं गौर्याश्रमसूचनापट्टस्य शीर्षस्थले विद्यते।

गौरीमन्दिरस्य गर्भगृहे एकं शक्तिस्वरूपं पाषणमयं लिङ्गं एका च सिंहस्था गौरीदेव्याः भव्यामूर्तिश्चतुर्भुजाकारिणी विराजते। अन्येषां दिवौकषां-लक्ष्मीनारायण, शंकरपार्वती, गणेश सरस्वती, घंटाकर्णा दीनाञ्च मूर्तयोऽप्यत्र सन्ति। शक्तेस्त्रिशूलमुद्गरगदामुशलादीन्यायुधानि देवीनृत्य सम्पादनार्थं ढोलमृंदगादि वाद्यानि चात्र विद्यन्ते।

गौरीसिद्धपीठस्य संचालनं बदरीनाथकेदारनाथ मन्दिरसमितिरेव करोति। समितेराज्ञया साम्प्रतं मन्दिरस्य संचालनं गौर्याश्रमनिवासिनावुमादत्तधर्मानन्द-नामकौ सेमवाल जातीयौ ब्राह्मणौ कुरुतः। प्रतिवासरीय शक्तिपूजनं त्वत्र गोस्वामी जातीयो ब्राह्मणः सम्पादयति। सरस्वत्या ध्यानं तु गौरीमन्दिरे प्रातःकाले सर्वेभक्ताः पठन्ति।[२]

---

१. पुनः कृत्वा तपस्तत्र शिवं वव्रे नृपं च सा।
गौरीभूत्वार्द्धवामांगी लीलाश्चक्रेद्भुताशिवा॥ —शि० पु० २-२-४३-४०
तपश्चरति देवेशि पार्वती गिरिजाऽधुना।
गौरी शिखरसंज्ञे च पार्वते दृढमानसा॥ शि० पु० २-३-२५-१४

२. ओं घण्टाशूलहलानि शंखमुशले चक्रं धनुः सायकं,
हस्ताब्जैर्दधती घनान्तविलसच्छीतांशुतुल्यप्रभाम्।
गौरीदेह समुद्भवां त्रिजगतामाधारभूतां महा,
पूर्वामत्र सरस्वतीमनुभजे शुम्भादि दैत्यार्दिनीम्॥
—तंत्रशास्त्रोक्तम् (सप्तशती अ० ५)

वैशाखमासादारभ्य आश्विनमास यावत् षष्मासेषु संख्यातीताः जनाः गौरीपीठमागच्छन्ति। प्रतिदिनमत्र बहवो जनाः कटूष्णशीतकुण्डयोः स्नानं कृत्वा गौरीदेव्याः स्तवपाठं, पूजनं, यज्ञं, दर्शनं च कुर्वन्ति। एकैकमहोरात्रमत्र सर्वेयात्रिणः गौर्याश्चरणेषु निवसन्ति यात्रिणां निवासाय गौरीतीर्थे भारतसरकारेण दानीमहानुभावैश्च धर्मशाला-आपणादीनाञ्च सम्यग् व्यवस्था विहिता।

प्राचीनकालादेवात्र शक्तेर्पूजनं सात्विकीविधिना क्रियते जनैः। अधुनाऽपि गौरीमन्दिरे शक्तेः सात्विकी पूजैव भवति। पीठेऽस्मिन् देवीभागवतपाठं, चण्डीपीठं, देव्याः स्तवपाठमपि विद्वांसः कुर्वन्ति। ये भक्ता अत्र समागत्य देवीं पूजयित्वा कृष्णाष्टम्यां चतुर्दश्यां वा नवकन्यां भोजयित्वा गौर्याः स्तोत्रं पठन्ति ते कांक्षितंफलं स्वल्पेनैव समयेन प्राप्तुवन्ति, तेषां धर्मार्थकाममोक्षाश्चतुर्विध पुरुषार्थाश्चसिध्यन्ति। एतस्याः सकलैश्वर्य रूपिण्याः गौरीदेव्याः ख्याति नवदुर्गासु गौरीति नाम्ना बभूव।[1] साक्षात्सरस्वती स्वरूपेयं शक्तिः शुम्भासुरमहन्यत इति तंत्रशास्त्रमपि मन्यते।[2]

## काली सिद्धपीठम्

काली इति नामधेयं सिद्धपीठं चमोली जनपदस्य गुप्तकाशी क्षेत्रे सरस्वती-नद्यास्तटे यज्ञपर्वतस्योपत्यकायामधितिष्ठति।[3] गुप्तकाशीमतिक्रम्य मस्ता इति स्थानं प्राप्य तस्मात् क्रोशैकपरिमितं पदाति पथमतिक्रम्य मन्दाकिनीनदीमुतीर्य नारायणक्षेत्रं यात्रिणः गच्छन्ति। तस्मात् मन्दाकिनी तटादपि क्रोशैकमितं पदातिपथमतिक्रम्य

---

१. गौरीति नाम्ना कन्या तु ख्यातिमेषा गमिष्यति।
सर्वदेवगणैः पूज्या हरिब्रह्मादिभिस्तथा॥ —शि० पु० २-३-८-३२
सौभाग्यदा शुभा गौरी उमा हैमवती प्रिया। —विद्या० तं० ३-५५-६
बाला शुद्धा च ललिता मालिनी च वसुन्धरा।
सरस्वती रमा गौरी दुर्गा च नव कीर्तिता॥ —कु० तं० १०-२७
(दुर्गासप्तशती कवच ३-५)
ततो गौरीतनोरेका प्रादुरासीत्कुमारिका।
सोवाच मिषतां तेषां शिवशक्तिः परादरात्॥ —शि० पु० ५-४७-१२

२. गौरीदेह समुद्भूता या सत्वेकगुणाश्रया।
साक्षात्सरस्वती प्रोक्ता शुम्भासुर निर्वाहिणी॥
—दुर्गा स० वैकृतिरहस्य १४ (देवी भा० ७-३०, देवी भा० ६-४)

३. केदार मण्डले दिव्ये मन्दाकिन्याः परे तटे।
सरस्वत्यास्तटे सौम्ये कालीतीर्थमितिस्मृतः॥ —के० ८५-१
श्रीकामरूपनिलयां वरविन्ध्यवासां जालन्धरे ज्वलनरूपधरां भवानीं।
कालीति नाम विभवां गिरिराजपीठे तां कालिकां कलिहरां सततंभजामः॥
—के० ८५-११

सरस्वती तटावस्थिते कालीमन्दिरे कालीदेव्याः दर्शनं कर्तुं शक्यते। कालीपीठस्य पूर्वस्यांदिशि यज्ञपर्वतस्योच्चशिखरे एका कालशिला विद्यते। प्रकृतिविलासभूतायां यस्यां शिलायां दशमहाविद्यानां पृथक-पृथक मूर्तयः यंत्राणि च विलसन्ति।[1] सर्वास्वेवदिक्षु शैलानामुच्चशिखराणि सघनानि बनानि च दृश्यन्ते। सरस्वतीनद्यामत्र सारस्वतकुण्डमपि वर्तते यात्रिणां स्नानार्थम्। प्राकृतिक सौन्दर्येण दर्शनीयं यस्या वर्णनं महाकविना कालिदासेन मेघदूत काव्ये कृतम्। पीठमिदं समुद्रतटात् द्विशतैकसहस्रमीटरावधि तुगंता धारयति। केदारखण्डेस्थितेऽस्मिन् कालीमठे शक्तिः कालीरूपेण निवसति।[2] प्रथितां गतमस्ति अलकापुरी अलकनन्दायाः उद्गमस्थलेऽप्यस्ति किन्तु मन्दाकिनी-सरस्वतीतिनद्योस्तटवर्तिनीं प्राकृतिकसुषमां दृष्ट्वा कालिदासस्यालकापुरीयमेव भवेदिति मन्येऽहं—

संतप्तानां त्वमसि शरणं तत्पयोद ? प्रियायाः
सन्देशं मे हर धनपति क्रोधविश्लेषितस्य।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
वाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या॥ मेघ० ७ पू० मे०
मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भि-
र्मन्दाराणामनुतटरुहा छायया वारितोष्णा।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः,
संक्रीडन्ते मुनिभिरमरप्रार्थिता यत्र कन्याः॥ —मेघ० ४ उ० मे०

कालीपीठस्य माहात्म्यविषये प्रचलितेयं कथाऽपि-पुरा खलु दानवोहयग्रीवः पीठेऽस्मिन् शक्तेस्तपसाधना[3] कृत्वा बहूनि वर्षाणि यावत् विष्णुना सह युद्धमकरोत्। युद्धेऽस्मिन् पराक्रमाद्धयग्रीवस्य त्रस्तो भूत्वा भगवान् विष्णुरप्यस्मिन् पीठे समागत्य

---

१. काली-तारा, तथा छिन्ना सुन्दरी बगलामुखी।
मातङ्गी श्यामला लक्ष्मी सिद्धिविद्या च भैरवी॥
धूमावती क्रमेणैव महाविद्या दशैव तु॥ —शक्ति संगमतंत्र ६-१६-१७

२. पुनश्च कालीनाम्ना सा मद्देशं प्राप्स्यति ध्रुवम्।
ज्योतिरूपेण सा तत्र कार्यार्थं सम्भविष्यति॥ —शि० पु० २-६-४७
पार्वत्यास्तु शरीराद्वै निः सृता चाम्बिका यदा।
कौशिकीति समस्तेषु ततो लोकेषु गीयते॥
निःसृतायां तु तस्यां सा पार्वती तनुवत्ययात्।
कृष्णरूपाऽथ संजाता कालिका सा प्रकीर्तिता॥ —देवी० २५-२३-२-३
कालीपीठे चतस्रस्तु पतित्वांगुलयो भुवि।
शक्तिश्च कालिका जाता नकुलीशश्च भैरवम्॥ —द० सं० इ० ५०

३. पुरादैत्यो महाबाहुर्हयग्रीवोऽति विश्रुतः।
तपश्चक्रे सरस्वत्यास्तीरे परमदारुणम्॥

कार्मुकोपरिशिरो धृत्वा शेते। किंचित्कालानन्तरं कार्मुकस्य छिन्नमानया प्रत्यंचया भगवान् विगतशिरो बभूव। दृष्ट्वेदमपक्रम स्वयम्भूः देवान् सम्बोध्य[१] विष्णोः दुःख निवारणार्थं सर्वकार्यार्थसाधनीं शक्तिं स्तुवन्तु इत्यकथयत्। श्रुत्व चेदं सहदेवैश्चत्वारोवेदा अत्रागत्य स्वरचितेदं शक्तिस्त्रोत्रं पपाठुः।

....वेदाऊचुः —

नमोदेवि ? महामाये विश्वोत्पत्तिकरे शिवे।
निर्गुणे सर्वभूतेशि मातः शंकरकामदे॥
त्वं भूमिः सर्वभूतानां प्राणाः प्राणवतां तथा।
धीः श्रीः कान्तिः क्षमा शान्तिः श्रद्धा मेधा धृतिः स्मृति॥
त्वमुद्गीथेऽर्धमात्राऽसि गायत्री व्याहृतिस्तथा।
जया च विजया धात्री लज्जा कीर्तिः स्पृहा दया॥
त्वां संस्तुमोऽम्ब ? भुवनत्रयसंविधान दक्षांदयारसयुतां जननीं जनानाम्।
विद्यां शिवां सकललोकहितां वरेण्यां वाग्बीजवासनिपुणां भवनाशकर्त्रीम्॥
ब्रह्मा हरः शौरिसहस्रनेत्र वाग्वह्निसूर्या भुवनाधिनाथाः।
ते त्वत्कृताः सन्ति ततो न मुख्या माता यतस्त्वं स्थिरजंगमानाम्॥
सकलभुवनमेतकर्तुकाया यदात्वं सृजसि जननि ? देवान् विष्णुरुद्राजमुख्यान्।
स्थितिलयजननं तैः कारयस्येकरूपा न खलु तव कथं चिद्देवि ? संसारलेशः॥
न ते रूपं वेत्तुं सकलभुवने कोऽपि निपुणो,
न नाम्नां संख्या ते कथितुमिह योग्योऽस्ति पुरुषः।
यदल्पं कीलालं कलयितुमसक्तः स तु नरः,
कथं पारावाराकलनचतुरः स्याद्दतमतिः।
न देवानां मध्ये भगवति तवानन्तविभवं,
विजानात्येकोऽपि त्वमिह भुवनैकासिजननी।
कथं मिथ्याविश्वं सकलमपि चैका रचयसि,
प्रमाणंत्वेतस्मिन्निगमवचनं देवि ? विहितम्।
निरीहैवासि त्वं निखिलजगतां कारणमहो,
चरित्रं ते चित्रंभगवति मनोनोव्यथयति।
कथंकारं वाच्य सकलनिगमागोचरगुण,
प्रभाव स्वं यस्मात्स्वयमपि च जानासि परमम्।

---

१. स्तुवन्तु परमां देवीं ब्रह्मविद्यां सनातनीम्।
गूढांगी च महामायां सर्वकार्यार्थसाधनीम्॥
तच्छ्रुत्वा वचनं तस्य वेदाः सर्वांगसुन्दराः।
तुष्टुवुर्ज्ञानगम्यां त्वां महामायां जगत्स्थिताम्॥
—देवी० भा० १-५-५१-५३

न किं जानासि त्वं जननि मधुजिन्मौलिपतनम्,
शिवे ! किंवा ज्ञात्वाविविदविध शक्तिंमधुजित ।
हरेः किंवा मातर्दुरिततितिरेषा बलवति,
भवत्याः पादास्ते भजननिपुणे क्वास्ति दुरितम् ।।
उपेक्षा किं चेयं तव सुरसमूहेऽति विषया,
हरेर्मूर्ध्नोनाशो मतमिह महाश्चर्य जनकम् ।
महद्दुःखं मातस्त्वमसि जननच्छेदकुशलाः,
नजानीयो मौलेर्विघटन विलम्बः कथमभूत् ।
ज्ञात्वा दोषं सकलदुरितापादितं देवि चित्ते,
किंवाबिष्णावमरजनितं दुष्कृतं पातितं ते ।
विष्णोर्वा किं समरजनितः कोऽपि वर्गोऽति वेगा,
च्छेतुं मातस्तव विलसित नैव विद्योऽत्रभूवम् ।।
किंवा दैत्यैः समरविजितैस्तीर्थदेशेसुरम्ये,
घोरं तप्त्वा भगवति वरं लब्धवद्भिर्भवत्याः ।
अन्तर्धानं गमितमधुना विष्णुशीर्षं भवानि,
द्रष्टुं किंवा विगतशिरसं वासुदेवं विनोदः ।।
सिन्धोः पुत्र्यां रोषिता किं त्वमाद्ये कस्मादेनां प्रेक्षसे नाथहीन ।
क्षन्तव्यस्ते स्वांशजातापराधो व्युत्याप्यैनं मोदितां मां कुरुष्व ।।
एते सुरास्त्वां सततं नमन्ति कार्येषु मुख्याः प्रथित प्रभावाः ।
शोकार्णवात्तेरय देवि ? देवानुत्याप्य देवं सकलाधिनाथम् ।।
मूर्धागतः क्वाम्ब ? हरेर्नविद्मो नान्योऽस्त्युपायः खलु जीवनेऽद्य ।
यथा सुधाजीवनकर्मदक्षा तथा जगज्जीवितदाऽसि देवि ? ।।

—देवी भा० १-५-५४-६८

इत्यनेन स्तोत्रपाठेन प्रसन्ना सती त्रिगुणात्मिका देवी देवान् वेदान् च समाश्वास्य[1] विष्णोः शिरसः स्थाने हयस्य शिरः समायोजयति स्म । तदा स भगवान् हयग्रीवो हयग्रीवदैत्यं जघान । ये जनाः वेदकृतेदं शक्तिस्रोत्रस्य पाठं कुर्वन्ति ते सर्वान् कामनाप्नुवन्ति ।[2] प्रसिद्धमिदं कालीसिद्धपीठं प्राचीनकाले दक्षयज्ञ दग्धायाः सत्याः

---

१. एवं स्तुता तदा देवी गुणातीता महेश्वरी ।
प्रसन्ना परमा माया वेदैः सांगैश्च सामगैः ।।
तानुवाच तदावाणी-आकाशस्था शरीरिणी ।
देवान्प्रतिसुखैः शब्दैर्जनानन्दकरी शुभा ।।
मा कुरुध्वं सुराश्चिन्तां स्वस्थास्तिष्ठन्तु चाऽमराः ।।
स्तुताऽहं निगमैः कामं सन्तुष्टाऽस्मि न संशयः ।।

२. यः पुमान्मानुषेलोके स्त्यौतेतां मामकीं स्तुतिम् ।
पठिष्यति सदा भक्त्या सर्वान्कामानवाप्नुयात् ।।

पार्थिवशरीरस्य दक्षिणपदस्य चतुरांगुलयः पतनेन प्रख्यातता गतम्। अत्र देवी काली-रूपेणापि समवतीर्णेति पुराणेषु कथा विख्याता-प्राक्काले देवानां दानवानां च भयंकरं युद्धं बभूव युद्धेऽस्मिन् शुम्भनिशुम्भरक्तबीजादयो बलिष्ठाः सर्वे दैत्यवंशीयराजानः जित्वा सर्वान् श्रेयसः दिवौकसः स्वर्लोके स्वाधिकारं चक्रुः। दैत्येभ्यः पराजितास्ते देवाः खलानां निग्रहार्थं हिमालयस्योपत्यकायामत्र शक्तिमुपासयाञ्चक्रुः। तपसः प्रभावेण कृष्णवर्णाशक्तिस्तत्रावतरत्।[1] अकथयच्च सा हे देवा? कालं प्रतीक्षस्व शीघ्रमेवाहमेतान् रक्तबीजादीन् दैत्यान् हनिष्यामि। इत्याश्वासनं प्राप्य देवाश्च ते स्वं स्वं स्थानमगच्छन्[2] अनन्तरं-सज्जनानामेतेषां दिवौकसां रक्षणाय सा शक्तिः सर्वान् दैत्यान् महति संग्रामे जघान। अनन्तरं च प्रसन्नास्तेऽमराः कालीरूपायाः शक्तेश्चात्र लोकानां रक्षणाय स्थापनां कृत्वा दिवं जग्मुः। तस्मात् कालादेवेदं क्षेत्रं कालीक्षेत्र नाम्ना सिद्धपीठं च कालीसिद्धपीठ नाम्ना प्रसिद्धं बभूव। असंख्यकान् दैत्यान् घातयित्वा सा कोटिमाहेश्वरी नाम्नाऽपि जगति प्रख्याता अभूत्।[3] कालीसिद्धपीठस्य पूर्वभागे राकेश्वर्य्याः देव्याः स्थलमस्ति, आदिकाले इयंदेवी सेवनादत्र चन्द्रमा गुरोः बृहस्पतेः शापाद्विमुक्तितो गतम्। कालशिलाऽप्यत्र वर्तते। अस्मिन् क्षेत्रे पार्वती शंकरयोर्पाणि-ग्रहणमभूत्। वर्तमानकाले किञ्चित्समय पूर्वमेवात्र देवप्रयाग निवासी आचार्य चक्रधर जोशी महाभागः शक्तिं समुपास्य परमां सिद्धिमलभत।

अस्मिन्पीठे शक्तेः कालीदेव्याः नूतनं विशालमन्दिरं निर्मितंविद्यते। अस्याधारशिला वर्तते शंखस्फटिक चत्वरे। मन्दिरमिदं शतफीटमितांवर्तुलाकारतां

---

श्रृणोति वा स्तोत्रमिदं मदीयं भक्त्या त्रिकालं सततं नरो यः।
विभक्तदुःखां सभवेत्सुखी च वेदोक्तमेतन्ननु वेदतुल्यम्॥
—देवी भा० १-५-६६-७३

१. इतिस्तुता सा गिरिराजपत्नी ब्रह्मादिभिर्देवगणैर्नतांसे।
आविर्बभूवाथ हिमालयस्य श्रृंगे यथा प्रातरिनोवभासे॥ —के० ८६-१६

२. कालीतीर्थं नामतश्चेदमत्र तुष्टावोहं मुक्तिदं भाग्यगम्यम्।
यूयं देवा निर्भया रक्तबीजात्स्वं स्वं स्थाने कालमन्वेषयन्त॥
—के० ८६-२१

मुखेन काली जगृहे रक्तबीजस्य शोणितम्।
तत्तो सावाजघानाथ गदया तत्र चण्डिकाम्॥ —दुर्गा स० ८-५७

३. असूया बहुरूपा च क्वचिदिन्द्रादि रूपिणी।
एवं चक्रेयतो माया कोटीः प्राणस्य बल्लभो॥
अतस्तस्या बभूवैतत्कोटिमाहेश्वरीति च।
नाम विख्याति माया तं स्वर्गाधिकफलप्रदम्॥
हिमवत्पर्वतेरम्ये देवैराराधिता सती।
तत्रैव वसति चक्रे लोकानां हितकाम्यया॥ —के० ९०-१५-१७

लोहयष्टिभिः परिवेष्ठितां त्रिशतफीटमितां चोच्छ्रायतां दधाति शिखरप्रदेशेऽस्य एकं त्रिशूलमेका च शक्तेः रक्तवस्त्रनिर्मिता पताका। प्राचीन मन्दिरस्य स्थाने नवनिर्मितस्यास्य कालीमन्दिरस्य पार्श्वे एव महालक्ष्मीमन्दिरं महासरस्वतीमन्दिरं, गौरीशंकरयोर्युगललीलामन्दिरं कालभैरवमन्दिरञ्चेति चत्वारि मन्दिराण्यधितिष्ठन्ति। महालक्ष्मी मन्दिरस्यान्तर्गृहे रजतधातुनिर्मिताऽष्टभुजा महालक्ष्मीप्रतिष्ठति। महासरस्वती मन्दिरेऽपि रजतधातु निर्मिता चतुर्भुजाधारिण्याः सरस्वतीदेव्याः दर्शनं भवति। प्रकोष्टेऽस्मिन् अखण्डाग्निः पार्वतीशंकरयोर्विवाहकालात् प्रज्वलतीति ऋत्विजः कथयन्ति। गौरीशंकरमन्दिरे गौरीशंकरयोर्युगललीलारूपे द्वे लिंगे पाषाणमये वर्तते। कालीभैरवमन्दिरे चात्र भैरवस्य प्राकृतिकं षाषाणलिंगमस्ति। लिंगमिदं बृहद् सिन्दूराभिः प्लावितं वर्तते। वर्णितेष्वेषु मन्दिरेषु विविधा प्राचीनाः मूर्तयः बहूनि लिंगानि च सन्ति। पुरातत्वान्वेषकेभ्यः सामग्रीणामत्र प्रचुरता सम्भाव्यते।

वर्तुलाकारं वर्तते कालीमन्दिरमिदं। चत्वारि द्वाराणि सन्ति अस्य मन्दिरस्यान्तर्गृह प्रवेशाय। गर्भगृहस्य मध्यभागे नातिस्वल्पे नाति विशाले गह्वरे पाषाणस्वरूपा कालीदेवी प्रतिष्ठितं विद्यतेऽत्र सा देवी रजतनिर्मितेनावरणेनाच्छादिता। न शक्नोतिकोऽपि जनः कालीलिंगस्य दर्शनं कर्तुम्। प्रतिवर्षमिदं लिंगमाश्विनमासस्य नवरात्रिषु महाष्टम्यांतिथौ रात्रौ समुद्घाटितं भवति विशेषविधि पूजाभिश्च पूज्यते। रजतपीठिकामुद्घाटूय च अस्यां तिथौ निशायां गाढान्धकारे मीलितनेत्राभ्यां ऋत्विजः शक्तेरस्या षोडशोपचारविधिना पूजनं कुर्वन्ति। अन्येषु दिवसेषु यात्रिणा भक्ताश्चात्र कालीरूपायाः शक्तेः रजतावरणस्यैव दर्शनं पूजनं च कुर्वन्ति।

कालीसिद्धपीठस्थितस्य लक्ष्मीमन्दिरस्य वाह्यतः भित्यामेकमुत्कीर्णशिलालेखमस्ति। लेखमिदं सम्यगर्थपरिशोधनाय पुरातत्वान्वेषकेभ्यः प्रेषितं इति ऋत्विजः ब्रुवन्ति, किन्तु लेखस्यास्य कुटिललिपिलिखितस्य पर्याप्तशब्दानां डवरालमहोदयेन संस्कृतलिपिकृतः।[१] तेषामेव शब्दानां स मनीषि देवनागरीलिप्यपि

---

१. लिपी कुटिला—भाषा संस्कृत—तिथि १२वीं श० वी०

(१) ओं सन्ध्या-समाधि-घटिताञ्जलितः स्वपाणौ
कृष्णौ सकेपि सुप क्षिणांस।
शर्व्वस्यवकर-संस्थित-तोयराशेः
संधित्र··········

(२) दयित येव गृहीतकेशः।
दक्षोद्भवां तरु-मपास्य शिरे प्रस्तुत
शर्व्व········पतिमवाप्य··········

(४) गिरिपति गृहगोप्ता महारुद्राभिधार

(११) बाल स्वभावत् स्वामी सर्वसंग्रामकृयत··········
रुद्र सूनुः कलिकाला शैलं··········

कृतवान् ।[१]

बदरीकेदारनाथ मन्दिरसमितिरेव कालीपीठस्यास्य संरक्षणं करोति। अधुना समितेराज्ञया सञ्चालनकार्यं मन्दिरस्यास्य नारायणसिंह नाम प्रबन्धको विदधाति स सर्वेभ्यो मन्दिरेभ्यः पूजा सामग्रीणां व्यवस्था करोति। दातृभिः शक्तये समर्पितानामुपहारद्रव्याणाञ्चात्र संग्रहं कृत्वा प्रतिवर्षे कार्तिकमासे प्रबन्धकः संगृहीतमिदं धनं समितेः कोषाध्यक्षाय ददाति।

यात्रिणां निवासाय अत्र सम्यग् धर्मशालापणादीनाञ्च सुव्यवस्था वर्तते। सिद्धपीठस्यास्य सर्वेषु मन्दिरेषु दैनिकी पूजा भवति। गौडजातीयो बच्चीरामाभिधेयो ब्राह्मणः भट्टजातीयः श्रीकृष्ण नामा ब्राह्मणश्चात्र प्रतिदिनं शक्ति-शिव, गणेश, भैरवाणां देवानां पूजनं कुरुतः। तौ अपि नियुज्येते बदरीनाथकेदारनाथसमितिना।

प्राक्कालादेवास्मिन्पीठे पशुबलिप्रथा प्रचलिताऽऽसीत्। इदानीमपि तस्याः प्रथायाः सम्यगेव पालनमत्र भवति।[२] नवरात्रावसरेषु स्वं स्वं कामानां पूरणाय बहून् महिषानजांश्च घ्नत्यत्र जनाः। कालीदेव्याश्चात्र सात्विकी-राजसी-तामसी त्रिविधा पूजा पूर्वकालादेव प्रचलिताऽभूत्।[३] अद्यापि सर्वेभक्ताः त्रिगुणात्मिकायाः शक्तेः स्वाभीष्टरूपं ध्यात्वा पूजनं कुर्वन्ति। रक्तपुष्पेभ्यः रक्तवस्त्रेभ्यः भक्ताः शक्तिमत्र समलंकुर्वन्ति च। किञ्चित्समय पूर्वमेव कालीपीठे देवदासी प्रथा प्रचलिताऽऽसीत् अत्र दीक्षागृहीत्वा बालिकाः गणिकावृत्तिनां (दासीवृत्तिनां) स्वजीवनं यापयन्ति स्म। अधुना तु नैतादृशी प्रथा।

ये भक्ताः एकवारमप्यत्रागत्य कालीरूपायाः शक्तेर्दर्शनं पूजनञ्च कुर्वन्ति ते स्वाभीष्टंफलमाप्नोति।[४] भाग्यशालिनः एवात्र यात्रांकर्तुं शक्तुवन्ति।

---

(१४) संग्रामकीर्ति प्राकृतकवयो।
(१५) कत्तुः शिला-कुट्ट कैः
(१६) ............कैः............

१. कालिकाला शैल कालीमठ के मन्दिर के निर्माता गिरिपति मन्दिर के गोप्ता रक्षक। महारुद्रनामक सामन्त के पुत्र रुद्रसूनु ने बाल्यावस्था में ही अनेक संग्रामों में विजय प्राप्त की।

२. केवलं बलिदानेन चाश्वमेध फलंलभेत्॥ —मातृकाभेद तं० १०-१७

३. पूजायित्वा महाकाली महाकालेन लालिताम्॥

—काली० तं० पृ० १०६ श्लोक १७७

४. ऐश्वर्यं कमला साक्षाद् सिद्धौ श्रीकालिकाम्बिका॥

—काली तं० ६०-१०८

अथवा पूजयेद्देवी दक्षिणां कालिकां पराम्।
कालीतंत्रोक्त विधिना सप्ताहं जपपूजनात्॥

—मातृभे० तं० पटल १ श्लोक ७

न केवलं कालीसिद्धपीठस्य महत्वं गढवालमण्डले एव वर्तते अपितु सर्वभारत-वर्षीया: जनारुत्कृष्टतामस्य सम्यग्विजानन्ति । आश्विनमासस्य शुक्लपक्षे तिथौ सप्तम्यां कालरात्र्यामथवा चैत्रमासस्य च शुक्लपक्षे सप्तम्यांतिथौ कालरात्र्यां ये जनाः सम्यग्विधिना कलियुगेऽस्मिन् कालीपूजनं कुर्वन्ति ते सूर्येन्दुसदृशं पदं प्राप्तुवन्ति। सिद्धपीठेऽस्मिन् भक्ताः शुक्लपक्षस्य सप्तम्यां तिथौ[1] (कालीकालयते सर्वं ब्रह्माण्डं स चराचरम् । कल्पान्त समये यातां कालिकां पूजयाम्यहमिति) मंत्रजाप्येनापि विपुलां सिद्धिं लभन्ते । जनाः शत्रुनाशार्थमत्रकालीपूजनं कुर्वन्ति अभयं च ते प्राप्नुवन्ति ।

## शाकम्भरी देवी सिद्धपीठम्

चमोलीजनपदे स्थिते त्रियुगीनारायण क्षेत्रान्तर्गत शुक्राश्रममण्डले वर्तते एकस्य पर्वतस्य सुरम्योपत्यकायां शाकम्भरीदेवी सिद्धपीठम्।[2] अस्योभयतः नन्दनीनदी

---

आरक्तभानुसदृशीं..........कालरात्रिं विचिन्तयेत् ॥
—विद्यां० तं० ७-१८०-१-३

कलौ काली कलौ काली कलौ काली तु केवला ।
साधिता कलनाथेन प्रत्यक्षा कालिका कलौ ॥
कादिकाली महादेवी हादित्रिपुरसुन्दरी ।
कादिहादि प्रभेदेन द्विधान्तापार्थसंहति ॥
कुलार्णवे तंत्र कौले वीर चूडामणावपि ॥ —मा० भे० तं० प० १-१२३
कालि कालि महाकालि प्रिये दक्षिण कालिके ।
कादिहादि मताधीशे षष्टिसिद्धि प्रदर्शिनी ॥ —शक्तिसंगम तं० प० १-१

१. कालिका शत्रुनाशार्थं पूजयेद्भक्ति पूर्वकम् ॥ —देवी० ३-२६-४९

२. अथान्यदस्ति देवेशि पीठं प्रत्यय कारकम् ।
शाकम्भरी यत्र जाता मुनीनां त्राणकारणात् ॥
तत्पीठं परमं प्रोक्तं सर्वपाप प्राणशनम् ।
गत्वा शाकम्भरी पीठे नत्वा शाकम्भरी तथा ॥
दशाश्वमेघयज्ञीयं फलंप्राप्नोति मानवः ॥ —के० ४६-१-२
द्वियोजन समाकीर्णं योजनत्रयमायतम् ।
नानातीर्थं समायुक्तं पीठं शाकम्भरं तव ।
गुह्याद्गुह्यतरं क्षेत्रं दर्शनात् पापनाशकं ।
यत्रस्थित्वापंचरात्रं नियतो नियतासनः ॥
प्राप्नोति विपुलां सिद्धिं जपन् वै जगदम्बिकाम् ।
इति तत्परमं क्षेत्रं कथितं ते मयानघे ॥ —के० ४६-१५-१७
शाकम्भरी शिवा शान्ता शारदा शरणागतिः ।
शातोदरी शुभाचारा शुम्भासुरविमर्दिनी ॥ —देवी० १२-६-१४५

सोननदी (हरदोई) च प्रवहति। शाकम्भर्याः स्थानात् परितो सर्वासु दिक्षु हिममण्डित पर्वतशृङ्गाणि विविधैः विटपैः सुसज्जितानि वनानि-उपवनानि च दृश्यन्ते। प्रसिद्धं सोनप्रयागतीर्थमुल्लंघ्य क्रोशैकपरिमितपदातिपथमतिक्रम्य शक्तेश्शाकम्भर्याः दर्शनं भवति। सिद्धपीठमिदं समुद्रतटाच्छतद्वयाधिक द्विसहस्र (२२००) फीटमितामुत्तुंगतां धारयति।

शाकम्भरी सिद्धपीठात् क्रोशैकपरिमितपदातिपथमतिक्रम्य उदीच्यांदिशि स्थितस्यपर्वतस्योपत्यकायां लक्ष्मीनारायणस्य च त्रियुगीनारायणं नाम एकं प्राचीनं विशालमन्दिरं प्रसिद्धम्। तस्य चान्तःगृहे विष्णोर्लक्ष्मूयोश्च प्रतिमे सत्ययुग एव प्रतिष्ठिते अभवताम्। सत्ययुगादद्यावधिपर्यन्तं त्रिपुगीनारायणमन्दिरे अखण्डाग्निः प्रज्वलति। ब्रह्मविष्णुरुद्रसरस्वत्यादीनां कुण्डानामुत्पत्तिरपि प्राचीनकाले एवात्र बभूव। येषां स्पर्शनदर्शनस्नानैः सर्वेऽनर्थाः नश्यन्ति।

विष्णुलक्ष्म्योर्दर्शनेन पूजनेन चात्र सर्वाः सम्पत्तयः प्राप्नुवन्ति जनाः। शाकम्भरीपीठस्योत्पत्ति स्थापनायाश्च सम्बन्धे पुराणेष्वेयं प्रसिद्धिः प्राचीनकालेऽमरलोके देवैः सह दानवानां तुमुलं युद्धं बभूव। संग्रामेऽस्मिन् देवाः पराजिता अभूवन्। दैत्याश्च क्रूरशासकत्वरूपेण शतवर्षाणि यावत् क्षितिं शशासुः। धर्मविहीनानामेतेषामसुराणां शासनकाले सर्वे सज्जनाः देवाश्च उत्पीडिता अभवन्। वृष्टिश्चापि नाभवत्। वृष्टेरभावात् सर्वतस्तडागाः वारिविहीनाः वनानि वनस्पति विहीनानि, क्षेत्राण्यपि च धान्यविहिनान्यभवन्। एतेन दुर्भिक्षेण तृष्णाक्षुधाम्यामाकुलीः भूत्वा देवाः मानवाश्चात्र हिमालयस्योपत्यकायामागत्य आपत्तीनां निवारणार्थं शक्तेरुपासनां चक्रुः। किञ्चित्कालानन्तरं संसारस्य कल्याणार्थं शताक्षीरूपिणी शक्तिरत्र प्रादुरभूत्। एतस्मिनन्तरे तस्याःशरीराद्दशमूर्तय उत्पन्नाऽभवन्[1] इति शाकम्भरीशक्तेरुत्पत्ति कथा।[2]

---

१. एतस्मिन्नन्तरे तस्याः शरीराद्रम्यमूर्तयः।
कालो तारा तथाच्छिन्नमस्ता श्रीविद्या भुवनेश्वरी॥
भैरवी बगला धूम्रा श्रीमत्त्रिपुरसुन्दरी।
मातंगी च महाविद्या निर्गताः दशशक्तयः॥
असंख्याता ततो जाता मातरो दिव्यमूर्तयः।
चन्द्रलेखा धरास्सर्वा विद्युत्कान्तिसमप्रभा॥ —शि० पु० ५-५०-३०

२. ततौ वै दक्षिणे भागे त्रियोजनमिते स्थले।
शाकम्भरीति विख्याता सर्वकामेश्वरीवरा॥
तस्या संदर्शनादेव सर्वपापैः प्रमुच्यते।
शाकेश्वरो महादेवः प्रत्यक्षं सिद्धिदायकः॥
पुरात्रैव महादेवी मुनीन् तपसिनाश्रितान्।
विग्रहे शतवार्षिक्यं शाकैः स्वांगसमुद्भवैः॥
भरयामास परमा ततः शाकम्भरी मता।
प्रत्यक्ष सिद्धिदा देवी दर्शनात्पापनाशिनीम्॥ —के० १३०-२३-२६

सा शक्तिः शाकम्भरी हिमालयप्रान्तेऽत्र निवासं कृत्वा ताः दशमहाविद्यानाम्ना जगति विख्याताऽभूवन्। एताभ्यः दशमूर्तिभ्यस्तत्काल एव असंख्याताः मूर्तयः समजायन्त। जीवानां प्राणरक्षणार्थं शक्तिः सद्यएव शाकवृक्षाणामुत्पत्तिं चकार। बुभुक्षुणा पीडिताः सर्वे जीवाः शाकपर्णान्यभक्षयन्। तस्मात्कालादेव शाकम्भरी नाम्नी शक्तिः जगति प्रसिद्धा बभूव। तदनन्तरं सा शक्तिः अत्याचारिणोऽसुरान्जघान। शक्तेरेतद्कर्म-प्रसंशन्तः स्वर्लोकादेवाः पुष्पवर्षाः मेघाश्च वारिवर्षाश्चक्रुः तस्मिनेव काले रुरु सुतम् दुर्गनामकं राक्षसमपि शक्तिरत्रैव जघान। इथं शक्तिरेतेन पूर्वोक्तेनकर्मणा शाकम्भरी शताक्षी दुर्गेति नामभिर्लोके प्रख्याताऽभूत्।[1] शाकम्भरी पीठे शाकम्भरीरूपिण्याः शक्तेः द्वे मन्दिरे स्तः। तयोरेकमतिप्राचीनमपरंच नूतनं वर्तते। न ज्ञायते प्राचीन-मन्दिरस्य रचना अत्र कदा संजाता तस्य तु आकारमपि ध्वस्ततां गतम् दृश्यते। तस्मिन्मन्दिरे बहूनां देवानां मूर्तयो विराजन्ते। इमाः मूर्तयः सत्ययुगादेव एनांभुवं समलकुर्वन्ति इति लोके प्रसिद्धः।

सिद्धपीठेऽस्मिन् नवीन मन्दिरस्य निर्माणकार्यं पूर्वबंग (बंगाल) प्रान्त निवासिनी सावित्री देवी षट्त्रिंशदधिकाष्टदशशतसाकीयवर्षे श्रावणमासस्य पौर्णमास्यां तिथौ सम्पूर्णतां सम्प्रापयामास। मन्दिरस्य वाह्यतोभित्यां एकस्यां शिलापट्टिकायां वर्तते तत्र एको शिलालेख—

आस्ते पूर्वबंग राज्यात् त्रिपुर इति देशः शैलमालावकाशः।
आसीनस्मिन् यशस्वी मनजनयपरभारत ठाकुरेयः॥

---

१. असमर्थं त्वया रूपमनन्ताक्षिमयं धृतम्।
मुनया कीर्तियिष्यन्ति शताक्षीं त्वामतोऽम्बिके॥
आत्मदेह समुद्भूतैः शाकैर्लोकामृता यतः।
शाकम्भरीति विख्यातं तत्ते नाम भविष्यति॥
दुर्गमाख्यो महादैत्यो हतो यस्मात्ततः शिवे।
दुर्गा भगवती भद्रां व्याहरिष्यन्ति मानवाः॥ —शि० पु० ५-५०-३४-३६
या शताक्षीस्मृता देवी सैव शाकम्भरी मता।
सैव प्रकीर्तिता दुर्गा व्यक्तिरैकेवत्रिस्चपि॥ —शि० पु० ५-५०-५१
ततः शतेन नेत्राणां निरीक्षिष्यामि यन्मुनीन्।
कीर्तयिष्यन्ति मनुजा शताक्षीमिति मां ततः॥
ततोऽहमखिलं लोकमात्मदेहसमुद्भवैः।
भरिष्यामि सुराः शकैरावृष्टैः प्राणधारकैः॥
शाकम्भरीति विख्यातिं तदा यास्याम्यहं भुवि।
तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम्॥
दुर्गादेवीति विख्यातं तन्मे नाम भविष्यति।
पुनश्चाहंयदा भीमं रूपं कृत्वा हिमाचले॥ —दुर्गा स० ११-४७-५०

सावित्री तस्य पत्नी स्वरचितभवने स्थापयामास दुर्गी ।
तन्वक्षीन्द्र प्रमाणे त्रिपुरपति शके श्रावणी पौर्णमास्याम् ॥

मन्दिरेऽस्मिन् सा देव्योपासिका तस्मिन् काल एव ताम्रनिर्मितायाः एकस्याः शक्तिदेव्याः प्रतिमाया अपि स्थापनां कारयामास । इयं शाकम्भरीमूर्तिश्चतुर्भुजाधारिणी फीटत्रयोच्छ्रयपरिमिता वर्तते । नूतनमिदं शक्तिमन्दिरं विंशतिफीटमितां वर्गाकारतां अष्टादशफीटमितामुन्नतां धारयति । मन्दिरस्य शिखरे एकं त्रिशूलं एका रक्त वस्त्र-निर्मिता पताका च विद्यते । मन्दिरेऽस्मिन् शक्तिमूर्त्या सह शिवलिंगमपि प्रतिष्ठते । अन्येषां पाषाणनिर्मितानां रुरुभैरव[१]-गणेश-लक्ष्मी-विष्णु-सरस्वती-शंकरादीनां देवाना-मूर्तयोप्यत्र विलसन्ति ।

तीव्रशीत प्रभावेण न शक्नुवन्ति जनाः शीततौं यात्रा कर्तुं पीठस्यास्य आवैशाखाश्विनमासं यावत् षण्मासेषु अस्मिन् पीठे बहवो यात्रिणः समागत्य शाकम्भरीदेव्या पूजनं कुर्वन्ति अधुना शक्तेर्दैनिकी पूजा सेमवाल जातीयोबच्चीराम नाम्नो ब्राह्मणः सम्पादयति । स सात्विकविधिना शक्तिमर्चयति ।

पूर्वकालादेवाऽस्मिन् पीठे शक्तिपूजायाः महत्वम् वर्तते । द्वापर युगे पाण्डवा अपि शाकम्भर्या पूजनार्थं एतत् पीठं समागता आसन् । ते चात्र दुर्गापूजनमकुर्वन् ।[२] साम्प्रतमपि संख्यातीता यात्रिणोऽत्रागत्य शक्तेर्दर्शनं पूजनं च कुर्वन्ति । भक्ताश्च ते बहून् द्रव्योपहारान् शक्तये समर्पयन्ति । ये जनाः एकवारमपि शाकम्भरी पीठस्य यात्रां कुर्वन्ति, ते भक्ताः शताक्षी प्रसादात् प्रभूतं धनमर्जयन्ति सुगतिं सुसन्ततीं च ते प्राप्नुवन्ति । न्यासावाहनादिभिः दुर्गा पूजनेन ज्वरादपि दोषेभ्यः शान्तिमाप्नुवन्ति ।[३] (शुक्लपक्षस्याष्टम्यां[४] तिथौ दुर्गात्त्रायति भक्तं या सदा दुर्गार्तिनाशिनी, दुर्ज्ञेया सर्व-देवानां तां दुर्गा पूजयाम्यहमिति) मंत्रजाप्येन जनाः स्वर्गंप्राप्नुवन्ति । नवरात्रपर्वषु[५]

---

१. भैरवस्तत्प्रदेशे वै रुरुनाम्नेति विश्रुतः ।
घंटाशत समायुक्तोनत्वा तं संविशेत्ततः ॥ —के० ४६-३

२. दुर्गा तारयसे दुर्गे तत्वं दुर्गास्मृता जनैः ।
कान्तारेष्ववसन्नानां मग्नानां च महार्णवे ॥ —महाभा० वि० पं० ६-२०
शंक चक्र धनुर्वाणान् धारयन्ति त्रिलोचनाम् ।
दुर्वादलनिभांबन्दे दुर्गां दुर्गति हारिणीम् ॥ —वि० तं० ५-१०५-७

३. पंचाशदा वृतिन्यासा ज्वरस्तीव्रोऽपि नश्यति ।
दुर्गापीठे पुराप्रोक्ते ध्यात्वा देवीं प्रपूज्यते ॥ —वि० तं० २२-१७९-३

४. देवी भा० ३-२७-६०

५. दुर्गा दुर्गार्तिशमनी दुर्गापद्विनिवारिणी ।
दुर्गमच्छेदिनी दुर्गसाधिनी दुर्गनाशिनी ॥
दुर्गतोद्धारिणी दुर्गनिहंत्री दुर्गमापहा ।
दुर्गमज्ञानदा दुर्गदैत्यलोकदवानला ॥

अस्मिन् सिद्धपीठे ये जनाः शक्तेः द्वात्रिंशन्नाममालां पठन्ति ते सद्यैव वांछितं सुखं लभन्ते । न दृश्यते महामहिमशालिन्याः शक्त्याः पीठस्य संरक्षणार्थं काऽपि समुचिता व्यवस्था। शक्तेर्महत्वमवलोक्य व्यवस्थार्थमत्र एकस्याः मन्दिर समितेरनिवार्यता वर्तते।

## सन्मार्गदायि पीठम्

हिमालयस्य हिममण्डितशैलशिराणामधोभागे एकस्यां परमोत्कृष्टायामुपत्यकायां साक्षाच्छिवरूप सुप्रसिद्धकेदारनाथमन्दिरं प्राचीन कालादेव प्रतिष्टितं विद्यते । मन्दिरस्यान्तगृहे एकं बृहदाकारकं प्राकृतिकं पाषाणमयं शिवलिंग वर्तते । मन्दिरस्य सम्मुखेऽत्र सन्मार्गदायि[1] इतिनाम्ना प्रसिद्धं सिद्धपीठमस्ति । सिद्धपीठस्यास्य पार्श्ववर्तिस्थलेषु-कालभैरवमन्दिरं, सत्यनारायणमन्दिरं, पंचमुखीमहादेवमन्दिरम् ईशानेश्वर मन्दिरं, शंकराचार्यसमाधिमन्दिरमित्येतेषां मन्दिराणां मन्दिरेषु च प्रतिष्ठितानां देवानां दर्शनं भवति ।

सन्मार्गदायि सिद्धपीठं समुद्रतटात् पंचशतैकाशीत्यधिकत्रिसहस्रमीटरावधि तुंगतां धारयति । स्थानादस्मात् परितश्चतुर्षुदिक्षु हिमालयस्य हिमवृत्तानि धवलोतुंग शिखराणि रजतखण्डानीव विराजन्ते। शीतप्रकोपादत्र वनस्पतीनामभावो दृश्यत एव किन्तु वायुमण्डलस्यातितनुत्याज्जनानां श्वासा अप्यवरुद्धा भवन्ति । प्रभवन्त्यस्माद्धिमशैलादेव महाजलौघा, सुश्रोणी, मन्दाकिनी ।[2] ताश्च केदारखण्डभूमिमार्द्रयन्ती भारतभुवं पवित्रयन्ति । हिमाच्छादितेष्वत्र पर्वतशिखरेषु हिरण्यगर्भतीर्थे स्फाटिकलिंगं, वन्हि-

---

दुर्गया दुर्गमालोका दुर्गमात्मस्वरूपिणी ।
दुर्गमार्गप्रदांदुर्गमविद्या दुर्गमाश्रिता ।।
दुर्गमज्ञानसंस्थाना दुर्गमध्यानभासिनी ।
दुर्गमोहा दुर्गभगा दुर्गमार्थस्वरूपिणी ।।
दुर्गमासुरसहंत्री दुर्गमायुधधारिणी ।
दुर्गमांगी दुर्गमगा दुर्गम्या दुर्गमेश्वरी ।।
दुर्गभीमा दुर्गभामा दुर्गभा दुर्गदारिणी ।
नामावलिमिमां यस्तु दुर्गायाः मम मानवः ।।
पठेत् सर्वभयान्मुक्ते भविष्यति न संशयः ।।

१. केदारपीठ सम्प्रोक्ता देवी सन्मार्गदायिनी ।
मन्दा हिमवतः पृष्टे गोकर्णे भद्रकर्णिका ।। —देवी भा० ७-३०-५६

२. महाजलौघा सुश्रोणी धारामन्दाकिनी मता ।
केदारनिलया ख्याता गंगाकेदार संज्ञका ।।
निसृता गंगया देवि पूर्व शेष गृहीतया ।
यासु स्नात्वा वरारोहे शिवसायुज्यमाप्नुयात् ।।
कामतो कामतो वापि भक्त्या भत्यापि पार्वति । —के० ४०-३६-३७

तीर्थं, महापन्थाः भृगुतुंग, रेतष्कुण्डं, हंसकुण्डम्, अमृतकुण्डम्, उदककुण्डम्, ईशानकुण्डं, चूरानाडीतालं (गांधीसरोवरम्) वासुकीतालं बहून्येतानि एतादृशानि च पावन निर्मल-जलपूरितानि सन्ति कुण्डानि सरांसि च। किंबहुनोक्तेनास्मिन् विषये वर्णयामासुर्विद्वांसः महिमानं केदारतीर्थस्य प्राचीन कालादेव।[1]

अत्र सत्याः मृतशरीस्य विष्णोः सुदर्शनचक्रकर्तितस्य वामहस्तभागोऽपतत्। स्त्रीणां वामभागं शुभं सन्मार्गाणाञ्च प्रणेता भवीतीति मत्वा शिवेन अस्मिन् स्थाने सन्मार्गदायिनः सिद्धपीठस्य स्थापना प्रतिष्ठा कृता। कालान्तरे शंकरोऽप्यत्र न्यवसदिति किम्वदन्ती लोके प्रसिद्धाऽभूत।

अस्मिन् पीठे शक्तेः प्राचीनमन्दिरमासीत्। किन्त्वधुनाऽस्मिन् स्थाने नवीन मन्दिरस्य रचना संजाता। नूतनं शक्तिमन्दिरमिदं विंशतिफीटमितां वर्गाकारतां अष्टादशफीटमिता चोच्छ्रायतां दधाति। पाषाणखण्डैः सुश्लिष्टैर्निर्मितस्य मन्दिरस्य शीर्षस्थले पित्तलधातुनिर्मितमेकं परमसुन्दरं कलशमस्ति एका च पताका अप्यत्र विलसति।

सन्मार्गदायिनी मन्दिरे प्रवेशाय निर्गमनाय च एकमेव द्वारमस्ति। मन्दिरस्य मुखभागे एकं सभामण्डपमपि विद्यते। मन्दिरस्य गर्भगृहे एकं पाषाण लिंगं वर्तते, यस्य दर्शनयात्रेणैव मानवानां कल्याणं जायते। चतुष्कोणेषु भित्तिकासु चात्र नवदुर्गाणां भव्याः मूर्तयः पृथक-पृथक विराजन्ते। एताः मूर्तयः सन्ति पाषाण निर्मितानि बहूनि वाद्यान्यायुधानि प्राचीन पूजा पात्राणि समुपतिष्ठन्ति।

केदारनाथधाम्न्यस्मिन्पीठे घण्टाध्वनिना शंखशब्दैश्च सह ऋत्विग्भिश्शक्तेर्पूजनं क्रियते। राजसी तामसी वा पूजा प्रचलिता नास्त्यत्र प्राचीनकालादेव। शक्तेः सात्विकी पूजायाः महत्वमस्मिन्पीठे वर्तत इति।

वैशाखमासादारभ्य आश्विनमास यावदेव यात्रिणः पीठस्यास्य यात्रांकर्तुं शक्नुवन्ति। अन्येषु षण्मासेषु हिमेनाच्छादितोपत्यकायामत्र कैरपि गन्तुं न शक्यते। केदारनाथमन्दिरस्य कपाटैः सह शक्तिमन्दिरस्य कपाटाऽपि आवृताऽनावृता वा भवन्ति

सञ्चालनमस्यपीठस्य केदारनाथबदरीनाथमन्दिर समिति करोति। समितेराज्ञया शुक्लजातीयो मनीषा कल्पेश्वरेण साम्प्रतं सम्पाद्यते सन्मार्गदायि शक्तेर्पूजनं चात्र। सः केदारनाथस्य पण्डाऽपि अस्ति। यात्रिभ्योऽपि अत्र सम्यग्

१. केदारखण्ड अध्याय ४०-४१। वामन पु० अ० ३६
व्यासस्मृतिः अ० ४। लिङ्ग० पु० अध्याय अ० ९२
पद्मपु० पा० अ० ९१। कूर्म० पु० अ० ३६
गरुडपुराण अ० ८१
महाभारत शान्तिपर्व अ० ३५
महाभारत शल्यपर्व अ० २८

व्यवस्था वर्तते । तेभ्यः स्नानभोजनावासादीनां समुचिता व्यवस्था भारतसरकारेणकृता गुप्तकाशीनिवसताभिः केदारनाथपण्डाभिश्च ।

ये भक्ताः सन्मार्गदायिनि पीठे शक्तेर्यज्ञं, दर्शनं पूजनं स्त्रोत्रपाठं च कुर्वन्ति सन्मार्गदायिनि शक्तिस्तेषां दुष्पथं नाशयति, सत्पथे च तान् नियोजयति । यद्यपि अस्यसिद्धपीठस्य यात्रा परमकठिना वर्तते, तथापि अस्य पावनतामवलोक्य वैदेशिकाः भारतीयाश्च संख्यातीता जनाः ग्रीष्मवर्षाशरद्दतुषु केदारनाथस्य सन्मार्गदायिनि पीठस्य च दर्शनं कुर्वन्त्येव । धार्मिकाश्चेतेज्योर्तिर्मठेऽस्मिन् समागत्य शक्ति शिवयोर्दर्शनात् परमैश्वर्यं लभन्ते । पीठस्यास्य महत्वं सर्वे भारतीयाः स्वीकुर्वन्ति ।

ये जनाः केदारनाथस्य सन्मार्गदायि सिद्धपीठस्य च यात्रां कुर्वन्ति ते इह लोके वाञ्छितफलं भुक्त्वा अन्ते मोक्षं प्राप्नुवन्ति[1] अत्र पितृणां श्राद्ध कर्तारः परमपदं लभन्ते ।[2]

---

१. दृष्ट्वा केदारनाथं मां पीत्वा रेतोजलं मम ।
शिवलिंगं प्रजायेत बृद्धि तस्य महेश्वरि ॥
यस्मिन् कस्मिन् नपि शिवे काले षै यत्र कुत्रचित् ।
मृतः शिवपुरे याति पापी चापि शुभस्तथा ॥
यत्र देशे तु यो मर्त्यः केदारेश्वर दर्शने ।
इत्युद्दिश्य मृतो देवि शिवो भवति मानवः ॥ —के० ४२-४२-४४

२. पितृणां श्राद्धकर्तारो गच्छेयुः परमं पदम् ।
नरकस्थातु पितरो जन्मजन्मसमुद्भवाः ॥
यस्माज्जलमयी भूमिः पदन्यासमुकंपिता ।
केदारक्षेत्रमाख्यातं तीर्थानां तीर्थमुत्तमम् ॥ —के० ४२-४७-४१

# पंचमोऽध्यायः

## बगलाक्षेत्रे सिद्धपीठानां विशेषवर्णनम्

निर्धारित क्षेत्रमिदं बगलादेवी नामधेयं मन्दाकिन्याः वामतटवर्तीन्द्रासना सिद्धपीठादारम्य यमुनोत्तरी यावत् लम्बमानः गंगोत्तर्याः मसूरीनगर पर्यन्तं विस्तीर्णं वर्तते। क्षेत्रस्यास्य प्रमुखतीर्थस्थानं गंगोत्तरीक्षेत्रं, यमुनोत्तरीक्षेत्रं, बूढ़ाकेदारक्षेत्रं चास्ति। क्षेत्रेऽस्मिन् विद्यमानाद्धिमालयपर्वतादुद्भवन्ती भागीरथी-कालिन्दी-मिल्लंगना-चन्द्रभागानद्यः भूभागमिदं पवित्रयन्ति। अन्येऽपि नदीनदाश्चात्र सन्त्यसंख्याताः। पावन क्षेत्रेऽस्मिन् संख्यातीतानि विद्यमानानि पुण्यस्थलानि हिमालयस्य देवभूमित्वं ख्यापयन्ति। पर्वतानामुर्पत्यकासु गृहं कल्पयित्वा तत्रैव निसन्तो जना उच्चावच भूभागेषु महता प्रयासेन सोपाननिभानि क्षेत्राणि रचयित्वा पशुपालनं कृषिकार्यं च कुर्वन्ति। अत्रत्याजनाः गोधूमयवकोद्रवश्यामकधान्यसर्षपादि अन्नानि सेवाल्वार्द्रालु-नारंगक्षोटकादि फलानि चोद्पादयन्ति। गाः महिषानजां अवींश्च पालयन्ति। क्षेत्रस्यास्य विशालभूभागोऽरण्यैः हिममण्डित पर्वतखण्डैश्च संवेष्टितो दृश्यते। अचिरात् पूर्वमेवेदं क्षेत्रं साम्राज्यवादेः परिपीड्यते स्म तदा एकाऽप्युच्चशिक्षासंस्था माध्यमिकी-शिक्षासंस्था च नासीदत्र येनेदं क्षेत्रं शिक्षायाः क्षेत्रेऽधुना सर्वकारेण कृते महता-प्रयासेनापि उषाकाल मेवानुभवति। साम्प्रतमस्मिन् क्षेत्रे सर्वकारः भागीरथ्यां बन्धान्निर्माय विद्युदुत्पादनेन सह कुल्याभिः सेचनस्य व्यवस्था क्रियमाणे प्रयत्न-शीलावलोक्यते। अत्र द्वौ वृहत्तरौ मनेरीटिहरीबन्धौ निर्माणाधीनौ स्तः। एभिः बृहत्तरबन्धैः भाविकाले जनधनादीनां महती हानिरपि भवितु शक्यते, अत एषामपेक्षा देशस्योन्नयनाय नदीषु बहवो लघुबन्धा अपेक्षिताः।

अत्र निवासिनां मानवानां वेशभूषा सरणिः प्राचीनायाः भारतीयायाः संस्कृते-रनुभावयति। एषां पारावारिको दम्पत्योः पितापुत्रयोः मातृभगिन्योश्च सम्बन्धः शोभनो दरीदृश्यते। अत्रत्यानां जनानां-दुर्गा-भैरव-नागराज-शिव जाखदेवता नृसिंहाश्च मुख्याः देवताः सन्ति। अस्मिन् क्षेत्रे देवानामसंख्यानि प्राचीन्यर्वाचीनानि मन्दिराणि सन्ति, किन्त्वत्रत्यानां निवासिनां सिद्धपीठेषु भव्या भावना समवलोक्यते। नवरात्र-पर्वष्वत्रत्या जनाः प्रवासिनोऽपि गृहमामंत्र्य परिवारेण सुहृद्जनैश्च सार्द्धं सर्वकार्याणां सिद्धये सिद्धपीठानां नियमपूर्विकां यात्रां कुर्वन्ति। अत्रत्याजनाः धार्मिक-सामाजिक-सांस्कृतिक-राजनीतिक-दार्शनिकादीनां कार्याणां सिद्धये सिद्धपीठानां दर्शन तत्र प्रतिष्ठितानां शक्तिनां पूजनं एकान्ततः साधनं मन्यन्ते। बगला संज्ञके क्षेत्रेऽस्मिन् बगलामुखी-कामेश्वरी-कूर्मासना-इन्द्रासना-छिन्नमस्ता-यवनेश्वरी राजेश्वरी (अन्नपूर्णा)

इत्येतानि सप्तसिद्धपीठानि प्रतिष्ठितानि सन्ति, येषां सविस्तरं वर्णनमधस्तात् क्रियते ।

## बगलामुखी देवी सिद्धपीठम्

बगलादेवी नामधेयं शक्ति सिद्धपीठं गढ़वाल टिहरी जनपदस्य भिल्लङ्गना-क्षेत्रे स्थितमस्ति। विनकरवाल इत्यभिधेये स्थाने भिल्लंगणपर्वतस्य सुरम्योपत्यकायां देवी बगलायाः मन्दिरमधितिष्ठति । इदं भिल्लंगनाक्षेत्रमति विशालतांगतम् । घनसाली सीमांतः समारभ्येदंक्षेत्रं गंगीग्राम पर्यन्तं विस्तीर्णं वर्तते ।[1] बगलादेवी सिद्धपीठस्थानं समुद्रतटात् पंचशताधिक चतुस्सहस्रफीटावधि तुंगतां दधाति ।

बगलासिद्धपीठस्योभयपक्षे बालगंगाभिल्लंगनानद्योप्रवहतः । पीठादस्मात् सर्वासु दिक्षु सघनानि वनानि शैलानामुच्चशिखराणि च दृश्यन्ते । भिल्लगणपर्वतस्यो-तुंगश्रृंगाणि परमसुन्दरतामत्र धारयन्ति। अस्याधोभागे त्रयाणां निर्मलजलपूरित-सराणामनेकेषां तीर्थानां च शोभाऽपि दर्शनीया अस्ति ।[2] वर्तते चात्रताम्रवर्णिन्याः[3] समीपैव त्रिशीर्षदेव्याः[4] स्थलम् । क्षेत्रीय जनानामत्र भोजन-भवन-वस्त्र-शयनावस्था-नामन्येषां च रीतिनामवलोकनेन स्पष्टमेवेदं जायते येते भारतीयाः भारतीयप्राचीन संस्कृतेरनुपोषकाः सन्ति ।

यात्रिणः घनसालीनाम्नः प्रसिद्धे स्थाने भिल्लंगनानदीमुत्तीर्य बूढ़ाकेदारमार्गात् पथंगव्यूतिपंचकमाश्रित्य बगलादेव्याः दर्शनं कुर्वन्ति। अन्योऽपि मार्गः घुत्तु इति स्थानात् सप्तमीलपरिमित पदातिपथमुत्क्रम्य भक्ता अत्रागन्तुं शक्नुवन्ति । गंगोत्तरी केदार-नाथयोः प्राचीनमार्गोऽप्यत्र वर्तते । निर्धनाः जनाः मार्गादस्मादधुनाऽपि पदातिक्रमेण

---

१. अद्यान्यत्ते प्रवक्ष्यामि क्षेत्रं परमसुन्दरम् ।
यच्छ्रुत्वाऽपि नरो भक्त्या सर्वपापैः प्रमुच्यते ॥
तस्य दक्षिणपार्श्वे वै बगलाक्षेत्रमुत्तमम् ।
चतुर्योजन विस्तीर्णं चतुर्धा च सुविस्तृतम् ॥
तत्पीठं परमं देवी मयानैव प्रकाशितम् ।
त्वत्प्रियत्वादिदानीं हि गदितं ते सुदुर्लभम् ॥ —के० ४५-१-३

२. अनेकानि प्रयागानि नदीनां संगमानि च ।
भिल्लंगणोद्भवायां तु गंगाधारा महत्तराः ॥ —के० ४४-२३
नानातीर्थं समायुक्तं नानालिंगविराजितम् ।
यस्य संदर्शनादेव नरो देवी पुरो वशेत् ॥ —के० ४५-४

३. ताम्रवर्णीति विख्याता सरितां सरिदुत्तमा ।
वामभागे महादेवी सर्वकामफलप्रदा । —के० ४५-२०

४. ततो दक्षिणदिग्भागे गव्यूर्ति श्रृणु विस्मयम् ।
त्रिशीर्षा तु महादेवी पीठं परमदुर्लभम् ॥ —के० ४५-१२

गंगोत्तर्यां केदारनाथस्य च यात्रां कुर्वन्तो दृश्यन्ते ।

बगलासिद्धपीठस्योत्पत्तिविषये पुराणेस्वियं कथा प्रसिद्धा—प्राचीनकाले पत्युरपमानेन सकुद्धायाः देव्याः समाधिना संजनिताग्नौ शरीरं त्यक्तवत्याः सत्या मुखादग्निरिव ज्वालाविनिर्गताऽभूत् । सा ज्वाला अत्र पपात । कालादेतस्माज्जगति प्रसिद्धा बभूव ज्वालामुखीशक्तिरिति ।[1] कालान्तरे दशसुमहाविद्यासु बगलाशक्तेः स्थापना शंकेरणात्रापिकृता, तदारभ्येदं बगलासिद्धपीठं लोके प्रसिद्धमजायत ।[2]

ज्ञायते नात्रशक्ते अस्मिन् सिद्धपीठे मन्दिरस्य रचना कदा सज्जाता । विद्यतेऽत्र शक्तेरेकमतिजीर्णं मन्दिरं । तस्य रचना एकस्मिन् प्रकोष्टे वर्तते । मन्दिरमिदं पंचदशफीटमितां वर्गाकारतां द्वादशफीटमितां चोछ्रायतां दधाति । विराजमानमस्ति त्रिशूलमेकं मन्दिरस्य शिखर प्रदेशेऽत्र ।

मन्दिरस्य पूर्वाभिमुखद्वारेण प्रविश्यान्तर्गृहे एकस्य शिवशक्त्योपाषाणमयलिंगस्य एकस्याः पाषाणखण्डनिर्मितायाः शक्तेश्चतुर्भुजाकारिण्याः मूर्तेश्च दर्शनं भवति । मन्दिरस्य वाह्यतः विभिन्नस्थलेषु गणेश-भैरव-घण्टाकर्णादीनां-अनेकेषां दिवौकषां विलसन्त्यसंख्याता मूर्तयः ।[3] बहुन्यायुधान्यपि सन्त्यत्र । प्रसिद्धाऽभूत् किम्बदन्तीयंलोके प्राक्कालादेवास्मिन्विषये-पुरा दक्षिणभारतस्य कश्चित् यात्रीहिमाचलप्रान्तस्थित ज्वालामुखी मन्दिरात् अनेकेषामायुधानामपहरणं कृत्वा समागत्यात्र बगलामन्दिरे निवसतिस्म । अपहृतानां तेषामायुधानामस्थापना स बगलामन्दिरे एव चकार । सर्वाण्येतान्यायुधान्यति प्राचीनतमानि वर्तन्ते ।

अन्येषां शक्तिपीठानामपेक्षा मन्दिरेऽस्मिन् शक्तेस्तांत्रिकी पूजायाः महती विशेषती वर्तते । ऋत्विजस्तंत्रशास्त्रानुसारेणात्र शक्तेर्पूजनं कुर्वन्ति । ये शाक्ताः बगलापीठेशक्तियत्रं निर्माय तंत्रशास्त्रानुसारेण यंत्रस्योपरि बगलायाः पूजनं कुर्वन्ति ते स्वाभीष्टं लौकिकंफलं स्वल्पावधौ एव प्राप्नुवन्ति । पूजनादस्मात् मानवानां भूत-

---

१. सतीदेह समुत्पन्ना ज्वालालोक सुखावहा ।
पतिता पर्वते तत्र पूजिता सुखदायिनी ।।
ज्वालामुखीति विख्याता सर्वकाम फलप्रदा ।
बभूव परमादेवी दर्शनात्पापहारिणी ।। —शि० पु० २-३-९-४१-४२

२. काली, तारा तथा छिन्ना सुन्दरी बगलामुखी । —श० सं० तं० ६-१६
भुवनेश्यन्नपूर्णाय पूर्वाम्नायाधिदेवताः ।
बगलावशिनीमेदास्त्वरिता फलदा तथा ।। —वि० सं० १-१२-३१३
भुवनेशि नमस्तुभ्यं नमस्ते भैरवाकृते ।
नमोस्तु बगलामुख्ये धूमावत्ये नमोनमः ।। —शि० पु० ५-४७-६

३. मानातीर्थं ……………. । —के० ४५-४

प्रेतपिशाचादिदोषाः मृगीरोगाश्शत्रवश्चापि सद्यैव विनश्यन्ति ।[1] ये जनाअस्मिन्पीठे बगलामुखि मन्त्राऽनुष्ठानम् कुर्वंति तेषां सर्वे शत्रवः नश्यन्ति वांच्छितम् च ते प्राप्नुवन्ति ।[2] शक्तेर्दैनिकीपूजा न भवत्यस्मिन्पीठे । अत्र तु नवरात्रावसरेषु पर्व-दिनेष्वेव च विनकरवाल निवासिनः ब्राह्मणाः षोडशोपचार विधिना शक्तेर्पूजनं कुर्वन्ति । अन्येषु दिवसेषु ये भक्ता अत्रागच्छन्ति ते शक्तेर्पूजाव्यवस्थां स्वयमेवकुर्वन्ति । मन्दिरस्य द्वाराण्यत्र सदैवोपतिष्ठन्त्यनावृतानि । क्षेत्रीय जनानांकथनानुसारेण किंचित्समयपूर्वमेव बगलाकामेश्वरी सिद्धपीठयोर्पूजनस्याधिकारी एक एवासीत्, किन्त्वधुना अनयोर्पीठयोर्द्वयोरपि पुजारिणोव्यवस्था समुपलभ्यते ।

इदानीं बगलामन्दिरस्य दुर्दशैव वर्तते । अस्य मन्दिरस्यजीर्णोद्धारार्थ, यदा जनाः प्रयत्नशीला भवन्ति तदैवात्र अनेके उपद्रवाः जायन्ते । क्षेत्रीयजनानामनुसारेण बगला शक्तिरेव मन्दिरस्य नवनिर्मार्णे बाधिका अस्ति । सा जनानां कार्यसाधिका प्रकृतिः बगलाशक्तेरस्मात् प्राचीनभवनादेव भक्तानां मनोवांछां पूरयति । शक्तेः प्रतिकूल प्रभावादत्र मन्दिरस्य नवनिर्माणं परमकठिनं वर्तते ।

विद्यतेऽस्मिन् क्षेत्रे बगलासिद्धपीठस्य धार्मिक महत्वं परमोच्चं । दृश्यते चास्मिन्पीठे क्षेत्रीयजनानां विमला भावना । कथ्यते नवरात्रावसरेषु चास्मिन्पीठे कस्य भक्तस्य शरीरे शक्तिरवतरति स भक्तः हस्ते खड्गमादाय ढोलमृदंगादिवाद्यैः सह बगलादेव्याः सम्मुखं नृत्यति, समागतान् बलिरूपपशुञ्च हन्ति तेषामुष्णरक्तमपि पिवति । कालेऽस्मिन् संख्यातीताः जनाः देवीनृत्यदर्शनार्थमिदमत्रागच्छन्ति । गढ़वाल-मण्डलस्य सर्वेषु सिद्धपीठेषु देवीनृत्यं पूर्वकालादेव समभवत् । साम्प्रतमपि शक्तिपीठेषु वर्षस्यकतिपयदिवसेषु देवीनृत्यस्यायोजनं भवति । किन्त्वत्र पशूनामूष्णरक्तभक्षणेनैव शक्तिरूप पुरुषस्य नूतनता परिलक्ष्यते ।

सिद्धपीठेऽस्मिन् न भवति दैनिकीपूजायाः कापि[3] समुचिता व्यवस्था । पूजाकाले-ऽपि शक्तेश्चात्रान्येषां सिद्धपीठानामपेक्षा भिन्नता दृश्यते । गढ़वालमण्डलस्य सर्वेषु सिद्धपीठेषु आश्विनचैत्रमासयोर्नवरात्रिषु शक्तेर्विशष्टपूजनस्य महत्वं मन्यते किन्त्वत्र

---

१. वगलातु महादेवी सर्वतंत्रेषु विश्रुता ।
ब्रह्मास्त्रविद्या विख्याता शत्रुस्तम्मन कारिणी ॥
यस्याः स्मरणमात्रेण शत्रुर्पंगुंभवेद्ध्रुवम् ।
तत्स्थानं मयाप्रोक्तं सर्वकाम सुखप्रदम् ॥
सप्तरात्रं निराहारो जपन्वै बगलामनुः ।
सिद्धिं प्राप्नोति विपुलां खेचरीं मम बल्लभे ॥ —के० ४५-५-७

२. ओं ह्रीं बगलामुखी सर्वदृष्टानां वाचं-मुखं-पदं स्तम्भय,
जिह्वां कीलय बुद्धिं विनाशय ह्रीं ओं स्वाहा इति बगलामुखी मन्त्रः ।

३. बलिदानादिभिर्यस्तु बगला तु समर्चति ।
तस्य पुण्यफलं देवि कृत्स्नशः कथ्यतेश्रुता ॥

मार्गशीर्षविशाखमासयोर्नवरात्रिस्वपि शक्तेर्विशेषपूजनं कुर्वन्ति जनाः। वैसाखमासे चात्र बृहद्मेलापकस्यायोजनं भवति अस्मिन् संख्यातीताः जनाः बगलादेव्याः दर्शनार्थमत्रागत्य मिलित्वा शक्तेर्पूजनं विदधति। एते श्रद्धावन्तो जनाः शक्तेर्प्रसादात् स्वल्पावधावेव मनोवांञ्छितफलं प्राप्नुवन्ति।[1]

बगलामन्दिरे बहुमूल्य स्वर्णरजत भूषणानि पात्राणि च शक्तये संगृहीतानि सन्ति। भूषणानामेतेषां संरक्षणार्थं शक्तेर्दैनिकीपूजा समारम्भणार्थं दातृभिस्समर्पित द्रव्योपहारादीनांच व्यवस्थार्थमत्र एकस्याः प्रबन्धकर्त्रे समितेरावश्यकता वर्तते। सिद्धपीठस्यास्य सम्यग् विकासं प्रबन्धसमितिना एव कर्तुं शक्यते।

बगला सिद्धपीठमिदं क्षेत्रीय जनानां श्रद्धाकेन्द्रमस्ति। अन्येषां देवतानामपेक्षा शक्तिबगला सिद्धपीठे जनानां महती भावना दृश्यते। मंत्राणां सिद्धये जना अत्र बगलोपासनां कुर्वन्ति। यंत्र विद्यानामपि निपुणता प्राप्तये जनाः बगलायाः पूजनं चतुर्दश्यां तिथौ सम्पादयन्ति। स्वल्पैव समये बगलायाः उपासनया विद्यार्थिनः विद्यायां निपुणतां प्राप्नुवन्ति इति कथ्यते। बगलायाः प्रसादेन वयं जनाः सुखपूर्वकं निवसन्तीति क्षेत्रीय जनाः कथयन्ति। बगलायाः दर्शनमात्रेणैव भूत-प्रेत-पिशाचादि दोषाः पलायन्ते। गठदेशीयानां केन्द्रभूतमिदं सिद्धपीठमरक्षितं दृश्यते। संरक्षार्णमस्य जनानां कोऽपि प्रयासो नावलोक्यते। अस्य पीठस्य सुसंरक्षणार्थमत्र एका समितेरावश्यकता वर्तते। समितिं विना पीठस्यास्य जीर्णोद्धारं न भवितुं शक्यते।

बगलेयं देवी दर्शनेन कीलकस्तोत्रपाठेन, च बृहद्धनं, सुपुत्रान्, सुमतिं सुगतिं च ददातीति भावनया जनाः विशिष्ठपूजोपचारकाले शक्तेरिदं कीलकस्तोत्रपाठं कुर्वन्ति—

ओं विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे।
श्रेयः प्राप्तिनिमित्ताय नमः सोमार्द्धधारिणे।१।
सर्वमेतद्विजानीयान्मन्त्राणामभिकीलकम्।
सोऽपि क्षेममवाप्नोति सततं जाप्यतत्परः।२।
सिद्धयन्त्युच्चाटनादीनि वस्तूनि सकलान्यपि।
एतेन स्तुवतां देवि स्तोत्रमात्रेण सिद्धयति।३।
न मन्त्रो नौषधं तत्र न किञ्चिदपि विद्यते।
बिना जाप्येन सिद्धयेतत्सर्वमुच्चाटनादिकम्।४।
समग्राण्यपि सिद्धयन्ति लोकशंकामिमां हरः।
कृत्वा निमन्त्रयामास सर्वमेवमिदं शुभम्।५।
स्तोत्रं वै चण्डिकायास्तु तच्च गुप्तं चकार सः।
समाप्तिर्न च पुण्यस्य तां यथावन्नियन्त्रणाम्।६।

---

१. सर्वयज्ञेषु यत्पुण्यं सर्वतीर्थेषु यत्फलं।
तत्फलं प्राप्नुयान्मर्त्यो बगलायास्तु दर्शनात्॥ —के० ४५-८-६

सोऽपि क्षेममवाप्नोति सर्वमेवं नसंशयः ।
कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः ।७।
ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति ।
इत्थंरूपेण कीलेन महादेवेन कीलितम् ।८।
यो निष्कीलां विधायैनां नित्यं जपति संस्फुटम् ।
स सिद्धः स गणः सोऽपि गन्धर्वो जायते नरः ।९।
न चैवाप्यटतस्तस्य भयं क्वापीह जायते ।
नापमृत्युवशं याति मृतो मोक्षमवाप्नुयात् ।१०।
ज्ञात्वा प्रारभ्य कुर्वीत न कुर्वाणो विनश्यति ।
ततो ज्ञात्वैव सम्पन्नमिदं प्रारभ्यते बुधैः ।११।
सौभाग्यादि च यत्किञ्चिद् दृश्यते ललनाजने ।
तत्सर्वं तत्प्रसादेन तेन जाप्यमिदं शुभम् ।१२।
शनैस्तु जप्यमानेऽस्मिन् स्तोत्रे सम्पत्तिरुच्चकैः ।
भवत्येव समग्रापि ततः प्रारभ्यमेव तत् ।१३।
ऐश्वर्यं यत्प्रसादेन सौभाग्यारोग्यसम्पदः ।
शत्रुहानिः परो मोक्षः स्तूयते सा न किं जनैः ॥—ओं १४

## कामेश्वरी सिद्धपीठम्

कामेश्वरी इति नामधेयं शक्तिसिद्धपीठं[1] जनपद टिहरी-गढ़वालस्य भिल्लङ्गना-क्षेत्रे कामेश्वरपर्वं तस्योत्तुंगशिखरे वर्तते । शिखरादस्मात् सर्वासु दिक्षु शैलानामुच्च-शिखराणि सघनान्यरण्यानि च संदृश्यन्ते । कामेश्वरगिरेरुभयपक्षे बालगंगा भिल्लंगनानद्यौः स्तः । तयोः संगमो भवत्युपघनसालीनगरम् । सिद्धपीठादस्मात् बगलासिद्धपीठमपि दरीदृश्यते । पर्वतश्चायं कामेश्वरः समुद्रतटात् पंचशताधिकत्रिहस्र फीटावधितुंगतां धारयति ।

पीठस्यास्योत्पत्तिविषये किम्वदन्तीयं प्रचलिता वर्तते-पुरादक्षयज्ञे पत्युखमानायाः क्रुद्धासती मृत्युसमाधिमाकलनात् पूर्वमेव हस्तात् खड्गायुधं प्राक्षिपत् । स च खड्गो-

---

१. अतिगुह्यतमं पीठं पुराणेषु च गोपितम् ।
त्यक्ताहारविहाराश्च जपेद्योदशरात्रकम् ॥
अरिवर्णोऽपि मंत्रश्च सिद्धो भवति निश्चितम् ।
नित्यं नाथादयः सिद्धाः अत्रैव जपतत्पराः ॥
सिद्धिं प्राप्ताः पुरा देवि मादृशास्ते न संशयः ।
कामेश्वरी महादेवी पूजयेद्भक्तितत्परः ॥ —के० ४४-९-११
कामेश्वरी च भेरुण्डा ब्रजेशी वह्निवासिनी ॥ —वि० नं० ६-६२-४
कामेश्वरी महामाया वागीशी ब्रह्म संज्ञिता ॥ —वि० नं० ३-५५-६

ऽस्मिन्स्थाने पपात। अनन्तरं विष्णुचक्रखण्डितो योनिभागश्च सत्याःपपातेत्यप्यत्र किम्बदन्ती जगति प्रसिद्धा एतत्स्थानविषयिका। कालान्तरे स्नेहातुरः शंकरः भिल्लरूपं धृत्वाऽस्मिन्पर्वते पार्वतीरूपया शक्त्या सह क्रीडां चकारेति प्रसिद्धिरपि श्रूयते। तस्मात्कालादेव शक्तिः कामेश्वरीशक्ति नाम्ना विख्याताऽभूत्। पर्वतश्चायं कामेश्वरगिरिरिति लोके प्रसिद्धाबभूव। किञ्चित्कालपूर्वमेवास्मिन्पीठे टिहरी राज्यस्य भूपतिः नरेन्द्रशाह पूर्वानुक्रमेण आश्विनमासस्य नवरात्रिषु शक्तिपूजनं प्रतिवर्षं सपरिवारमकरोत्। अत इयं देवी राजराजेश्वरी नाम्नाऽपि प्रथिता बभूव। भिल्लानां विचरणेन क्षेत्रेदं भिल्लक्षेत्र नाम्नः प्रथितं बभूव।

अस्मिन्पीठे शक्तिमन्दिरमतिपुरातनं वर्तते इति प्रसिद्धम्। किन्त्वधुना मन्दिरस्य नवनिर्माणं अश्मचूर्णेन प्रस्तरखण्डैश्च कारितं क्षेत्रीयजनैः। अर्वाचीनमिदं-मन्दिरं पंच विंशतिफीटमितां वर्गाकारतां विंशतिफीटमितां चोच्छ्रायतां दधाति। मन्दिरस्य शिखरे पित्तलधातुर्निर्मितमेकं कलशमस्ति। तत्रैवैका रक्तवस्त्र निर्मिता पताका विलसति। यात्रिणां निवासाय द्वे धर्मशाले अप्यत्र वर्तते। तत्रैकासु अश्मचूर्णेन प्रस्तर खण्डैश्च निर्मिता अस्ति। एतस्याः रचना त्रयस्त्रिंशदधिकद्विसहस्रतमे ख्रीष्टाब्दे आशिवनमासस्य सप्तमितेऽह्नि वासरक्षेत्रस्य केपार्स इति ग्राम निवासिन्या तारानाम्न्या देव्या कारिता। भवनभित्याः शिलापट्टे समुत्कीर्णलेखेनेदं ज्ञायते।

भिल्लंगणा क्षेत्रे[1] शक्तिमन्दिरस्य पूर्वाभिमुखद्वारेण प्रविश्य सभामण्डपे तस्मात् शक्तेरन्तर्गृहं जनाः प्रविशन्ति। कामेश्वरी मन्दिर गर्भगृहस्य मध्यस्थले भुवि एकं शिव-लिङ्गं वर्तते। ईशानकोणे चात्र रक्तवस्त्रपरिवेष्टितखड्गस्य दर्शनं भवति। खड्गायुधमिदं शक्तेः स्वरूपैव मन्यते जनैः। कामेश्वरी पीठेऽस्मिन् खड्गदर्शनस्य महती विशेषता महिमा च। अस्य दर्शनमात्रेणैव सर्वारिष्टानां खण्डनं भवति इति जनाः कथयन्ति।

पूर्वकालादेवास्मिन्पीठे पशुबलिप्रथा प्रचलितासीत्। किन्त्वधुना इयं तामसी-पूजा निखशेषतां नीता, भक्तैश्चात्र समारभ्यते सात्विकीपूजा।

क्षेत्रीयजना अस्मिन्पीठे आश्विनमासस्य चैत्रमासस्य च नवरात्रिषु बहूनां मेलापकानामायोजनं कुर्वन्ति। मेलापकानामेतेषामवसरे सुदूरस्था अपि जनाः सम्मिलिता भवन्ति। सर्वे च ते शक्तेः दर्शनं पूजनं मंत्रजपं, यज्ञं च कृत्वा मेलापकान्ते स्वगृहान्-निवर्तन्ते। शक्तिप्रसादात् सर्वान् कामान् च ते प्राप्नुवन्ति।[2] अस्मिन् पीठे शक्तये

---

१. नानारूपधराभिल्ला विचरन्ति तदङ्गणे।
भिल्लांगणोद्भवायां तु स्नाति रुद्र कलेवरम्॥ —के० ४४-८

२. कामेश्वरी महादेवी पूजयेद्भक्तितत्परः।
दशाश्वमेधयज्ञीयं फलं प्राप्नोति मानवः॥ —के० ४४-९९
कामेश्वर्याः मंत्र—'द्रां द्रीक्लीं ब्लूँ सः' इत्यनेन जपं कृत्वा
अन्ते च—कामेश्वरी जगन्मातः सच्चिदानन्द विग्रहे।
गृहाणार्चामिमां सर्वां प्रसीद करुणानिधे॥ —इति कथयित्वा
शक्तेर्विसर्जनं कुर्यात्॥ —विद्या० तं० ७-५५

विविधवस्त्राणि बहुमूल्यस्वर्णरजतभूषणानि संगृहीतानि सन्ति। एतेषामाभूषणानां रक्षा ऋत्विगेव करोति। कामेश्वरी पीठेऽस्मिन् शिवदत्त इत्यभिधेयो नौटियाल जातोयो ब्राह्मणः शक्तेर्पूजनं विदधाति। अयं विप्रः वासरक्षेत्रस्य मांदरा इति ग्रामे निवसति। नवरात्राणामवसरे ब्राह्मणोऽयं शक्तेर्पूजनं सम्पादयति। अन्येषु दिवसेषु यात्रिणः स्वयमेवात्र शक्तिर्पूजां कुर्वन्ति। मन्दिरेऽस्मिन् कामेश्वर्याः शक्तेर्दैनिकीपूजा न भवति।

शक्तेर्दैनिकीपूजा सम्पादनार्थमत्र कोऽपि व्यवस्था नास्ति। यदात्र काऽपि मन्दिरसमितिः निर्वाचिता भवेत्, तदैव शक्तेः सम्यग् पूजाव्यवस्था भविष्यति। क्षेत्रस्यास्य सर्वेषां जनानां शक्ति प्रति निर्मलां धार्मिकीभावनां परिलक्ष्य दैनिकीपूजा व्यवस्थायै एकस्याः मन्दिरसमितेः परमावश्यकता दरीदृश्यते।

कामेश्वरी सिद्धपीठस्य समीपस्थलेषु-श्रीकोटग्रामे भिल्लेश्वरनामकं पाषाणमयं शिवलिङ्गं, खवाड़ाग्रामे अतिप्राचीनं शंकरमन्दिरं तस्यान्तगृहे प्राकृतिकं शिवलिङ्गं भल्डीग्रामे क्षेत्रपालमन्दिरं, वनारस्यूँग्रामे शंकरमन्दिरं कामेश्वर्याः दीक्षणपार्श्वे एका मातीलिकाशिला दर्शनीयतमाः पावनतीर्था अप्येतेऽत्र वर्तन्ते।

यद्यप्यस्मिन् क्षेत्रे सन्ति बहूनि देवतानां मन्दिराणि धार्मिकस्थलानि च किन्त्वत्रत्यानां जनानां शाक्तपरम्परायां महती धार्मिकी श्रद्धावलोक्यते। इदं कामेश्वरी सिद्धपीठं तु क्षेत्रीय जनानां शाक्तानां श्रद्धाविश्वासयोर्केन्द्रमस्ति। पीठेऽस्मिन् निवसिता शक्ति कामेश्वरी दर्शनेनैव भक्तानभिलषितं वरं ददातीति जनश्रुतिरपि सर्वत्रैपात्र विख्याता अस्ति। अचिरादेवास्मिनपीठे चैत्रमासस्य कामदैकादश्यां तिथ्यौ अपि एकस्य सिद्ध्यमिधेयस्य मेलापकस्यायोजनं भवति। सिद्धिमेलापकेऽस्मिन् क्षेत्रीया संख्यातीता जनाः श्रद्धालुभक्ताः शाक्ताश्चात्र समागत्य ढोलमृदंगादि वाद्यैः सह देवीनृत्यं कुर्वन्ति विविधैरुपहारैश्च ते शक्तिमर्चयन्ति। शुभवेलायामस्यांकामदैकादश्यां तिथौ रात्रावेव भक्तैः शक्तेर्नैमित्तिकी विशिष्ठा पूजा सम्पाद्यते। पीठेऽस्मिन् शक्तेर्पीठपूजायां महत्वं दरीदृश्यते। रात्रौ सात्विक विधिना इमां पीठपूजां कृत्वाऽपरस्मिन् दिने द्वादश्यां तिथौ प्रातरेव सर्वे भक्ताः पुनरपि देवी दर्शनं कृत्वा भिल्लंगनाक्षेत्र स्थितानां देवमन्दिराणां यात्रां कर्तुमिच्छया गच्छन्ति। अत्रत्या जनाः सम्पूर्ण चैत्र मासे सर्वेषां भिल्लगनाक्षेत्रस्थितानां मन्दिराणां यात्रां कुर्वन्ति। अस्य क्षेत्रस्य जनाश्चैत्रमासं यात्रामासोऽपि कथयन्ति।

## कूर्मासना सिद्धपीठम्

कूर्मासनादेवी[1] सिद्धपीठस्यस्थितिः टिहरी गढ़वाल जनपदस्य भरदार इति

---

१. ततो वै पूर्वदिग्भागे गव्यूतौ ते परं स्थलम्।
यत्र कूर्मासनादेवी कूर्मपृष्टे व्यवस्थिता॥
कूर्मरूपी पुरा विष्णुः संस्मार जगदम्बिकाम्।
धराया धारणे देवि मन्दरस्य च धारणे॥
सेयं देवि समाख्याता सर्वशक्तिर्महेश्वरी॥ —के० १९६-१-२

ऽस्मिन्स्थाने पपात। अनन्तरं विष्णुचक्रखण्डितो योनिभागश्च सत्याःपपातेत्यप्यत्र किम्बदन्ती जगति प्रसिद्धा एतत्स्थानविषयिका। कालान्तरे स्नेहातुरः शंकरः भिल्लरूपं धृत्वाऽस्मिन्पर्वते पार्वतीरूपया शक्त्या सह क्रीडां चकारेति प्रसिद्धिरपि श्रूयते। तस्मात्कालादेव शक्तिः कामेश्वरीशक्ति नाम्ना विख्याताऽभूत्। पर्वतश्चायं कामेश्वरगिरिरिति लोके प्रसिद्धाबभूव। किञ्चित्कालपूर्वमेवास्मिन्पीठे टिहरी राज्यस्य भूपतिः नरेन्द्रशाह पूर्वानुक्रमेण आश्विनमासस्य नवरात्रिषु शक्तिपूजनं प्रतिवर्षं सपरिवारमकरोत्। अत इयं देवी राजराजेश्वरी नाम्नाऽपि प्रथिता बभूव। भिल्लानां विचरणेन क्षेत्रेदं भिल्लक्षेत्र नाम्नः प्रथितं बभूव।

अस्मिन्पीठे शक्तिमन्दिरमतिपुरातनं वर्तते इति प्रसिद्धम्। किन्त्वधुना मन्दिरस्य नवनिर्माणं अश्मचूर्णेन प्रस्तरखण्डैश्च कारितं क्षेत्रीयजनैः। अर्वाचीनमिदं-मन्दिरं पंच विंशतिफीटमितां वर्गाकारतां विंशतिफीटमितां चोच्छ्रायतां दधाति। मन्दिरस्य शिखरे पित्तलधातुर्निर्मितमेकं कलशमस्ति। तत्रैवैका रक्तवस्त्र निर्मिता पताका विलसति। यात्रिणां निवासाय द्वे धर्मशाले अप्यत्र वर्तते। तत्रैकासु अश्मचूर्णेन प्रस्तर खण्डैश्च निर्मिता अस्ति। एतस्याः रचना त्रयस्त्रिंशदधिकद्विसहस्रतमे ख्रीष्टाब्दे आशिवनमासस्य सप्तमितेऽह्नि वासरक्षेत्रस्य केपार्स इति ग्राम निवासिन्या तारानाम्न्या देव्या कारिता। भवनभित्याः शिलापट्टे समुत्कीर्णलेखेनेदं ज्ञायते।

भिल्लंगणा क्षेत्रे[1] शक्तिमन्दिरस्य पूर्वाभिमुखद्वारेण प्रविश्य सभामण्डपे तस्मात् शक्तेरन्तर्गृहं जनाः प्रविशन्ति। कामेश्वरी मन्दिर गर्भगृहस्य मध्यस्थले भुवि एकं शिव-लिङ्गं वर्तते। ईशानकोणे चात्र रक्तवस्त्रपरिवेष्टितखड्गस्य दर्शनं भवति। खड्गायुधमिदं शक्तेः स्वरूपैव मन्यते जनैः। कामेश्वरी पीठेऽस्मिन् खड्गदर्शनस्य महती विशेषता महिमा च। अस्य दर्शनमात्रेणैव सर्वारिष्टानां खण्डनं भवति इति जनाः कथयन्ति।

पूर्वकालादेवास्मिन्पीठे पशुबलिप्रथा प्रचलितासीत्। किन्त्वधुना इयं तामसी-पूजा निखशेषतां नीता, भक्तैश्चात्र समारभ्यते सात्विकीपूजा।

क्षेत्रीयजना अस्मिन्पीठे आश्विनमासस्य चैत्रमासस्य च नवरात्रिषु बहूनां मेलापकानामायोजनं कुर्वन्ति। मेलापकानामेतेषामवसरे सुदूरस्था अपि जनाः सम्मिलिता भवन्ति। सर्वे च ते शक्तेः दर्शनं पूजनं मंत्रजपं, यज्ञं च कृत्वा मेलापकान्ते स्वगृहान्-निवर्तन्ते। शक्तिप्रसादात् सर्वान् कामान् च ते प्राप्नुवन्ति।[2] अस्मिन् पीठे शक्तये

---

१. नानारूपधराभिल्ला विचरन्ति तदङ्गणे।
भिल्लांगणोद्भवायां तु स्नाति रुद्र कलेवरम्॥ —के० ४४-८

२. कामेश्वरी महादेवी पूजयेद्भक्तितत्परः।
दशाश्वमेधयज्ञीयं फलं प्राप्नोति मानवः॥ —के० ४४-९९
कामेश्वर्याः मंत्र—'द्रां द्रीक्लीं ब्लूँ सः' इत्यनेन जपं कृत्वा
अन्ते च—कामेश्वरी जगन्मातः सच्चिदानन्द विग्रहे।
गृहाणार्चामिमां सर्वां प्रसीद करुणानिधे॥ —इति कथयित्वा
शक्तेर्विसर्जनं कुर्यात्॥ —विद्या० तं० ७-५५

विविधवस्त्राणि बहुमूल्यस्वर्णरजतभूषणानि संगृहीतानि सन्ति। एतेषामाभूषणानां रक्षा ऋत्विगेव करोति। कामेश्वरी पीठेऽस्मिन् शिवदत्त इत्यभिधेयो नौटियाल जातीयो ब्राह्मणः शक्तेर्पूजनं विदधाति। अयं विप्रः वासरक्षेत्रस्य मांदरा इति ग्रामे निवसति। नवरात्राणामवसरे ब्राह्मणोऽयं शक्तेर्पूजनं सम्पादयति। अन्येषु दिवसेषु यात्रिणः स्वयमेवात्र शक्तिर्पूजां कुर्वन्ति। मन्दिरेऽस्मिन् कामेश्वर्याः शक्तेर्दैनिकीपूजा न भवति।

शक्तेर्दैनिकीपूजा सम्पादनार्थमत्र कोऽपि व्यवस्था नास्ति। यदात्र काऽपि मन्दिरसमितिः निर्वाचिता भवेत्, तदैव शक्तेः सम्यग् पूजाव्यवस्था भविष्यति। क्षेत्रस्यास्य सर्वेषां जनानां शक्ति प्रति निर्मलां धार्मिकीभावनां परिलक्ष्य दैनिकीपूजा व्यवस्थायै एकस्याः मन्दिरसमितेः परमावश्यकता दरीदृश्यते।

कामेश्वरी सिद्धपीठस्य समीपस्थलेषु-श्रीकोटग्रामे भिल्लेश्वरनामकं पाषाणमयं शिवलिङ्गं, खवाड़ाग्रामे अतिप्राचीनं शंकरमन्दिरं तस्यान्तगृहे प्राकृतिकं शिवलिङ्गं भल्डीग्रामे क्षेत्रपालमन्दिरं, वनारस्यूँग्रामे शंकरमन्दिरं कामेश्वर्याः दीक्षणपार्श्वे एका मातीलिकाशिला दर्शनीयतमाः पावनतीर्था अप्येतेऽत्र वर्तन्ते।

यद्यप्यस्मिन् क्षेत्रे सन्ति बहूनि देवतानां मन्दिराणि धार्मिकस्थलानि च किन्त्वत्रत्यानां जनानां शाक्तपरम्परायां महती धार्मिकी श्रद्धावलोक्यते। इदं कामेश्वरी सिद्धपीठं तु क्षेत्रीय जनानां शाक्तानां श्रद्धाविश्वासयोर्केन्द्रमस्ति। पीठेऽस्मिन् निवसिता शक्ति कामेश्वरी दर्शनेनैव भक्तानभिलषितं वरं ददातीति जनश्रुतिरपि सर्वत्रैपात्र विख्याता अस्ति। अचिरादेवास्मिनपीठे चैत्रमासस्य कामदैकादश्यां तिथ्यौ अपि एकस्य सिद्ध्यमिधेयस्य मेलापकस्यायोजनं भवति। सिद्धिमेलापकेऽस्मिन् क्षेत्रीया संख्यातीता जनाः श्रद्धालुभक्ताः शाक्ताश्चात्र समागत्य ढोलमृदंगादि वाद्यैः सह देवीनृत्यं कुर्वन्ति विविधैरुपहारैश्च ते शक्तिमर्चयन्ति। शुभवेलायामस्यांकामदैकादश्यां तिथौ रात्रावेव भक्तैः शक्तेर्नैमित्तिकी विशिष्ठा पूजा सम्पाद्यते। पीठेऽस्मिन् शक्तेर्पीठपूजायां महत्वं दरीदृश्यते। रात्रौ सात्विक विधिना इमां पीठपूजां कृत्वाऽपरस्मिन् दिने द्वादश्यां तिथौ प्रातरेव सर्वे भक्ताः पुनरपि देवी दर्शनं कृत्वा भिल्लंगनाक्षेत्र स्थितानां देवमन्दिराणां यात्रां कर्तुमिच्छया गच्छन्ति। अत्रत्या जनाः सम्पूर्ण चैत्र मासे सर्वेषां भिल्लगनाक्षेत्रस्थितानां मन्दिराणां यात्रां कुर्वन्ति। अस्य क्षेत्रस्य जनाश्चैत्रमासं यात्रामासोऽपि कथयन्ति।

## कूर्मासना सिद्धपीठम्

कूर्मासनादेवी[1] सिद्धपीठस्यस्थितिः टिहरी गढ़वाल जनपदस्य भरदार इति

---

१. ततो वै पूर्वदिग्भागे गव्यूतौ ते परं स्थलम्।
यत्र कूर्मासनादेवी कूर्मपृष्टे व्यवस्थिता॥
कूर्मरूपी पुरा विष्णुः संस्मार जगदम्बिकाम्।
धराया धारणे देवि मन्दरस्य च धारणे॥
सेयं देवि समाख्याता सर्वशक्तिर्महेश्वरी॥ —के० १६६-१-२

नामके क्षेत्रे अस्ति । सिद्धपीठमिदं प्राचीनकाले शंकरस्य शक्तेः सतीदेव्याः मृत शरीरस्य किंचिदङ्गुलीभागपनेदं संजातमिति वाक्कथा लोके प्रसिद्धा । अस्य स्थापना प्रतिष्ठा च विषये पुराणोंष्वियं प्रसिद्धिः संजाता—आदिकाले भगवान् विष्णुः स्थानेऽस्मिन् समागत्य धराधारणशक्तये कूर्मरूपं धृत्वा शक्तेरिदं कूर्मासनास्तोत्रं पपाठ ।

श्रृणुदेवि परं स्तोत्रं यत्कूर्मेण पुरा कृतम् ।
यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥

कूर्म उवाच

प्रकृत्यै परमेशान्यै पार्वत्यै सुखहेतवे ।
समो नमस्ते देवेशि सर्वशक्त्यै नमोनमः ॥
नमो मंगलरूपायै शर्वाण्येते नमोनमः ।
सर्वशक्तिस्वरूपिण्यै भवान्यै ते नमोनमः ॥
त्रिपुरायै नमस्तेऽस्तु त्रिशीर्षायै नमोनमः ।
ब्रह्माण्यै भद्ररूपिण्यै भद्रदायै नमोनमः ॥
सहस्रशिरसे तुल्यं सहस्राक्ष्यै नमोनमः ।
त्रिपुरघ्न्यै महामाये नमो विश्वम्भरप्रिये ॥
विश्वाधारे नमस्तुभ्यं नमो ब्रह्मपरायणे ।
जगद्वर्यै नमस्तेऽस्तु जगद्धात्र्यै नमोनमः ॥
अम्बिकायै नमस्तेऽस्तु त्र्यम्किायै नमोनमः ।
हरभक्त्यै नमस्तेऽस्तु विष्णुभक्त्यै नमोनमः ॥
वराहतीक्ष्णद्रंष्ट्रायै नरसिंहासनास्थिते ।
नमः कुठारधारायै खड्गशक्त्यै नमोनमः ॥
नमो ब्रह्मण्यरूपायै स्वरूपायै नमोनमः ।
पुरारिदयितायै ते नमः करुणयायुते ॥
नमःकरुण हीनायै भीषणायै नमोनमः ।
नमो द्रंष्ट्रकरालायै भक्तिगम्यै नमोनमः ॥

ईश्वर उवाच

इति स्तुता तु कूर्म्मेण प्रत्यक्षं च वरं ददौ ।
धराभारसहां शक्ति ददौ तस्मै महात्मने ॥
ततो भगवती तेन शिरसाधाय तां पुरा ।
अस्मिन् देशो तु संस्थाप्य ययावब्धितटं पुनः ॥
इदंकूर्मासनास्तोत्रं प्रातरुत्थाय यः पठेत् ।
तस्य वै तस्करारातिभयं नैवोपजायते ॥
इदं स्तोत्रं पठित्वा तु यो गच्छेत्कूर्ममस्तकाम् ।
प्राप्नोति परमां सिद्धि मनोऽभिलषितं तथा ॥ —के० १९५-४-१७

पीठादस्मात् साक्षात् कूर्मासना स्वरूपा समुद्रभूता शक्तिः विष्णुं वांच्छित वरमददात्। सैव देवी कूर्मासनाशक्तिरिति नाम्ना कालान्तरे प्रसिद्धिमलभत। भगवानपि वरं लब्ध्वा तस्मात्कालादेवात्र शक्तेः स्थापना चकार। प्राक्तनमिदं कूर्मासनादेवीसिद्धपीठम् अधुना मैठाणादेवीस्थलमपि कथ्यते।

विष्णुना कृत पीठस्यास्य स्थापना भीमा (लस्तर) नद्याः वामतटवर्ती कूर्मांचलस्योपत्यकायामतिप्राचीनैव वर्तते। अस्यपीठस्य सर्वासु ककुप्सु वनस्पतिभिः परिपूरितानि सुसज्जितानि शैलशिखराणि, ग्रामीण, कृषियोग्य क्षेत्राणि च संदृश्यन्ते। कूर्माचलमिदं समुद्रतटात् पंचशतोत्तरद्विसहस्फीटावधि तुंगता दधाति।

तुणेटा इति प्रसिद्धस्थानात् क्रोशद्वयपरिमित पदातिपथमाश्रित्य कूर्मासना देव्याः दर्शनं कर्तुं शक्यते। कूर्माचलस्योपत्यकायां निर्मितैकस्मिन् चत्वरे अश्मचूर्णेन पाषाणखण्डैश्च दृढीकृतं नातिप्राचीनं परमसुन्दरं शक्तेर्विशालमन्दिरं वर्तते। मन्दिरमिदं दैर्घ्येण विंशतिफीटमितां वर्गाकारतां त्रिंशत्फीटमितां चोच्छ्रायतां दधाति। मन्दिरस्योपरिभागे पंचफीटोन्नतं स्तम्भमस्ति। वर्तुलाकारस्तम्भमिदं लोहशलाकाभिः काष्टखण्डैश्च सम्मिश्रितं निर्मितम्। मन्दिरस्य शीर्षप्रान्ते पित्तलधातु निर्मितमेकं कलशं विलसति। शक्तेस्त्रिशूलमेकंचाधितिष्ठति। मन्दिरस्यास्य चतुर्षु भित्तिकासु सन्ति चत्वारि द्वाराणि गर्भगृहे प्रवेशाय शक्तिभवनस्य गर्भगृहे एकं लघ्वाकारकं पाषाणखण्डैर्निर्मित प्रकोष्टंमस्ति। तस्य मध्यभागे शक्तेर्पाषाणमयंलिंग वर्तते। मन्दिरस्य पूर्वद्वारे कमलाष्टकनिर्मितैकाशिला दक्षिणद्वारे घंटाकर्णनामकं पाषाणलिगं च विद्यते। सम्मुखेऽत्र द्वे त्रिशूलेऽपि स्तः। मृच्चितैः पाषाणखण्डैश्च निर्मिते द्वे धर्मशालैभक्तानां निवासाय अस्मिन्पीठे भक्तैर्विरचिते। एकस्याः धर्मशालायाः वाह्यभित्यामुत्कीर्ण शिलालेखेन ज्ञायतं इयं धर्मशाला ठाकुर अवतारसिंहेन निर्मायिता।

द्वाषष्ट्यधिकैकोनविंशतितमे ईशवीवर्षे (१९६२ ई०)। अपरा तु अतीव प्राचीना प्रतीयते। अनयोरावासभवनयोः गवाक्षकपाटादीनामपि सम्यग् सुरक्षा अत्रास्ति। मन्दिरस्य दक्षिणदिग्भागे कालीचक्रनिर्माणार्थमेकं मण्डलाकारस्थलमपि अस्ति। स्थानेऽस्मिन् वांच्छापूर्तये कालीचक्रं निर्माय बहवः महिषा अजाश्च चक्रोपरि भक्तैरूपहियन्ते। मासाश्विनस्य चैत्रस्य च नवरात्रिषु सिद्धपीठेऽस्मिन्वृहद् मेलापकाः समायोज्यन्ते क्षेत्रीयजनैः। एतासु पावनतिथिषु संख्यातीता जनाः अत्रागत्य संकल्पानां पूर्तये शक्तेर्पूजनं दर्शनं च कुर्वन्ति।

यद्यप्यत्र शक्तेर्दैनिकी पूजा न भवति, तथापि वर्षस्य द्वादशनवरात्रिषु शक्तेः सम्यक् पूजनमत्र शक्तिभक्ताः कुर्वन्ति। पूर्वकालादेवास्मिन्पीठे अष्टपशुबलिप्रथा प्रचलिताऽऽसीत्। अद्यापि नवरात्राणां सप्तमीनवमीतिथ्योः सर्वेषां पशूनां तंत्रशास्त्रोक्तरीत्या पूजनं कृत्वा पशवस्ते चक्रस्थले हन्यन्ते जनैः। सात्विक राजसतामस प्रकृतयो जनाः विविधभावनावशमापन्नाः शक्तेः सात्विकीं-राजसीं-तामसीं पूजामत्र कुर्वन्तो दृश्यन्ते।

अस्मिन्पीठे मन्दिरस्य कार्यसंचालनार्थं सम्यग् व्यवस्था नास्ति। भक्तैः समर्पितानि सर्वाणि द्रव्योपहाराणि पुजारिणो एव गृह्णन्ति। अत्रैका मन्दिरसमितेः

यदि व्यवस्था स्यात् शक्ते दैनिकी पूजा-उपासना समारम्भणाय, तदैव शक्तेर्लोकोत्तरं महत्वं बोधगम्यंभविष्यति। सिद्धपीठेऽस्मिन् देव्याः दर्शनार्थं पूजनार्थं च महती धार्मिकीभावना क्षेत्रीयजनानां दरीदृश्यते।

ये जनाः कूर्मासनासिद्धपीठे दिनत्रयमपि निवन्ति ते विपुलां सिद्धिं प्राप्नुवन्ति शक्तेर्दर्शनपूजनाभ्यामत्र भक्ताः स्वाभीष्टंफलमुपभुंजन्ति च। अत्र च ये जनाः दुर्गारूपाः नवकन्याः भोजयन्ति ते सर्वैश्वर्याणिलभन्ते। कूर्मासना सिद्धपीठस्य चरितश्रवणेन सर्वाणि पापानि विनश्यन्ति।[१]

## इन्द्रासना सिद्धपीठम्।

शक्तिसिद्धपीठमिति इन्द्रासना नामधेयं टिहरी गढ़वालजनपदस्य मन्दाकिनी-नद्यास्तटवर्तिक्षेत्रे कण्डाली इति ग्रामे अस्ति। छिन्नमस्तापीठस्य स्थापना अत्र पूर्वकालादेवाभवत्[1]। अस्मिन् विषये किम्बदन्तीयं प्रसिद्धा—पीठमिदं सत्याः पार्थिव-शरीरस्योरोभागस्य पतनेन प्रसिद्धिं गतम्। किन्तु कस्मिश्चिद् शक्तिदेव्याः प्रसाध-नार्थंतपस्तप्तमिन्द्रः स्वर्लोकादत्रागतः देव्याः प्रसाधनार्थं च स स्वकं वपुः वाहनरूपेण समर्पितवान्। तदारभ्य एव इयं देवी इन्द्रासनेति नाम्ना प्रसिद्धा बभूव[2]। देवराज्ञा इन्द्रेणैवास्मिन् स्थले अस्यपीठस्य स्थापना विहिता।

भक्ताः विविधैः मार्गैं अत्रागन्तुं शक्नुवन्ति। किन्तु सुगमपथमत्र वर्तते रुद्रप्रयाग केदारनाथमार्गे रुद्रप्रयागात् रामपुराच्च पौड़ीजनपदस्थित प्रसिद्धस्थानमिदं अगस्त्य-मुनेः पूर्वमेव रामपुरनाम ग्रामे विद्यते मन्दाकिन्याः वामतटवर्ती। तत्र मंदाकिनी-मुत्तीर्य इन्द्रासनादेवी शक्तिपीठं गन्तुं पार्यते। मन्दाकिनी तटात् क्रोशद्वयपरिमितमार्ग-मुलंध्य कण्डाली नामके ग्रामे देवीसिद्धपीठस्य स्थिति वर्तते। पीठस्यास्य सर्वासुदिक्षु अनेकेषां ग्रामाणां शैलानां हरितिमाप्रपूरितक्षेत्राणां च शोभा दृश्यते। स्थानमिदं सागरतटात् पंचशताधिकाद्विसहस्रफीटावधि तुंगतां धारयति।

अतिप्राचीनकाले एव इन्द्रासनामन्दिरमत्र प्रतिष्ठितां गतम्। इदंमन्दिरं सभा-

---

१. इदं पीठं परं गुह्यं सद्य प्रत्ययकारकम्।
य इच्छेद्विपुलां सिद्धिं सोऽत्र तिष्ठेद्दिनत्रयम्॥
यस्या महत्व श्रवणान्मुच्यते सर्वपातकैः।
दर्शनादेव यस्यास्तु परं पदमवाप्नुयात्॥ —के० १६६-१८-१६

१. अथ तत्पूर्वभागे वै मन्दाकिन्यास्तटे शुभे।
पार्वतीक्षेत्र माहात्म्यं पापानां शुद्धिकारकम्॥ के० 195/6
तत्रेन्द्रासनका देवी महापातक नाशिनी।
तस्य सन्दर्शनादेव कृतकृत्यो भवेन्नरः॥ के० 195/17

२. अस्मिन्नेव महापीठे इन्द्रोजातस्तदासनम्।
तत्रहीन्द्रासनाख्याता सर्वदानवमर्द्दिनी॥ के० १६५-२१

मण्डपकीर्तनसदन-शक्तिभवनेषु त्रिषु विभागेषु विभाजितं दृश्यते। अत्रत्यस्य पूजारिणो ब्राह्मणस्य कथनानुसारेण मन्दिरेऽस्मिन् सत्ययुग एव शक्तिः प्रतिष्ठिताऽभूत्। शक्ति-भवनस्यान्तः गृहे एकस्यां शिलापट्टिकायां रक्तपाषाणनिर्मिता इन्द्ररूपासने अस्ति समासीना इन्द्रासनाशक्तिर्विद्यते। तां चतुर्भुजाकारिणीं फीटत्रयमितोच्चतां दधानां देवीमूर्तिं परितः चतुष्षष्ठि योगिनीनां मूर्तयोऽपि विलसन्ति।[१]

मूर्तयोऽपि संख्यातीताऽतिप्राचीनतमाः देवतानामप्यन्येषामात्र प्रतिष्ठन्ति। इन्द्रासना मन्दिरे विविधपूजायात्राणि सन्ति भोजनोपकरणानि च। लक्ष्मीनारायण-मन्दिरं क्षेत्रपालमन्दिरं भोगशाला चाप्येकात्रविद्यन्ते। यात्रीणां निवासाय अत्र सम्यग् व्यवस्था वर्तते। सिद्धपीठेऽस्मिन् शक्तेस्सात्विकीपूजा भवति, राजसी-तामसी पूजायाश्च महत्त्वं न वर्तते प्राचीनकालादेवात्र। ऋत्विजः वैष्णवीमायायारिन्द्रासना-शक्तेश्चात्र षोडशोपचारविधिना पूजनं कुर्वन्ति। जायतेऽस्मिन्पीठे दैनिकी पूजा व्यवस्था। पुजारीब्राह्मणः प्रभातकाले शक्तेर्पूजनावसरे भोगशालायां भोगं पाचयित्वा शक्तये समर्पितं करोति। पश्चात् समुपस्थितेभ्यो जनेभ्योऽपि स भोगं वितरति। नवरात्रावसरेषु अस्मिन्पीठे जनाः शक्तियज्ञं होमं च कुर्वन्ति। प्रतिद्वादशाब्दं द्वादशाब्द नामकं शक्तियज्ञस्यायोजनमत्र माघमासे क्रियते। यज्ञेऽस्मिन् संख्यातीताजनाः सम्मिलिता भवन्ति। शक्तेर्दर्शनं पूजनं च ते कुर्वन्ति।

अस्य पीठस्यैका महती विशेषता वर्तते। सर्पेभ्यः वृश्चिकेभ्यश्च दंष्ट्राः ये जना अत्रागत्य शक्तेर्मन्दिरस्य स्पर्शमात्रमपि कुर्वन्ति तेषां विषदोषं सद्यैव विनश्यति। देव्याः दर्शनेन् ग्रहभूतपिशाचादयो दोषाश्चापि प्रशाम्यति[३]; शक्तिसेवनादत्र जना अप्राप्यलक्ष्मीं प्राप्नुवन्ति। तेषां रिपवोऽपि विनश्यन्ति[४]।

अस्मिन् मन्दिरे द्वौ पूजाधिकारिणौ ऋत्विजौ स्तः। मासस्यपूर्वपक्षस्य पंच-

---

१. चतुष्षष्टि समाख्याता योगिनी वरसिद्धये॥ वि० तं० १-२५-४

२. इयं हि वैष्णवी शक्तिः श्वेतगन्धानुलेपनैः।
माल्यैर्वस्त्रैस्तथाश्वेतैः सन्तुष्टा भवति प्रिये॥
यस्तु छागबलिं दध्याद्देव्ये स मनुजाधमः।
प्रयाति नरके घोरे रौखे रावसंकुले॥ के० १९५-२३-२४

३. भूतग्रस्तो विषग्रस्तो ये नरोऽत्र समाश्रयेत्।
विषं तस्य क्षयं याति स्वस्थो भवति तत्क्षणात्॥
सर्पेणापि तथा द्रंष्ट्रतत्र देव्या गृहे प्रिये।
गच्छेतदैवतस्यापि विषं भवति भस्मसात्॥ के० १९५-१९-२०

४. भ्रष्टराज्योऽपि यो राजा संश्रयेदिन्द्रवाहनाम्।
स्वस्थराज्यं स चाप्नोति तथा शत्रु क्षये परम्॥ के० १९५-२२
य इमां भवतीं भव्यां ध्यायेत्कार्यप्रसाधिनीम्।
तस्य कार्याणि सिध्यन्ति सत्यमेव मयोदितम्॥ के० १९५-१८

दशदिवसेषु गिरिधर पुरोहित उत्तरपक्षस्य पंचदशदिवसेषु च विद्यादत्त बहुगुणा शक्तेश्चात्र पूजनं करोति । इन्द्रासनादेवीमन्दिरेणसम्बद्धा द्वेयकड़भूमिरप्यस्ति । अधुना अस्याः भूमेः विक्रयमूल्यं पंचाशत्सहस्राणिरुप्यकाण्यनुमीयन्तेजनैः साम्प्रतं तु भूमिरियं द्वयोरपि पूजारिणौरेकाधिकारतां गतां वर्तते ।

इन्द्रासनासिद्धपीठस्य संचालनार्थमत्र काऽपि व्यवस्था समिति नास्ति। मन्दिरस्यदशामवलोक्य सम्यग् व्यवस्थार्थं संरक्षणार्थं धार्मिकपरम्पराणांचात्र एकस्याः समितेः अतीवावश्यकता दृश्यते । व्यवस्था समितिरेव मन्दिरस्य सम्यग् सुसंरक्षणं कर्तुं शक्नोति ।

इन्द्रासना सिद्धपीठे शक्तेर्पीठपूजायाः महत्त्वं दरीदृश्यते। ऋत्विग्भिः प्रतिदिन-मत्र वैदिकैः पौराणिकैस्तांत्रिकैश्च मंत्रैः शक्तेस्सात्विकी पूजा सम्पाद्यते । प्रतिदिने प्रातःकालेऽस्मिन्पीठे ऋत्विजः रुद्रयामलस्यान्तर्गते दुर्गाकल्पे वर्णितान् शापविमोचन-मंत्रान् पठन्ति[1] तदनन्तरं ते ब्राह्मणाः चण्डीपाठमपि कुर्वन्ति । इन्द्रासना शक्तिसन्निधौ ये जनाः शापिमोचनमंत्राणां एकवारमपि पाठं कुर्वन्ति ते सर्वान्कामान् लभन्तेऽत्र

---

१. ओं । ह्रीं । रीं रेतःस्वरूपिण्यै मधुकैटभमर्दिन्यै ब्रह्मवसिष्ठविश्वामित्र शापाद् विमुक्ता भव ।। १ ।। ओं श्रीं बुद्धिस्वरूपिण्यै महिषासुरसैन्यनाशिन्यै ब्रह्म-वशिष्ठविश्वामित्रशापाद् विमुक्ता भव ।। २ ।। ओ रं रक्तस्वरूपिण्यै महिषासुरमर्दिन्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ।। ३ ।। ओं क्षुं क्षुधास्वरूपण्यै देववन्दितायै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ।। ४ ।। ओ छां छायास्वरूपिण्यै दूत-संवादिन्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ।। ५ ।। ओं शं शक्तिस्वरूपिण्यै धूम्रलोचनधातिन्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ।। ६ ।। ओं तृं तृषास्वरू-पिण्यै चण्डमुण्ड वध कारिण्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ।। ७ ।। ओ क्षां क्षान्तिस्वरूपिण्यै रक्तवीजवधकारिण्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव।। ८ ।। ओं जां जातिस्वरूपिण्यै निशुम्भववधकारिण्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ।। ९ ।। ओं लं लज्जास्वरूपिण्यै शुम्भवयकारिण्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ।। १० ।। ओं शां शान्तिस्वरूपिण्यै देवस्तुत्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ।। ११ ।। ओं श्रृं श्रद्धास्वरूपिण्यै सकलफलदात्र्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ।। १२ ।। ओं कां कान्तिस्वरूपिण्यै राजवरप्रदायै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ।। १३ ।। ओं मां मातृस्वरूपिण्यै अनर्गलमहियसहितायै ब्रह्मवसिष्ठ-विश्वामित्रशापाद् विमुक्ता भव ।। १४ ।। ओं ह्रीं श्रीं दुं दुर्गायै सं सर्वैश्वर्यकारिण्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ।। १५ ।। ओं ऐं ह्रीं क्लीं नमः शिवायै अभेद्यकवचस्वरूपिण्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ।। १६ ।। ओं क्रीं काल्यैकालि ह्रीं फट् स्वाहाये ऋग्वेदस्वरूपिन्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ।। १७ ।। ओ ऐं ह्रीं क्लीं महाकालीमहालक्ष्मीमहासरस्वतीस्वरूपिण्यै त्रिगुणात्मि-कायै दुर्गादेव्यै नमः ।। १८ ।।

ऋत्विजामियं धारणा अवलोक्यते ।

## छिन्नमस्ता सिद्धपीठम् ।

(रुद्रप्रयाग जनपदे)

छिन्नमस्ता इति नामधेयं सिद्धपीठं टिहरी गढ़वाल जनपदस्य जखोली क्षेत्रे भणगा-नामके ग्रामे भीमा (लस्तर) नद्याश्च वामतटे विद्यते । तुणेटा इति प्रसिद्ध-स्थानात् क्रोशैकपरिमित पदातिपथमाश्रित्य छिन्नमस्ता सिद्धपीठस्य दर्शनं भवति[1] । पठिस्यास्य चतुर्षुदिक्षु पर्वतानामुत्तुंगशिखराणि सुरम्या वनपंक्तयश्च दरीदृश्यन्ते । पीठादस्मात् परिमितपथंक्रोशपंचकमुत्क्रम्य भीमानद्यां एको 'वधाणि' इति नामधेयो महासरोऽस्ति । स्वोत्कृष्टतत्वात् तदीयं दर्शनीयं विद्यते । समुद्रतटादनुमानतश्चेदं छिन्नमस्तापीठं द्विशताधिकाद्विसहस्र फीटावधि तुंगतां दधाति ।

सिद्धपीठमिदं सत्याः मृतशरीरस्य स्कन्धभाग पतनेन संजातम् । अत्र दशसु महाविद्यासु छिन्नमस्ताशक्तिरेका महाविद्या प्रतिष्ठति[2] । अस्याः शक्तेःप्रसन्नतार्थं प्राचीनकाले नरबलिप्रथा अत्र प्रचलितासीत् । क्षेत्रीयाः जनाः नवरात्रावसरेषु परि-वारानुक्रमेण एकं पुरुषं बलिरूपेण शक्तये ददातिस्म । कस्मिश्चित्समये भणगा इति ग्रामनिवासिन्याः कस्याऽपि सुवासिन्याः सुतः देव्यो पहारार्थमत्रानीतः । स्वसुतस्य प्राणानां रक्षणार्थंसा वनिता शंकरस्योपसनामकरोत् । वनितायाः अस्याः पुत्रवधकाले विकम्पितहृदयायाः पुत्रस्य रक्षणार्थंशकरोऽत्रावतरत् । नरबलिभक्षिकायाः देव्याः एनं दुराग्रहमवलोक्य कुपितोशंकरोऽस्याः शिरश्चिच्छेद । एतस्मात्कालादेवात्र छिन्नमस्ताशक्तिर्जगति प्रसिद्धा बभूव । छिन्नमस्ता शक्तेः स्थापना शंकरेणैवात्र कृतेति किम्बदन्ती लोके विख्याताऽभूत् । कालान्तरे शक्तीयं भीमैतिनाम्नाऽपि जगति प्रसिद्धाऽजायत ।

अस्मिन्पीठे एकमतिप्राचीनं शक्तिमन्दिरं वर्तते । षोडशफीटमितां वर्गाकारता-मिदं मन्दिरं अष्टादशफीटमितां चोच्छ्रायतां दधाति । प्रस्तरखण्डेभ्यः मन्दिरस्यास्य रचना संजाता । शिखरप्रान्तेऽस्य पित्तलधातुनिर्मितमेकं कलशं विलसति एका रक्त-वस्त्रनिर्मिता पताका अप्यत्र सुशोभते । मन्दिरमिदंनिकषैव लक्ष्मीमन्दिरं सरस्वती-मन्दिरंचापि लघ्वाकारके विद्येते । तत्र हि कालभैरवमन्दिरं प्राचीनकालादेव प्रतिष्ठितम् ।

---

१. तत उत्तरदिग्भागे क्रोशखण्डे महेश्वरी ।
छिन्नमस्तेश्वरीपीठं सद्यः प्रत्ययकारकम् ॥
तत्राहोरात्रमपि च यो विद्यां जपते पराम् ।
सिद्धि स परमां प्राप्य शिवलोकमवाप्नुयात् ॥
भीमाधारेति विख्याता वामभागे महर्थदा ।
अतिभीमतमं स्थानं तत्र भीमेश्वरः शिवः ॥ के० १९५-१-३

२. काली-तारा तथा छिन्ना''''महाविद्या दशैवतु ॥ के० शक्ति सं०सं० ६-१६-१७

शक्तेश्छिन्नमस्तामन्दिरस्य गर्भगृहे शक्तेः द्वेमूर्ती शिरो विहीने वर्तेते। तयोरेकामूर्तिः पाषाणखण्डनिर्मिता परमोत्कृष्टस्वरूपा चतुर्भुजाकारिणी अत्र प्रतिष्ठति तस्योपरि रजतधातुनिर्मितमेकं छत्रं विलसति। द्वितीया च मूर्ति लध्वाकारा ताम्र-निर्मितावर्तते। शक्तेः पूजनार्थमत्र बहूनि पात्राण्युपकरणानि च सन्ति। शक्ति-मन्दिरस्यान्तर्गृहे एकस्यां शिलायामुत्कीर्णः शिलालेखो स्पष्टाक्षरेषु वर्तते। अन्यासां पुरातनसामग्रीणामपि अत्र प्रचुरता दृश्यते।

अस्मिन्पीठे नरबलिप्रथायाः समाप्तिं गते पशुबलिप्रथा प्रचलिताऽभूत्। अधुनाऽपि चैत्राश्विनमासयोर्नवरात्रिषु चक्रस्थलेऽत्र बहुसंख्यकानजान् मेषकांश्च जनाः घ्नन्ति। छिन्नमस्तासिद्धपीठे ये जनाः पशुबलिं ददाति ते निस्सन्देहेन मनोवांछितंफलं प्राप्नुवन्ति इति शाक्ता अपि कथयन्ति[1]।

न सम्पाद्यतेऽत्र प्रतिदिनं शक्तेर्दैनिकी पूजा किन्तु नवरात्रासरेषु पर्वदिनेषु चात्र शक्तेर्पूजनस्य सम्यग् व्यवस्था भवति। कालेऽस्मिन् मोहनो नाम भक्तश्छिन्न-मस्तामन्दिरस्याधिकारी पुजारी चास्ति। स दातृभिः सर्मपितद्रव्योपहाराणांचात्र संग्रहं करोति शक्तिपूजन सामग्री अपि धनेनैतेन क्रीणाति। छिन्नमस्तामन्दिरस्य बहिः स्थाने कालीचक्रस्थितमहाकाल भैरवोऽपि वर्तते। कालरात्रिं विचिन्त्य[2] तस्य पूजनं सप्तम्यांतिथौ कालरात्रौ च भट्टजातीय विद्यादत्तनाम्नो ब्राह्मणेन क्रियते। अस्मिन् शक्तिपीठे जनानां महती श्रद्धा विद्यते। एतस्मिन् श्रद्धा रूप मन्दिरे शक्तेर्दैनिकी-पूजायाः समारम्भणं मन्दिरस्य नवीकरणं पशुबलिप्रथायाः सम्यगुन्मूलनं च परमावश्यकं वर्तते। कार्याणामेतेषां निष्पत्तये मन्दिरस्यैकस्याः प्रबन्धसमितेरत्रावश्यकता दृश्यते।

विषुवत्संक्रान्त्यामत्र बृहतः मेलापकस्यायोजनं भवति। मेलापकेऽस्मिन् संख्यातीता जनाश्छिन्नमस्तादर्शनार्थमत्रागच्छन्ति अस्याः महाविद्यायाः दर्शनाच्च मानवाश्चिरायुषोभवन्ति धनानि सुसुतांश्च ते प्राप्नुवन्ति।

छिन्नमस्ता सिद्धपीठे ये जनाः छिन्नमस्तायाः श्रीं क्लीं ह्रीं ऐं—वज्रवैरोचनीये ह्रीं ह्रीं फट्स्वाहा इति मंत्रजापं कुर्वन्ति ते मनोवांछितफलं प्राप्नुवन्ति। छिन्नमस्तापीठे आयोजितासु मेलापकेषु न केवलं क्षेत्रीयजना अपितु सुदूरस्था अपि जनाः सम्मिलिता

---

१. तत्र गुह्यं परं क्षेत्रं देव्याः पीठं महेश्वरी।
महिषान्मेषकांश्चैव तथाजांश्च महोन्मताम्।।
प्रयच्छति बलित्वेन श्रीदेव्यै तत्र पीठके।
इहलोके चिराल्लक्ष्मीं प्राप्यन्ते परमं लभेत्।। के० १९५-४-५

२. आरक्तभानुसदृशीं यौवनोन्मत्तविग्रहाम्।
चतुर्भुजां त्रिनयनां भीषणां चन्द्रशेखराम्।।
प्रेतासन समासीनां भजतां सर्वकामदाम्।
दक्षिणे चाभयं पाशं वामे भुवनमेव च।।
रक्तदण्डधरां देवीं कालरात्रिं विचिन्तयेत्।। विद्यार्णवतं० ७-१८० × १-३

भवन्ति। ये जनाः शुभदिने पीठस्यास्य यात्रां कुर्वन्ति च ते शक्ति प्रसादात् बृहद् पुण्यमर्जयन्ति।

## यवनेश्वरी (सुरखण्डा) सिद्धपीठम्

विद्यते यवनेश्वरी इत्यभिधेयं शक्तिसिद्धपीठं यमुनायाः पूर्वभागे योनिपर्वतस्य सुरम्योपत्यकायां टिहरी-उत्तरकाशी-देहरादून जनपदानां सन्धिभूतमयं योनिपर्वतो विविधैः पादपै वनस्पतिभिः समावृतो वनस्पतीनां कोष सदृशः शोभते। चम्बा-मसूरी यातायात मार्गान्तराले यानमार्गाच्च क्रोशैकपरिमितमार्गमुत्क्रम्य यमुनानद्यो पूर्वभागे स्थितस्य शैलस्योपत्यकायां यवनेश्वरी (सुरखण्डा) देवी सिद्धपीठमुपलभ्यते। हिमालयस्योत्तंगशिखराणां वनानां चास्मात् पर्वतशिखरात् शोभा अतीव रमणीया दृश्यते। 'कलकलोच्चादिन्याः' सूर्यसुतायाः कालिन्याः मनोहरं दृश्यमवलोक्यते सिद्ध-पीठादस्मात्। समुद्रतटादिदंस्थानमनुमानतः द्विसहस्रमीटरावध्युच्चतां दधाति।

दक्षयज्ञहुतायाः सत्या मृतदेहस्य विष्णुचक्र-कर्तितस्य योनिभागपतनेदं सिद्ध-पीठं सुप्रतिष्टां गतम्।[२] देव्याः सत्याः शरीरखण्ड (सुरशरीरखण्ड) पतनेन उत्पन्नं भूत्वा इदं सिद्धपीठं सुरखण्डादेवी कामाख्यादेवी सिद्धपीठमिति नामभ्यामपि जगति प्रख्यातम्। लोकेऽस्मिन् कथमभूत् यवनेश्वरीति नाम्न प्रसिद्धिरित्यत्र पौराणिकी

---

१. यमुनायाः पूर्वभागे पीठं परम सुन्दरम्।
चतुर्योजनविस्तारंपापंचाघनिवारणम्॥
नाम्ना यवनेशपीठं सर्वदुःख निवारणम्।
पीठं वैयवनेश्वर्याः सर्वसिद्धिप्रदायकम्॥
एतत् क्षेत्रं समं क्षेत्रं सद्यः प्रत्यय कारकम्।
त्रैलोक्ये नास्ति विप्रेश सत्यमेव न संशयः॥ —के० ३२-१-३

२. पुरादक्षो महायज्ञे सतीदेहं मुमोच ह।
तद्देहं शिरसा धृत्वाप्रचचार महीमिमाम्॥
शिवस्य मोहनाशार्थं विष्णुचक्रेण नारद।
चकर्त खण्डशोदेहं देव्यार्थं च महामते॥
योनिखण्डं च पतिते अत्र वै पर्वतोत्तमे।
तत्र संस्थापयामासुरीश्वरीं देवतागणाः॥
तदादीदं परं पीठं सद्यः प्रत्यय कारकम्।
महादेवोऽपि तत्रैव संस्थितालिंगरूपधृक्।
गिरौ कामदेवे पतन्ती त योनिः न कामाख्यदेवीमुद्राभावयं वेश।
—३२-१०-१३

उमानन्दरम्यं महाभैरवं वै पुराकुर्वति भक्तजनान् विभर्ति॥
दक्षेश्वर मू० स० इतिहास में २१, सि० ४०

कथा प्रचलिता वर्तते प्राचीनकाले कश्चिद् कालयवन नामा दैत्य आसीत् ।[१] स देवान् पराजेतुं सुरखण्डादेव्याः स्थाने योनिपर्वते समागत्य शक्तिपूजयामास ।[२] तदनन्तरं शक्तेरस्यः यवनेश्वरीति नाम्ना प्रसिद्धिः संजाता । यवनेश्वर्याः प्रतिष्ठापनेन पूजनेन च कालयवनो असह्यं बलपौरुषं परमां सिद्धिंचालभत । तदारभ्य सिद्धपीठमिदं यवनेश्वरी नाम्नाऽभूज्जगति प्रसिद्धम् । अत्रत्य अपरैका कालेश्वरी देव्यापि स्थापिता। सुरखण्डादेवी मन्दिरस्य रचना विशालप्रांगणस्यैकस्मिन् चत्वरे विद्यते । आसीदिदं शक्तिभवनमति प्राचीनम्, किन्त्वधुना मन्दिरस्यास्य नवनिर्माणं विहितोभक्तजनैः । नूतनं मन्दिरमिदं दैर्घ्येण विंशतिफीटमितां वर्गाकारतां चत्वारिंशत्फीटमितांचोच्छ्रायतां दधाति । विलसत्यत्र मन्दिरस्य शिरसि पित्तलमयः कलशः, लोहमयं त्रिशूलं रक्तवस्त्रनिर्मिता च पताका मन्दिरस्य समीपे दक्षिणदिग्भागे एकं सुनिर्मितं हवनकुण्डं वर्तते एका चात्र चतुर्हस्तपरिमिता समन्तात् चत्र वेदिका निर्मीयते । द्वे यात्री-निवास-भवनेऽपि अत्र वर्तेते ।

यात्रिणः शक्तिमन्दिरस्य पूर्वद्वारेण प्रविश्य गृहे चोपविश्य शक्तेर्पूजनं दुर्वन्ति । तत्र शक्तिः मूर्तिः समायुक्ताऽष्टभुजाभिरष्टायुधैश्च समलंकृत हस्ता, रक्तपरिधानेन सुशोभिता अनेक सौभाग्यद्रव्यैः सुसज्जिता समलंकरोति । मन्दिरस्य गर्भगृहे स्थिता पश्चिम भित्तिकायां सुनिर्मित काष्ठपीठिकायां भव्या मूर्तिरियं फीटत्रयपरिमित शरीरा वर्तते । सर्वांगसुन्दराः देव्याः सुरखण्डाया अत्र एकं प्राकृतमयं पाषाणलिंगमपि वर्तते । शक्तिमन्दिरस्य वाह्याभ्यन्तरस्य अनेकेषां विष्णु-ब्रह्मा-शिव-गणेश-उमानन्द-भैरवादीनां मूर्तयोऽपि प्रतिष्ठन्ति ।

आश्विनचैत्रमासयोर्नवरात्रिषु सकलजीवलोकहृदयानन्ददायकेषु भवन्त्यत्र वृहद् मेलापकानामायोजनम् । येषु भारतीय संस्कृतेरनुपोषकाः संख्यातीता धार्मिक जनाश्चात्रागच्छन्ति । तत्र अष्टगन्धैः कुंकुम, धूप, दीप, नैवेद्य, पुष्पैः सौभाग्यद्रव्यैश्च ते भक्ताः शक्तिमभ्यर्च्य देव्याश्चरित्रपाठं नृत्यं कथाश्रवणं च कुर्वन्ति । कस्मिनपि दिने भक्ताः शक्तेर्दर्शनार्थमत्रागंतुं शक्नुवन्ति सुविधानुसारं आवश्यकतानुसारमिच्छानुसारं क्षेत्रीयाः जनाः पीठस्यास्य पावनतां वीक्ष्य प्रतिवर्षे वारमेकमवश्यमेवं यात्रां कुर्वन्ति ।

न केवलं धार्मिक महत्वमस्य पीठस्य अपितु प्राकृतिक महत्वमपि अपरिहार्यं वर्ततेऽस्य । प्रतिदिनमत्र बहवो पर्यटकाः प्रकृतिनिरीक्षकाः धीमन्तश्च समागत्य स्थानस्यास्य प्राकृतिकीं सुन्दरतामवलोक्य स्वात्मानं कृतकृत्यं मन्यन्ते ।

प्राचीनकालादेवस्मिपीठे अष्टपशु बलिपूजन पद्धतिः प्रचलिताऽभवत् । किन्त्वधुना इयं प्रथा निरवशेषतां गतैव । इदानीमत्र शक्तेः सात्विकी पूजा स्व

---

१. श्रीमद् भा० १०-५१, ४ के० १३२ ।

२. यवनेशी ततः प्रोक्ता सर्वदारिद्र्यनाशिनी ।
तत्र ब्रह्मा च विष्णुश्च रुद्रश्चैव तथा त्रयः ।।
संस्थितानन्दरूपेण तस्मिन्नेव नगोत्तमः ।। —के० ३२-१७

प्रचलिता। न दृश्यतेऽत्र मन्दिरस्य व्यवस्थाकारिणी काऽपि समितिः। कुलीनाः ब्राह्मणाः दातृभिः समर्पित द्रव्योपहारैश्च शक्तेर्पूजनसामग्रीणां व्यवस्थां कुर्वन्ति।

ये जनाः पावनपीठस्यास्य दर्शनं दुर्वन्ति ते सकलानभीष्टानाप्नुवन्ति। शक्तेः दर्शनेन पूजनेन मन्त्र जाप्येन चात्र सर्वेशत्रवः नश्यन्ति सर्वे च मनोरथाः सिध्यन्ति।[१]

## शक्ति अन्नपूर्णा (पुष्टि) सिद्धपीठम्

इदं खलु शक्ति सिद्धपीठं[२] भागीरथ्या उत्तरेकूले बारणावत पर्वतस्योपत्यकायां स्थिते सौम्यकाशी नामके स्थाने विराजते। इदमेव स्थानमुत्तरकाशी नाम्नः विख्यातमस्ति। अस्मिन् समये स्थानमिदं नगररूपेण सञ्जातमस्ति तत् खलु उत्तरकाशी नाम्नैव प्रसिद्धमासीत् यत् परितः पर्वतमाला दृष्टिगोचराः भवन्ति। पर्वतखण्डेष्वत्र-विविधाः वनस्पतयः विराजमानाः सन्ति। क्षेत्रेऽस्मिन् देवदारु वृक्षाणां बाहुल्यंदरी-दृश्यते। भूशक्तेः भागीरथ्याः गंगायाः प्रवहत्यमपि नद्यद्वयं असि-वरुणा नामधेयं भूभागमिदं स्वजलौघेन पवित्रयति।[३] इदं स्थानं विविधामिर्लताभिर्वृक्षैश्च समाकीर्णमस्ति। दिव्यक्षेत्रेऽस्मिन् विविधाः पक्षिणः कूजन्तः समवलोक्यन्ते। सुरम्येऽधिष्ठानेऽस्मिन् स्थिते पीठे शक्तेः देव्याः विशालं मन्दिरं वर्तते। भगवतो विश्वनाथस्य

---

१. यदन्यत्र महाभाग वर्षात् सिध्यति कारकम्।
तदत्र दिवसेन्नैव सिद्धियेष्यन्त्य संशयः।
योनिपर्वत मारूढो यदि देवीमुपासतो।
धन्यो भवति लोकेषु तेनैवैकेन कर्मणाः॥
अस्मिन्त्रोऽपि सञ्जप्तोदेशेऽस्मिन्योनिपर्वते।
सिद्धिं प्रलभते पूर्णां सुरैरपि हि दुर्लभाम्॥
राजनो वश्यतां यान्ति नश्यन्ति सर्वशत्रवः। —के० १३२-४-७

२ देवदारुवने पुष्टिर्मेधा कश्मीरमण्डले।
भीमादेवी हिमाद्रौ तु तुष्टिर्विश्वेश्वरी तथा॥ —देवी भा० ७-३०-७०
अन्नपूर्णेति विख्याताः पञ्चकामदुधा क्रमात्।
श्रीविद्या सिद्धलक्ष्मीश्च मातंगी भुवनेश्वरी॥ —वि० तं० ५-६६-१५

३. अस्ति गुह्यतमं क्षेत्रं सारात्सारतरं परम्।
परं गोप्यं परं तत्वं तुषारवच्छिलोच्चये॥
सर्वतीर्थमयं सर्वं देवजुष्टं सुपुण्यदम्।
यत्र भागीरथी पुण्या गंगा चोत्तरवाहिनी॥
सौम्यकाशीति विख्याता गिरौ वै वारणावते।
असी च वरुणा चैव द्वे नद्यौ पुण्यगोचरे।
यत्र ब्रह्मा च विष्णुश्च महेशश्चेति ते त्रयः।
नित्यं सन्निहिता यत्र मुक्ति क्षेत्रे तथोत्तरे॥

कथा प्रचलिता वर्तते प्राचीनकाले कश्चिद् कालयवन नामा दैत्य आसीत् ।[1] स देवान् पराजेतुं सुरखण्डादेव्याः स्थाने योनिपर्वते समागत्य शक्तिपूजयामास ।[2] तदनन्तरं शक्तेरस्यः यवनेश्वरीति नाम्ना प्रसिद्धिः संजाता। यवनेश्वर्याः प्रतिष्ठापनेन पूजनेन च कालयवनो असह्यं बलपौरुषं परमां सिद्धिंचालभत। तदारभ्य सिद्धपीठमिदं यवनेश्वरी नाम्नाऽभूज्जगति प्रसिद्धम् । अत्रत्य अपरैका कालेश्वरी देव्यापि स्थापिता। सुरखण्डादेवी मन्दिरस्य रचना विशालप्रांगणस्यैकस्मिन् चत्वरे विद्यते। आसीदिदं शक्तिभवनमति प्राचीनम्, किन्त्वधुना मन्दिरस्यास्य नवनिर्माणं विहितोभक्तजनैः। नूतनं मन्दिरमिदं दैर्घ्येण विंशतिफीटमितां वर्गाकारतां चत्वारिंशत्फीटमितांचोच्छ्रा-यतां दधाति। विलसत्यत्र मन्दिरस्य शिरसि पित्तलमयः कलशः, लोहमयं त्रिशूलं रक्तवस्त्रनिर्मिता च पताका मन्दिरस्य समीपे दक्षिणदिग्भागे एकं सुनिर्मितं हवनकुण्डं वर्तते एका चात्र चतुर्हस्तपरिमिता समन्तात् चक्र वेदिका निर्मीयते। द्वे यात्री-निवास-भवनेऽपि अत्र वर्तेते।

यात्रिणः शक्तिमन्दिरस्य पूर्वद्वारेण प्रविश्य गृहे चोपविश्य शक्तेर्पूजनं दुर्वन्ति। तत्र शक्तिः मूर्तिः समायुक्ताऽष्टभुजाभिरष्टायुधैश्च समलंकृत हस्ता, रक्तपरिधानेन सुशोभिता अनेक सौभाग्यद्रव्यैः सुसज्जिता समलंकरोति। मन्दिरस्य गर्भगृहे स्थिता पश्चिम भित्तिकायां सुनिर्मित काष्ठपीठिकायां भव्या मूर्तिरियं फीटत्रयपरिमित शरीरा वर्तते। सर्वांगसुन्दराः देव्याः सुरखण्डाया अत्र एकं प्राकृतमयं पाषाणलिंगमपि वर्तते। शक्तिमन्दिरस्य वाह्याभ्यन्तरस्य अनेकेषां विष्णु-ब्रह्मा-शिव-गणेश-उमानन्द-भैरवादीनां मूर्तयोऽपि प्रतिष्ठन्ति।

आश्विनचैत्रमासयोर्नवरात्रिषु सकलजीवलोकहृदयानन्ददायकेषु भवन्त्यत्र वृहद् मेलापकानामायोजनम्। येषु भारतीय संस्कृतेरनुपोषकाः संख्यातीता धार्मिक जनाश्चात्रागच्छन्ति। तत्र अष्टगन्धैः कुंकुम, धूप, दीप, नैवेद्य, पुष्पैः सौभाग्यद्रव्यैश्च ते भक्ताः शक्तिमभ्यर्च्य देव्याश्चरित्रपाठं नृत्यं कथाश्रवणं च कुर्वन्ति। कस्मिनपि दिने भक्ताः शक्तेर्दर्शनार्थमत्रागंतुं शक्नुवन्ति सुविधानुसारं आवश्यकतानुसारमिच्छानुसारं क्षेत्रीयाः जनाः पीठस्यास्य पावनतां वीक्ष्य प्रतिवर्षे वारमेकमवश्यमेवं यात्रां कुर्वन्ति।

न केवलं धार्मिक महत्वमस्य पीठस्य अपितु प्राकृतिक महत्वमपि अपरिहार्यं वर्ततेऽस्य। प्रतिदिनमत्र बहवो पर्यटकाः प्रकृतिनिरीक्षकाः धीमन्तश्च समागत्य स्थानस्यास्य प्राकृतिकीं सुन्दरतामवलोक्य स्वात्मानं कृतकृत्यं मन्यन्ते।

प्राचीनकालादेवस्मिपीठे अष्टपशु बलिपूजन पद्धतिः प्रचलिताऽभवत्। किन्त्वधुना इयं प्रथा निरवशेषतां गतैव। इदानीमत्र शक्तेः सात्विकी पूजा स्व

---

१. श्रीमद् भा० १०-५१, ४ के० १३२।

२. यवनेशी ततः प्रोक्ता सर्वदारिद्र्यनाशिनी।
तत्र ब्रह्मा च विष्णुश्च रुद्रश्चैव तथा त्रयः॥
संस्थितानन्दरूपेण तस्मिन्नेव नगोत्तमः॥ —के० ३२-१७

प्रचलिता। न दृश्यतेऽत्र मन्दिरस्य व्यवस्थाकारिणी काऽपि समितिः। कुलीनाः ब्राह्मणाः दातृभिः समर्पित द्रव्योपहारैश्च शक्तेर्पूजनसामग्रीणां व्यवस्थां कुर्वन्ति।

ये जनाः पावनपीठस्यास्य दर्शनं दुर्वन्ति ते सकलानभीष्टानाप्नुवन्ति। शक्तेः दर्शनेन पूजनेन मन्त्र जाप्येन चात्र सर्वेशत्रवः नश्यन्ति सर्वे च मनोरथाः सिध्यन्ति।[१]

## शक्ति अन्नपूर्णा (पुष्टि) सिद्धपीठम्

इदं खलु शक्ति सिद्धपीठं[२] भागीरथ्या उत्तरेकूले बारणावत पर्वतस्योपत्यकायां स्थिते सौम्यकाशी नामके स्थाने विराजते। इदमेव स्थानमुत्तरकाशी नाम्नः विख्यातमस्ति। अस्मिन् समये स्थानमिदं नगररूपेण सञ्जातमस्ति तत् खलु उत्तरकाशी नाम्नैव प्रसिद्धमासीत् यत् परितः पर्वतमाला दृष्टिगोचराः भवन्ति। पर्वतखण्डेष्वत्र-विविधाः वनस्पतयः विराजमानाः सन्ति। क्षेत्रेऽस्मिन् देवदारु वृक्षाणां बाहुल्यंदरी-दृश्यते। भूशक्तेः भागीरथ्याः गंगायाः प्रवहत्यमपि नद्यद्वयं असि-वरुणा नामधेयं भूभागमिदं स्वजलौघेन पवित्रयति।[३] इदं स्थानं विविधामिर्लताभिर्वृक्षैश्च समाकीर्णमस्ति। दिव्यक्षेत्रेऽस्मिन् विविधाः पक्षिणः कूजन्तः समवलोक्यन्ते। सुरम्येऽधिष्ठानेऽस्मिन् स्थिते पीठे शक्तेः देव्याः विशालं मन्दिरं वर्तते। भगवतो विश्वनाथस्य

---

१. यदन्यत्र महाभाग वर्षात् सिध्यति कारकम्।
तदत्र दिवसेन्नैव सिद्धियेष्यन्त्य संशयः।
योनिपर्वत मारूढो यदि देवीमुपासतो।
धन्यो भवति लोकेषु तेनैवैकेन कर्मणाः॥
अस्मिन्त्रोऽपि सञ्जप्तोदेशेऽस्मिन्योनिपर्वते।
सिद्धिं प्रलभते पूर्णां सुरैरपि हि दुर्लभाम्॥
राजनो वश्यतां यान्ति नश्यन्ति सर्वशत्रवः। —के० १३२-४-७

२ देवदारुवने पुष्टिर्मेधा कश्मीरमण्डले।
भीमादेवी हिमाद्रौ तु तुष्टिर्विश्वेश्वरी तथा॥ —देवी भा० ७-३०-७०
अन्नपूर्णेति विख्याताः पञ्चकामदुधा क्रमात्।
श्रीविद्या सिद्धलक्ष्मीश्च मातंगी भुवनेश्वरी॥ —वि० तं० ५-९९-१५

३. अस्ति गुह्यतमं क्षेत्रं सारात्साररतरं परम्।
परं गोप्यं परं तत्वं तुषारवच्छिलोच्चये॥
सर्वतीर्थमयं सर्वं देवजुष्टं सुपुण्यदम्।
यत्र भागीरथी पुण्या गंगा चोत्तरवाहिनी॥
सौम्यकाशीति विख्याता गिरौ वै वारणावते।
असी च वरुणा चैव द्वे नद्यौ पुण्यगोचरे।
यत्र ब्रह्मा च विष्णुश्च महेशश्चेति ते त्रयः।
नित्यं सन्निहिता यत्र मुक्ति क्षेत्रे तथोत्तरे॥

मन्दिरं गणेश-मन्दिरं, हनुमन्मन्दिरं भगवतः परशुरामस्य तपस्यास्थलं, लाक्षागृहमित्यादि धार्मिकस्थानं दर्शनीयमत्र वर्तते। शक्ति सिद्धपीठस्थानमिदं समुद्रतटात् सहस्रत्रयफीटमिते (३००० फीट) परिमाणे उपत्यकामुपरि तिष्ठति।

श्रूयते इदं सिद्धपीठं मृतायाः दक्षपुत्र्याः सत्याः शरीरस्य शिरोभाग पतनात् प्रतिष्ठितमस्ति। किन्तु प्रसिद्धेयं गाथाऽपि यत् काशीतः समागत्य भगवतः विश्वनाथस्य शक्त्या अन्नपूर्णायाश्च निवासेन स्थानस्यास्योत्तरकाशीति नाम्ना शक्तेश्च (सिद्धपीठस्य च) अन्नपूर्णा नाम्ना विख्यातिरभूत्। विषयेऽस्मिन् एका पौराणिकी कथा प्रचलिता अस्ति-द्वापरयुगस्यावसानकाले भगवान् श्रीकृष्णः (ऋषीणां-प्रदत्तेन) शापेन) स्वचक्रेण यदा काशीं ददाह[१], तदा सर्वे देवाः कैलासं गत्वा शंकरस्य प्रार्थनां चक्रुः[१]। शंकराय निवेदयाभासुश्च-भगवन् वाराणसी (काशी) नगरी विष्णो सुदर्शन-चक्रेण दन्दह्यमानाऽस्ति सम्प्रत्यास्माकमावास क्व भवेदिति निर्दिश्यताम्' इति देवतानामावेदनं श्रुत्वा भगवान् शंकरः समवादीत् यत् हे देवा ? यदा यवना भूभागं स्वाधिकारे करिष्यन्ति तदा मया सह काशी सहितान्यन्यानि तीर्थानि सौम्यकाश्यां

---

१. सर्वस्यान्तर्वहिः साक्षी कृत्यां माहेश्वरीं विभुः।
विज्ञायं तद्विघातार्थं पार्श्वस्थं चक्रमादिशत्॥
तत्सूर्यकोटि प्रतिमं सुदर्शनं जाज्वाल्यमानं प्रलयानलप्रभम्।
स्वतेजसा स्वं ककुभोऽथरोदसी चक्रं मुकुन्दास्य मथाग्निमादर्वम्॥
कृत्यानलः प्रतिहतः सरथांगपाणैरस्तौजिता समुपभग्नमुखो निवृत्तः।
वाराणसी परिसमेत्य सुदक्षिणं तं सत्विग्जनं समदहन् स्वकृतोऽभिचारः॥
चक्रं च विष्णो त्वदनु प्रविष्ठं वाराणसी साहसभालयार्पणम्।
सगोपुराहाटक कोष्ठसंकुलां सकोश हस्त्यश्वरथान्नशालाम्॥
दग्धा वाराणसी सर्वा विष्णोश्चक्र सुदर्शनम्।
भयः पार्श्वमपातिष्ठत् कृष्णस्याक्लिष्ट कर्मणः॥
यः येतच्छ्रावयेन्नित्यं उत्तमश्लोक विक्रमम्।
समाहितो वा शृणुयात् सर्वपापैः प्रमुच्यते॥
—श्रीमद् भा० १०-६६-३८-४३

२ वक्ष्ये तद् विस्तरेणाहं यज्ज्ञात्वामृतमश्नुते।
शप्त्वां श्रुत्वा पुरा काशीं सर्वेदेवा सवासवाः॥
कलावन्तर्हिता काशी भविष्यति इति स्फुटम्।
मुनयश्च महाभागः संत्रस्ता मुक्तिलालसाः॥
उमेशं शरणं जग्मुर्हिमवन्तं नगेश्वरम्।
शतयोजन विस्तीर्णा सभा यत्र विराजते॥ —के० ९३-२७-२९

निवासं करिष्यन्ति ।[१] यस्मिन् स्थाने देवासुर-संग्रामे निक्षिप्ताशक्तिर्हस्तगोचरा भवति तदेवास्माकं सिद्धस्थानमस्ति[२] । काश्यादिसु विभिन्नेषु तीर्थेषु अंशरूपेणैवाहं निवसामि किन्तु तत्रोत्तरकाश्यां मदीया समग्रा स्थितिरिहास्ति ।[३] काश्यामुत्तरकाश्यां वा कोऽपि भेदो नास्ति यश्च खल्वनयोर्भेदं कुरुते सः निश्चयेन नरकभागी भवतु ।[४] श्रुत्वेदं प्रभृति सर्वेदेवा उत्तरकाश्यामेव निवासं कुर्वन्ति । अनेन खलु कथानकेन प्रतीयते यत् वाराणस्यां (काश्यां) प्रतिष्ठिता विशालाक्षी शक्ति अस्मिन्नेव स्थाने कलियुगारम्भ-समये देवैः प्रतिष्ठिता अस्ति । भगवान् विश्वनाथोऽपि काश्यामेव-प्रतिष्ठितमासीत्, किन्तु तदनन्तरम् प्रभृत्येव अत्र स्थितोऽभूत् शंकरो विश्वनाथः । जन-श्रुतेराधारेणापि इयमुत्तरकाशी कलियुगे पूर्णकाशी-वाराणसी' इति व्यपदिश्यते । यत्र भगवान् विश्वनाथः भगवती विशालाक्षी च निवसति ।

अस्मिन् वर्तमाने युगे भगवन्तौ विशालाक्षीविश्वनाथौ[५] काशीतः समागत्य अस्यामेव काश्याँ—सौम्याख्यायामुत्तरकश्यां निवसतः । अत्र पुरैकदा शक्तिः राजराजेश्वरेण कुबेरेण (धनदेन) समर्चिता तदेवेयं राजराजेश्वरी नाम्नाऽपि विख्याताऽभूत् उत्तरकाश्यामेव स्थिता शक्तिरियं विशालाक्षी राजराजेश्वरी पुष्ठ्यन्नपूर्णादि नामभिः प्रसिद्धा अस्ति । इमां शक्ति भगवान् शेषनाग स्वशिरसि धारयन् आस्ते ।[६]

अस्मिन्पीठे भगवतः विश्वनाथस्य बिशालं मन्दिरं विराजते । मन्दिरेऽस्मिन् प्राकृतिकं पाषाणमयं शिवलिंग वर्तते । मन्दिरस्यास्य विश्वनाथस्य सम्मुखे शक्ते-र्विशालमन्दिरं सुशोभते । मन्दिरमिदं दैर्घ्येण त्रिंशत्फीटमितां वर्गाकारतां चत्वारिंश-

---

१. यदा पापस्य बाहुल्यं यवनाक्रान्तभूतलम् ।
भविष्यति तदा विप्रा निवासं हिमवद्गिरौ ॥
काश्या सह करिष्यामि सर्वतीर्थैः समन्वितः ।
अनादि सिद्धं मे स्थानं वर्तते सर्वदेव हि ॥ —के० ९३-५०-५९

२. निक्षिप्त्वा यत्र पूर्वं हि संगरे देवता सुरैः :
अद्यापि दृश्यते तत्र शक्तिर्धातुमयी शुभा ॥ —के० ९३-९४

३. अन्येषु तीर्थराजेषु काश्यामपि द्विजोत्तमाः ।
अंशांशभावतो विप्रा निवसामि सदा तथा ॥
केदारमण्डलेऽप्यत्र, साकल्येन स्थितिर्मम ।
अस्यास्तु दर्शनादेव मुक्तो भवति मानुषः ॥ —९३-५३-५४

४. यथा काशी तथा ह्येषा मत्पुरीभेदवर्जिता ।
यः कश्चिद् भेदकृल्लोके स याति नरकं ध्रुवम् ।

५. वाराणस्यां विशालाक्षी गौरीमुखनिवासिनी ।
क्षेत्रे वै नैमिषारण्ये प्रोक्ता सा लिंगधारिणी ॥ —देवी भा० ७-३०-५४

६. अधः शेषस्य शिरसि घृता सा परदेवता ।
राजराजेश्वरी दिव्या सा शक्तिः परभास्मृता ॥ —के० ९५-५३

त्फीटमितां मुच्छ्रयतां दधाति। मन्दिरस्य शिखरप्रान्ते एकं कलशं विराजते एका चात्र पताका सुशोभते। मन्दिरस्यान्तः गृहे एकं षड्विंशतिफीट-परिमितं पित्तलमयस्तम्भमस्ति। तस्योपरि च लोहनिर्मितानि विशालानित्रीणि शूलानि वर्तन्ते। इदं खलु भगवतः शिवस्य त्रिशूलमिति व्यपदिश्यते। स्तम्भेऽस्मिन् संस्कृतभाषया निबद्धश्लोकत्रयात्मकोऽभिलेखो वर्तते। तत्र प्रथमौ द्वौश्लोकौ शार्दूलबिक्रीडितछन्दसि निबद्धौ स्तः।[1] तृतीयश्च श्लोक स्नग्धरायां निबद्धोऽस्ति।[2] एषु श्लोकेषु लिपिक्रम ईदृशोऽस्ति यथा प्रथमे श्लोके लघून्यक्षराणि द्वितीये च ततोऽधिकानि, तृतीये च ततोऽप्यधिकान्यक्षराणि निर्मितानि सन्ति। अनेनाभिलेखेन प्रतीयते यत् गोपेश्वर नामक कश्चिद्धर्मात्मा महाराज अत्रत्या विश्वनाथमन्दिरस्य निर्माणं चकार। तत्समक्षेदं शक्तिसिद्धपीठस्यापिमन्दिरं स एव निर्मापयामास। स्तम्भं चेदं तस्य पुत्र श्रीगुहनामक स्वकीयायाः कीर्तेरमरत्वाय निर्मापयामास। एषः खल्वभिलेख उत्तराखण्डे सर्वेषामभिलेखनां मध्ये प्राचीनतमोऽस्ति। पुरातत्व वेतृणामिदमेवमतम् सर्वत्र दृश्यते। पुरातत्ववेत्सुः राहुलस्येदमनुमानमासीत् यदस्मिन्नेव लिपिक्रमे लिखितो गोपेश्वरे शिवमन्दिरे त्रिशूलाभिलेखो प्रतीयतोऽपि तात्कालिक एवास्ति। अतः पुष्टप्रमाणैः प्रमाणितोऽयं लेखः षष्ट्यां ईशवीय शताब्दयां लिखितं भवेदिति।

यद्यप्यस्मिम् पीठे शक्तेः शक्ति अन्नपूर्णा चेति नामके द्वे मन्दिरे विद्येते। सिद्धपीठं त्वत्र स्तम्भेन सुशोभितं विश्वनाथमन्दिरस्य समीपमेवास्ति। पीठेऽस्मिन् शक्ति अन्नपूर्णाशक्तेर्नाम्ना निवसति। पीठरूपा शक्तिरत्र स्तम्भेनावरिता वर्तते। अतः जनाः स्तस्भस्यमूलभागे शक्तेः पीठपूजां कृत्वाऽनन्तरं शिवशक्त्यात्मकस्तम्भस्य पूजनं कुर्वन्ति।

सिद्धपीठेऽस्मिन् भगवतोविश्वनाथस्य शक्ते अन्नापूर्णायाश्च पूजा दैनिकी भवति। इयं पूजा धीमन्तः साधवः सात्विक विधिना एव कुर्वन्ति। पशुबलि परम्परा

---

१. ओं आसीद्यः क्षितियो गणेश्वर इति प्रख्यातकीर्तिन्नरैः।
चक्रे येन भवस्य वंश हिमवच्छृंगोच्छितं दीप्तिमन्।
कृत्वाणर्व्वनजाधिपस्वक्रुपयोः सामात्यभाग्यश्रियं।
स्मृत्वा शक्र सदृत्वमुत्सुकमना यातः सुमेर्वालयँ॥ १ (शिलालेख)
पुत्रस्तस्य महाभुजोविपुलहक् पीनोन्नतोरस्थलः।
रूपत्यागनयैरनंगधनद यासानतीत्यौद्‌गतः।
नाम्ना श्रीगुह इत्युदारचरितः सद्‌धर्मधुर्यस्सतां।
शक्तिं शत्रुमनोरथप्रमथिनीं शम्भो चकाराग्रतः॥ २ (शिलालेख)

२. प्रातः प्रातर्म्मयूखैरुरुभिरविरलं शर्वरं ध्यान्तमन्धं।
न्नलुवश्यारुतारानिकरपरिकरोदार सारोदरत्वं॥
स्वं बिम्बंचित्रबिम्बांम्बरतलतिलकं यावदेको विधन्ते।
तावत्कीर्तिः सुकीर्ताश्चिरमरिमधनस्यास्तु राज्ञः धिरेयं॥५-३ (शिलालेख)



चामुण्डा सिद्धपीठम्



कमला (कंसमर्द्दिनी) सिद्धपीठम्



श्रीनगरे कमलेश्वर मन्दिरम्



भुवनेश्वर (चन्द्रवदनी) सिद्धपीठम्



सुरखण्डा सिद्धपीठम्



रमणा (भूतेश्वरी) सिद्धपीठम्



छिन्नमस्ता पीठम्



इन्द्रासना सिद्धपीठ भवनम्



अन्नपूर्णा सिद्धपीठ भवनम्



मुण्डमालेश्वरी सिद्धपीठम्



महत्कुमारिका सिद्धपीठम



अनङ्गा सिद्धपीठम्



देवप्रयाग स्थितं रघुनाथ मंदिरम्



रणमण्डना (पार्वती देवी) सिद्धपीठम्



विकृताख्या (चमराढ़ा देवी) सिद्धपीठम्



सुन्दरी (जयन्ती) सिद्धपीठम्

आसीदस्मिन्पीठे। भक्तेरपि शक्तिशंकरयोर्सात्विकी पुजैव अत्र सम्पाद्यते।

फाल्गुनमासस्य कृष्णपक्षस्य चतुर्दश्यांतिथौ (महाशिवरात्र्यां) श्रावणमासे च विश्वनाथमन्दिरे शंकरस्य विशेषपूजनं भवति। चैत्राश्विनमासयोर्नवरात्रपर्वषु शक्ति-मन्दिरे बहूनि दुर्गयज्ञानि समायोजितानि भवन्ति। वर्षस्य द्वादशमासानांकृष्णस्याष्टमी-नवमी-चतुर्दशीतिथिषु सर्वक्षेत्रीयाः श्रद्धालु जना अत्र समागत्य गंगायां स्नात्वा समुदिता भूत्वा शक्तेः विश्वनाथस्य च मन्दिरे विश्वनाथस्तोत्रपाठानि-पुरुषसूक्त[१]-शिवसूक्त[२]-देवीसूक्त-देव्यपराधक्षमापनस्तोत्र पाठानि च कुर्वन्ति षोडशोपचारविधिना सम्यक् शक्तिशंकरयोर्पूजनमपि विदधति।

आवैशाखाश्विनमास पर्यन्तं यावदस्मिन् सिद्धपीठे संख्यातीता जनाः समा-गच्छन्ति। यात्रिणां भोजनावासादि व्यवस्था अत्र सम्यक् समलोक्यते। अस्मिन् वारणावत संज्ञके पावनेस्थले स्थितस्य सिद्धपीठस्य दर्शनमात्रेणैव जना इहलोके मनोभिलषितं प्राप्य देहान्ते परमसुखस्यानुभवं कुर्वन्ति। राजा गतवती राज्यलक्ष्मीं पुत्रहीनो जनाः पुत्रान् विद्यार्थिनो विद्यां धनहीनो जनाः विपुलंधनं मोक्षर्थिनो जनाः मोक्षमेतानि स्व स्व मनोभिलषितानि सत्कर्मणि सिद्धपीठस्यास्य दर्शनोपवासपूजनैश्च निःसंदिग्धं प्राप्नुवन्ति।[३] अस्मिन्पीठे अन्नपूर्णा मंत्रजाप्येन[४] जनाः सौभाग्यं लभन्ते।

इदं सिद्धपीठं भारतीयजनानां श्रद्धाविश्वासयोर्केन्द्रमस्ति। सर्वेजनाः धार्मिक-सांस्कृतिक-राजनीतिक-दार्शनिक-क्षेत्रेषु सिद्धि प्राप्तये अत्रागत्य शक्तिशंकरयोर्पूजनं कुर्वन्ति। अस्मिन् पीठे मन्दिराणां व्यवस्था सामान्यत एवास्ति। पीठस्यास्य व्यवस्था सम्प्रति विश्वनाथमन्दिरसमिति करोति।

---

१. यजुर्वेदीय रुद्राष्टाध्यायी अध्याय २ मंत्र १-१६

२. ···················अध्याय ५

३. राज्यभ्रष्टोऽपि यो राजा सोऽत्र शक्ति समर्चयेत्।
उपचारैः षोडशभिः पंचभिर्वा यथाविधि॥
एवं मासं तु यो राजा कुरुते कारयेदपि।
प्राप्नोति राज्यं विपुलं हतशत्रुरकण्टकम्॥
अपुत्रो दशधा तत्र स्नापनं दुग्धवारिणा।
करोति शक्त्या विप्रेश सुपुत्रं लभते ध्रुवम्॥
विद्यार्थी यस्तत्र गच्छेत् तस्मिन् वै शक्तिमण्डले।
जपेत्सारस्वतं मंत्रं निराहारो जितेन्द्रियः॥
लभते दशरात्रेण प्रसादं पुरुषस्तदा।
तस्मिन्नेव स्थले रम्ये गच्छेदीशमनुस्मरन्॥ —के० ९५-७६-८०

४. ओं ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरी अन्नपूर्णे स्वाहा॥ —इति मंत्रः

## षष्ठोऽध्यायः

### चन्द्रवदनीक्षेत्रे सिद्धपीठानां विशेषवर्णनम्

इदं चन्द्रवदनीक्षेत्रं कांडीखालादारम्य सुन्दरीसिद्धपीठं यावत् विस्तीर्णं वर्तते। देवप्रयागं, कोटीश्वरं बागीश्वरं चास्यक्षेत्रस्य प्रमुखं तीर्थस्थानम्। देवप्रयागं परितः सन्त्यसंख्यानि पुण्यस्थलानि। पुण्यस्थलान्येतानि क्षेत्रस्यास्य देवभूमित्वं ख्यापयन्ति। देवप्रयागे पुण्यप्रदेऽस्मिन् स्थाने भागीरथ्यलकनन्दयोर्सगंमो भवति। चन्द्रकूट-दशरथाचल-नृसिंहाचल-गृध्राचल-गर्दभासुर पावकीदेवी इत्येषां पर्वतानां सुरम्य शिखराणि बहुविधवनस्पतिभिः परिपूरित वनानि च क्षेत्रस्यास्य प्राकृतिकीं शोभा वर्धयन्ति। सम्भाव्यते यत् पर्वतबाहुल्यक्षेत्रेऽस्मिन् भूगर्भशास्त्रिणः यदि कार्यंकुर्युस्तर्हि विपुलां खनिज सम्पत् प्राप्तुं शक्यते। अत्रत्यानां जनानां मुख्योव्यवसायः पशुपालनं कृषिकार्यं चास्ति। युवानोऽधिसंख्यकाः सैनिकाः शिक्षकाश्चैव सन्ति। केच्चिज्जनाः ज्योतिर्विदाः कर्मकाण्डपरायणाश्चापि सन्ति। पशुपालेन अन्नोत्पादने शिक्षायां च बगलाक्षेत्र साद्दशीदशा अत्राऽपि समवलोक्यते। अत्र निवासिनां जनानां वेशभूषा सरणिः प्राचीनायाः भारतीयायाः संस्कृतेः स्मृतिद्दढाज्जनयति। एषां पारवारिको पिता पुत्रयोः दम्पत्योः भातृभगिन्योश्च सम्बन्ध शोभनो दरीद्दश्यते। सर्वगुणसम्पन्नापि विदुषी पत्नी गुणरहितं साधारणमपि पतिं पातिव्रत्यं समास्थाय श्रद्धयासेवमानेह प्रायः द्दश्यते। एवमेव खलु पुत्रः परमेश्वर बुद्ध्या पितरं सम्यग् समाद्रियते। अत्रत्यानां जनानां मुख्याः देवताः-रघुनाथः शिवः शक्तिः भैरवः घण्टाकर्णः दशरथः नृसिंहः नागराजः एवं रूपा सन्ति। देवतानामेतेषां क्षेत्रेऽस्मिन् बहूनि प्राचीनान्यर्वाचीनानि सन्ति मन्दिराणि कित्वत्रत्यानां जनानां सिद्धपीठेषु महति श्रद्धा समवलोक्यते पर्व-दिनेषु नवरात्रपर्वषु च अत्रत्या जनाः परिवारेण मित्रजनैश्च साकं महत्या श्रद्धया सिद्धपीठेषु नियमपूर्विकां यात्रां कुर्वन्ति। धर्मार्थकाममोक्षाख्य चतुर्विधपुरुषार्थ सिद्धये यात्रिणः सिद्धपीठानां दर्शनं तत्र स्थितानां शक्तीनां च पूजनं एकान्ततः साधनं मन्यन्ते। क्षेत्रेऽस्मिन् चन्द्रवदनी-भूतेश्वरी-विक्रताख्या-रणमण्डना सुन्दरी-इत्येत्तानि पंचसंख्यकानि सिद्धपीठानि प्रतिष्ठितानि सन्ति। येषां सविस्तराणि वर्णानान्यधो-लिखितानि विद्यन्ते।

### भुवनेश्वरी (चन्द्रवदनी) सिद्धपीठम्

सत्याः पार्थिवशरीरस्य कटिभागस्य विष्णुचक्रकर्तितस्य पतनेनेदं सिद्धपीठं

भुवनेश्वरीति नाम्ना प्रथितां गतम् इति लोके प्रसिद्धिः।[१] सिद्धपीठस्यास्य स्थापना अतिप्राचीनकाले एव अभवत्। इदं सिद्धपीठं केदारखण्डस्य टिहरी जनपदे टिहरी-देवप्रयाग मार्गस्य श्रीनगर-टिहरी मार्गस्य चान्तराले-कांडीखालजामणीखालयोः मध्यस्थित चन्द्रकूटनाम्नः पर्वतस्य उत्तुंगशिखरमधितिष्ठति। पर्वतश्चायं समुद्रतटात् पंचशताधिकाष्टसहस्र फीटावधितुंगतां धारयति। अस्मात् पर्वतात् तिस्रः जलधारा समुद्भवन्ति। तत्र एका भागीरथ्यां द्वितीया अलकनन्दायां तृतीया च भिल्लंगनायां विलीना भवति। इमास्तिस्रोऽपि जलधारा चन्द्रभागा इति नाम्नाऽस्ति प्रसिद्धा।

अस्य सिद्धपीठस्य प्रसिद्धिश्चन्द्रवदनीति नाम्नां कथं संजाता सम्बन्धेऽस्मिन् पौराणिकगाथेयं प्रसिद्धा—एकदा भगवान् शंकरः भुवनेश्वरी निवासस्थलेऽस्मिन् भौवनतीर्थे आगत्य चिन्तासन्तानपराधीनः भस्मीभूतायाः सत्याः स्मारंस्मारं स्मृत्वा चिन्तयामास। विरहातुराय तस्मै शंकराय भुवनेश्वरीदेवी चन्द्र इव रंजनं स्ववदनं दर्शयामास[२] तां चन्द्रवदनीमवलोक्य प्रसन्नो भूत्वा शिवः मोहं त्यक्त्वा स्वस्थचित्तोऽभूत्।[३]

---

स्कन्द उवाच

१. अन्यच्च ते प्रवक्ष्यामि पीठं सिद्धिप्रदायकम्।
नाम्ना वै भौवनं ख्यातं सद्यः प्रत्ययकारकम्॥
गंगायाः पूर्वभागे हि चन्द्रकूटो गिरिः स्मृतः।
तस्यापि दर्शनादेव मुच्यते जन्मपातकात्॥
नृत्यंत्यप्सरसो यत्र गायन्ते चैव किन्नराः।
'भुवनेशी' यत्र देवी ख्याता शंकरवल्लभा॥
यत्र वै भैरवो देवो द्वास्थले चाभिरक्षितः॥ —के० १४१-१-३
भुवनेश्वर्याः वर्णनम् देवी भा० ५-३३
.... .... .... .... १२-१२
भर्गात्मिका भीमवती भवबन्ध विमोचिनी।
भजनीया भूतधात्री रंजिता भुवनेश्वरी॥ —देवी भा० १२-६-१२१

२. हराग्रे संस्तुता देवी महादेव विमोहिनी।
दर्शयामास स्वं रूपं सर्वेदेवैरगोचरम्॥
सिन्दूरपूररक्तांगी त्रिनेत्रां चन्द्रशेखराम्।
स्थितशोभापरिक्रान्तपीयूषां भक्तवत्सलाम्॥

३. दृष्ट्वा तां चन्द्रवदनीं विश्वानन्दनतत्पराम्।
रत्नपूर्णघटस्थां च कोटि बालार्कसन्निभाम्॥
मोहं तत्याज भगवान् स्वस्थश्चैवाभवत्क्षणात्।
श्रुत्वा माया वैभवं च किमहो किमहो वदन्॥
देवाश्चतां परिक्रम्य प्रणम्य च पुनः पुनः।
ययुर्यथागतं विप्र तथान्ये मुनिसत्तमाः॥
तदादीदं परं पीठं महादेवश्च संस्थितः।
यदन्यत्र त्रिभिर्वर्षैस्तदत्र दिनरात्रितः॥ —के० १४१-२७-३०

सर्वेदेवाऽपि गन्धर्वैः सह चन्द्रवदिन्याः दर्शनार्थमत्रागत्य देवीदर्शनेन ईप्सितफलमुपलब्धवन्तः। तदारस्य भौवनतीर्थं चन्द्रकूटपर्वत इतिनाम्ना भुवनेश्वरीपीठं च चन्द्रवदनीति नाम्ना प्रसिद्धा बभूव।

सिद्धपीठादस्माद् वायव्यदिशि:-वागीश्वरः दक्षिणस्यां-नागेश्वरः प्रतीच्यां-कोटीश्वरः ईशानपूर्वदिशोर्मध्ये-भद्रसेनेश्वर इति चत्वारो दिक्पालाः प्रतिष्ठिताः सन्ति। सुरखंडादेवी विकृताव्यादेवी च द्वयोः सिद्धपीठयो, चतुर्मुखीकेदार, पंवाली-कांठा, क्यूंकालाट्यूवा, विसोनट्यूवा, रतकोटट्यूवा राजावोगा, माणिकनाथट्यूवा, बन्दरपुच्छ इत्यनेकेषां सततहिममण्डितानां शिखराणां पुनाणूग्रामस्थित शंकरमन्दिरस्य सिलौड़ग्रामस्थित श्रीकृष्णमन्दिरस्य पलेठीग्रामस्थितशिवमन्दिरस्य अनेकेषामन्येषां च दर्शनीयस्थलानां शाक्त-शैव-वैषणव देवसद्मनांच दर्शनम् चन्द्रकूट शिखरे विद्यमाना चन्द्रवदनी सिद्धपीठात् भवन्ति।

अस्मिन् सिद्धपीठे सप्तति सोपानानामुपरि त्रिभिस्परिधिभिः परिवृतं नवनिर्मितमेकं विशालं चत्वरमस्ति। चत्वरेऽस्मिन् भुवनेश्वर्याः देव्याः अतीव प्राचीन-मन्दिरं दैर्घ्येण विंशतिफीटमितां वर्गाकारतां दशफीटमितां चोछ्र्यतां दधाति। गोपुरेचात्र सदानन्दनामको भैरवः सदैवेनंस्थानं रक्षति।

मन्दिरस्य पूर्वपश्चिमयोर्दिशोः द्वे द्वारे स्तः। विशालकक्षस्यैकस्मिन्कोणे गर्भगृहं विद्यते। तदेव भुवनेश्वरीस्थानं शक्तिभवनमितिज्ञायते। एतस्मिन् शक्तिभवने भुवनेश्वरीयंत्रं स्वल्पाकारं भूमावेव प्रतिष्ठितम्। यंत्रस्योपरि नैपथ्यरूपेण वस्त्र-खण्डमेकं विस्तार्य तदूर्ध्वभागेस्थापिता भगवती अलक्षितरूपेणस्थिता चन्द्रवदिन्याः देव्याः स्वरूपस्य दर्शनं न केऽपि भक्ताः कर्तुमर्हन्ति, केवलं नेपथ्यवस्त्रस्याधोनिहितस्य भुवनेश्वरीयंत्रस्यैव दर्शनं तत्र भवति।

नेपथ्यवस्त्रस्योपरिस्थित देवी स्वरूपदर्शनस्य अभिलाषा प्रयत्नाच्च महदनर्थं मुत्पादयन्ति इति सर्वत्र प्रथितम्। प्रसिद्धमत्र विषयेऽस्मिन्-पुरा भगवत्याः भुवनेश्वर्याः चन्द्रवदनस्य दर्शनकांक्षिणः कस्यचिद् पुरुषस्य त्रयः सुताः नाशं गताः। तस्मादेवकालात् पटान्तर्निहितायाः चन्द्रवदन्याः शक्तेः दर्शनस्य इच्छां न कुर्वन्ति भक्तजनाः।

शक्तिभवनस्य पूर्वद्वारे प्रवेशात् पूर्वमेव दक्षिणदिशि प्रतिष्ठितैका भव्या विशाला उमाशंकरयुगलमूर्तिखलोक्यते गणेशेन सन्निहिता। भगवती दर्शनं तु उमाशंकरौ प्रणम्यैव कर्तव्यम्। भुवनेश्वरी यंत्रस्य दर्शनं कृत्वा पश्चिमद्वाराद्बहिरागत्य मन्दिरस्य च परिक्रमाकरणीया इति।

सिद्धपीठस्यान्तिमसोपानाद् दक्षिणोत्तरयोरुभयपक्षे द्वे धर्मशाले स्तः। एकं च पुजारिब्राह्मणस्य निवासगृहमपि अस्ति। मन्दिरस्याधोभागे द्वे भोगशाले विद्येते, एका प्राचीना अन्या च नवीना। भट्ट जातीयोऽत्र ब्राह्मणः भोगं पाचयित्वा शक्तये समर्पितं करोति दर्शनकांक्षिणो भक्ता अपि प्रसादं गृह्णन्ति।

## चन्द्रवदनीपीठस्य स्थापनाया इतिहास—

लोके प्रसिद्धेवेयं किंवदन्ती—चतुर्दशसहस्र (१४०००) वर्ष पूर्वमत्र बलिरुपेणात्मानं समर्पयन्त एव भक्ता आगच्छन्तिस्म। अत्र पीठे एकः प्राकृतिकः खङ्गो निहितमासीन् खङ्गोऽयं बलिरुपं मानवपशुमागतं दृष्ट्वा सदानन्दस्य भैरवस्याग्रभागे तस्य शिरश्चिच्छेद। सदानन्दश्चात्र रक्षक भैरवःसदा तिष्ठति[1]। परमन्यजनाः मरणभीताः शक्तेः समीपमपि गन्तुँ नोत्साहं कुर्वन्ति। अष्टमशताब्द्यां श्रीमच्छंकराचार्य अत्रागत्य शक्तेः पूजनमकरोत् प्रसन्ना भगवती तस्मै शंकराचार्याय स्वदिव्यंस्वरूपं दर्शयामास आदिशच्च त्वं ममेदं चन्द्रवदनं गुप्तस्थाने स्थापयित्वा, अत्रैकां भुवनेश्वरीशिलां इति आदिश्य ता तत्रैवान्तर्हिता।

तदनन्तरं शंकराचार्यः शक्तिमन्दिरं विरचितवान्। मन्दिरस्यगर्भगृहे स्वल्पभवनत्योपरिखण्डे शक्तेः चन्द्रवदनं स्थापयित्वा तस्याधोभागे च भुवनेश्वरीयंत्र सन्निधिष्ठितामेकान्यां शिलां च स्थापितवान्। एतयोरपि मध्ये निबध्य एको नैपथ्यरुपो वस्त्रखण्डः। तस्मादेवकालादारभ्य मानवानांबलि अवरुद्ध पशूनांच बलि समारब्धा। अष्ट बलि परम्परायां सत्यामपि महिषा अधिकतरं देवीप्रिया बभूव अनेकान् महिषानजांश्चात्र जनाः जघ्नुः। टिहरी राज्य महाराजो नरेन्द्रशाहस्तस्यपूर्वजाश्चापि प्रति आश्विनमासस्याष्टमीतिथौ चैत्रमासस्याष्टमीतिथौ चात्र महिषान् बलिरुपेण देव्यै समर्पयामासुः।

शताब्दीनामवधि एवमेव व्यतीता। परमेयं देवी सकलप्राणिजननी स्वकीयां सुतानां रक्तमांसभक्षणप्रिया भवितुं शक्नोतीति विचारयन्तोश्रीमन्तो विचारका एवं पशुबलि परम्परामत्ररुद्धां कर्तुं प्रयग्सानकुर्वन् १९६८ इशवीये श्रीमन्महापुरुस्य कर्मवीरस्य स्वामी मन्मथन महाभागस्य विद्वद्वर्य श्रीमतश्चक्रधरजोशी महोदयस्य अन्येषामपि श्री गोविन्दप्रसाद गैरोला, श्री राजेन्द्रसिंह, श्री इन्द्रदत्त रतूड़ी पं० श्रीजगन्नाथ पाण्डे प्रभृति महानुभावानां सत्प्रयासैः सदुपदेशैः सत्साहसैश्च पूर्वप्रचलिता निरवशेषतां नीतां शक्तेः सात्विकी पूजा च समारब्धा।

भुवनेश्वरी सिद्धपीठे शक्त्याः उपासना पूजा व सकलेष्वपि दिवसेषु सम्पाद्यन्ते। समये-समये भक्ताः जनाः स्वसुविधानुसारमत्र समागत्य देवी प्रति स्वभक्ति कुसुमानि समर्पयन्ति किन्तु आश्विनचैत्रमासयोर्नवरात्रिषु भक्ताः शक्तिरुपिण्याः भुवनेश्वर्याः

---

१. अतितुंगतमे स्थाने संस्थिता परमेश्वरीम्।
नमस्कारं प्रकुर्वन्ति न च तेषां पराभवः॥
अत्र पूर्वंमहारुद्रो रुरोद विरहातुरः।
देव्याः कलेवरोत्सर्गे स्मृत्वातन्मुख चन्द्रकम्॥
—केदार खं० १४१–४–५

यंत्रस्य दर्शनंपूजनं च विशेषेण कुर्वन्ति । अनयोः चैत्राश्विनमासयोः संख्यातीताः पूजनं जनांश्चात्र देव्युपासनां पूजां च कुर्वन्तो दृश्यन्ते ।

विशेषता अत्रत्या यत् हिन्दुभिः सह मुसलमान धर्मावलम्बिनोऽपि शक्तेः कुर्वन्ति । अस्मिन् सिद्धपीठे यादृशी भावना भक्तस्य भवति स तादृशी सिद्धिं निस्सन्देहं प्राप्यते[1] । अत्र श्रीफल-छत्र-फल-तण्डल-पुष्पादीन्युपहाराणि शक्तये विशेषण समर्प्यन्ते ।

अस्य सिद्धपीठस्य संरक्षणार्थं समुचितप्रबन्धाय च प्रबन्धकर्त्री एका समिति प्रतिवर्षं निर्वाचिता भवति परमधुना तु राज्यसरकारप्रबन्धवशेन मन्दिरस्य कार्यभारं स्वामी मन्मथन एव वहति । स एव स्व प्रबन्ध संचालको भूत्वा मन्दिरस्य चलाचल सम्पत्याः भक्तैरूपहृत धनस्य च व्यवस्थां करोति । राज्यसरकारस्याधिकारिणोऽपि समये-समये मन्दिरस्यायव्ययादि लेखानुदानस्य च निरीक्षणं कुर्वन्ति । उदार-चित्ताः धनाढ्याः जना अत्र समये-समये निर्माणादिकानि कार्याणि कारयित्वा देव्यै भक्ति-प्रदर्शनं सहकारिणं समागतेभ्यः जनेभ्यः विविधाः सुविधाः सम्पादयन्ति । ऋषिकेश-धनिकौ अमरलालसमीर कुमारावपि इदं मन्दिर समिति वृहद्धनमदाताम् तद्धनेन चात्र धर्मशालादीनां निर्माणं संजातम् ।

पुरा चन्द्रवदनी सिद्धपीठ यात्रा अति दुष्करा मार्गश्चाप्यतिकठिनमासीत् । परं स्वामिनः मन्मथनस्याथक प्रयासैः दुष्पथमपि पथमिदं सुपथं संजातम् । अधुनाऽत्र यात्रिभ्यः यानवाहनादीनां व्यवस्था सुलभा एव ।

प्राकृतिकसौन्दर्यस्यापि समृद्धिरत्र पर्यवेक्षते चन्द्रकूटपर्वते । अतः पर्यटका अत्रागत्य प्राकृतिक सुषमानन्दनिर्भराः भवेयुरिति प्रयासोऽपि विधीयते । इदंस्थानं

---

१. तदादीदं परं पीठं महादेवश्च संस्थितः ।
यदायत्र त्रिभिर्वर्णैस्तदत्र दिनरात्रितः ।।
सिध्यते नात्र सन्देहो मया शिवमुखाच्छ्रुतम् ।
त्रिरात्र यो महाभागं फलमूलकृतासनः ।।
निवसेच्च जपेद्देवीं साधयेत्सिद्धि मुत्तमाम् ।
यदत्र दीयते दानं तत्सर्वं कोटि संख्यकम् ।।
नास्मात्परतरं पीठं त्रैलोक्येमुनिवन्दित ।
दुर्भावं यः समाश्रित्य गच्छतोस्मिंस्थले शुभे ।।
स हन्यतेतरां विप्र वज्रपातैर्न संशयः ।
तस्मात्सर्वप्रयत्नेन न दुष्टं भावमाश्रयेत् ।।
देवीसूक्तेन यस्तत्र संस्तौति जगदीश्वरम् ।
सर्वान् कामानवाप्नोति प्रत्यब्रह्मणि लीयते ।।
इदं क्षेत्रं परं स्थानं सद्यः प्रत्ययः कारकम् ।
यद्दर्शनादपि नरो देवीलोके महीयते ।। के० १४१-१३१-३६

पर्यटकानां निवासस्थलं भवेत् इति मान्यतोपलब्धये क्षेत्रीयजनाः भारतसरकारं भूयोभूय विज्ञापयन्ति। मन्दिरस्याधोभागे 'नैरवरी'' इति नामको ग्रामो यदि पर्यटक केन्द्ररूपेण मान्यतां प्राप्नुयात् तथा क्षेत्रस्यास्य महती समृद्धिः भवेदिति।

## भुवनेश्वरी सिद्धपीठे

ये जनाः देवकृत भुवनेश्वरीस्तोत्रपाठं[1] कुर्वन्ति ते मनोवांछितफलं प्राप्नुवन्ति।

---

१. प्रकृत्यै ते नमस्तेऽस्तु भिन्नायै पुरुषोत्तमः।
सृष्टिकर्त्रे सृष्टिहर्त्रे देव्यै तस्यै नमोनमः॥
अनादिनिधनो देवो यया मोहं प्रवेशितः।
किमुत प्राकृता देव्यै नारायण्यै नमोनमः॥
येन सृष्टं जगत्सर्वं त्रैलोक्यं संनिधिर्यया।
विमोहितः प्राकृतवत्तस्यै देव्यै नमोनमः॥
यथा संसारवयवो मुग्धे प्राकृतवद्धरः।
निर्ममोऽपि परानन्दो देव्यै तस्यै नमोनमः॥
विष्णुर्यया महादेव्या संक्षिप्तो योनिसंकटे।
अनेकविषयासक्तस्तस्यै देव्यै नमोनमः॥
यया ब्रह्मा त्रिजगतां कर्ता वेदनिधिःपुरा।
आत्मजासक्त हृदयः कृतस्तस्यै नमोनमः॥
द्विजराजो ययौ देव्या मोहितो गुरुकामिनीम्।
अन्वगच्छति कामान्धस्तस्यै देव्यै नमोनमः॥
इन्द्रो यथा मोहितस्तु गौतमस्य प्रियां शुभाम्।
अधर्षयन्नगणयन्पापं तस्यै नमोनमः॥
यन्मोहितं जगत्सर्वं कुरुते कर्मदुष्कृतम्।
कुकृतं चापि सकलं तस्यै देव्यै नमोनमः॥
यया सम्मोहितो जंतुः पुत्रान् दारान् विर्भात हि।
जानन्नपिप्रतीकारं तस्यै देव्यै नमोनमः॥
यथा संमोहितो जंतुर्ममेत्यं च वदत्यहो।
गच्छन्नपि प्रेतभावं तस्यै देव्यै नमोनमः॥
यया संमोहितो प्राणि पुत्रदारधनादिकम्।
अनित्यमपि नित्यं हि मन्यते ते नमोनमः॥
मृतांश्च म्रियमाणांश्च मर्त्तुंनैव समुद्यतान्।
दृष्ट्वापि जीवितुं कांक्षंस्तस्यै देव्यै नमोनमः॥
अनित्यां धनसम्पत्ति दृष्ट्वापि च तथाविधाम्।
न खादति नवै दत्ते यया तस्यै नमोनमः॥ —के० १४१-१०-२३

## रमणा (भूतेश्वरो) सिद्धपीठम्

भागीरथ्यलकनन्दयोसंगमस्थलं रामतीर्थं देवप्रयागमितिनामधेयं स्थानं पुराणेषु प्रसिद्धम्[1]। प्राचीनकाले अत्र देवशर्मा ब्राह्मणस्तपस्यया परमांसिद्धिमवाप[2]। तदारभ्य स्थानमिदं देवप्रयागमितिनाम्नः प्रसिद्धमभवत्। आदिकाले स्थानमिदं दिवौकसां निवासस्थलमासीत्। देवप्रयाग शब्दोऽपि स्थानस्यास्योत्तमतीर्थस्य विशेषतां प्रकटयति[3]। अस्मिन्नेव स्थाने तपश्चर्यया विश्वमित्रो रार्जषिरपि ब्राह्मण पदभाग्भागी बभूव[4]। पावनस्थलेऽस्मिन् देवप्रयागे शक्तिसिद्धपीठंषसत्याः मृतशरीरस्य किंचिदंगपतनेन संजातमिति पुराणेषु प्रसिद्धिरस्ति, किन्तु रामणीयकेऽस्मिन्स्थाने शक्तिना सह शंकरोरमणं क्रियतेऽस्म इत्यनेनास्मिन्पीठे शक्तेः रमणेति नाम्ना प्रसिद्धिं संजाता इति किम्वदन्त्यपि लोके विख्याताऽभूत्। कालान्तरे इयं रमणा शक्तिः कन्दुमति भूतेश्वरी नामाभ्यामपि लोके प्रसिद्धा बभूव[5]।

---

१. गंगाद्वारात्पूर्वभागे श्रीगंगाऽलकनन्दयोः।
संगमो यत्र देशे तु देवप्रयाग संज्ञकः।
वदन्ति मुनयः सर्वे हरिभक्ति परायणाः॥ —के० १४९-२५

२. पुराकृतयुगे देवि बभूव मुनिसत्तमः।
देबशर्म्मेति विख्यात सहृतसज्जनवत्सलः॥
दयासत्यतपशीलो ज्ञानवान् धर्मसंयुतः।
देवप्रयागके तीर्थे तीर्थानामुत्तमोत्तमे॥
स चकार तपस्तीव्रं देवैरपि सुदुश्चरम्॥ —के० १५०-१८-१९

३. अयोध्या मथुरा काशी द्वारकाः सेतुबन्धकः।
कांची गया कुरुक्षेत्रं बदर्याश्रम एव च॥
गंगाद्वारं प्रयागश्च मायाक्षेत्रं तथैव च।
देवप्रयाग तीर्थंच तीर्थानां तीर्थमुत्तमम्॥ के० १४९-१८-१९
यैः कृतं पिण्डदानं हि तीर्थे देवप्रयागके।
पितृकार्यं मुनिश्रेष्ठ कर्तव्यं न हि विद्यते॥ के०

४. देवप्रयागं क्षेत्रं यत्ख्यातं च भुवनत्रये।
तत्र वै शिवतीर्थंतु गंगाया उत्तरे तटे॥
प्रातः स्नायी जिताहारो जितक्रोधो जितेन्द्रियः।
तस्मिन् तीर्थेऽपि शूद्रोऽपि ब्राह्मणत्वमवाप्नुयात्॥
विश्वामित्रोऽपि तत्रैव ब्राह्मणत्वमुपेयिवान्।
इन्द्राद्या लोकपालास्तु तत्तसिद्धि ययुः पुरा॥ के० ५३-४६·४८

५. रमणा रामतीर्थेतु। दे० भा० ७-३०-६५
भूतेश्वरी ब्रह्मधात्री। विद्यार्णवतंत्र ३-५-६
नाम्ना कंदुमती ख्याता सर्वपाप प्रणाशिनी॥ के० १४९-३

गढ़सभ्यतायाः केन्द्रभूते

पावनस्थलेऽस्मिन् देवप्रयागे[1] बहूनि धार्मिकस्थलानि तीर्थस्थलानि[2] मन्दिरादीनि सन्ति। रमणा सिद्धपीठं, रघुनाथमन्दिरम्, आदिविश्वेश्वरं, तारंकेश्वरमन्दिरं, धनेश्वरमन्दिरं, विल्वेश्वरमन्दिरं तुण्डेश्वरमन्दिरं, रामकुण्डं, ब्रह्मकुण्ढं, वेतालकुण्डं, वैतालिकीशिला, वाराहीशिला, पौष्पमाल्यतीर्थं, वशिष्यतीर्थं, श्रृङ्गतीर्थं विल्वतीर्थे-मित्येवमादीनि पावनस्थलानि प्रसिद्धानि प्रतिष्ठितानि च सन्ति। दशरथ पर्वतादुद्भूय शान्तानाम्नी नद्यप्यत्रैव भागीरथ्यामात्मानं विलीना करोति[3]। अलकनन्दायाः सम्भूय भागीरथ्यत्र गंगेति नाम्ना ज्ञायते। एतस्य देवप्रयाग नाम्नः स्थानस्य त्रिषु कोणेषु-नृसिंहाचल-गृधाचल-दशरथाचलाख्यानि सन्ति पर्वतानि। देवप्रयाग क्षेत्रेऽस्मिन् उद्भटाः विद्वांसः प्राचीनकालादेव निवसन्ति। अधुना तु सुप्रसिद्ध नक्षत्रवेधशालाभवनं निर्माणाधीनं महाविद्यालयं प्राच्यविद्या संस्थानंचापि स्थानस्यास्य गौरवं वर्द्धयति। नक्षत्रवेधशालाभवनमत्र समुद्रतटात् २१२३ फीटावधितुंगता धारयति। पुरा त्रेतायुगे राक्षसेन्द्रेण विश्रवासुतेन रावणेनापहृतायाः सीतायाः प्राप्तिकामनायाः मर्यादापुरुषोत्तमः राम आश्विनमासस्यामलपक्षस्य प्रतिपदायाः समारभ्य नवमीतिथि पर्यन्तं देवप्रयागे स्थिते रमणा सीद्धपीठे शक्तेः रमणायाः प्रतिष्ठां उपासनां च कृतवान्। शक्तेः प्रभावा-द्दशम्यां तिथौ विजित्यलंकां स रामः सीतां समुपलम्य रावण कुम्भकर्णं च नाशितवान्। तस्मिनेवाबसरे आश्विनमासस्य शुक्लपक्षस्य दशमीतिथि विजयादशमी इति नाम्ना प्रसिद्धाऽभूदिति लोके प्रसिद्धिः कालान्तरे भगवान् रामचन्द्रः देवप्रयागस्य यात्रां कृत्वा अस्य पावनतां च विलोक्य निवासाय स्थानमेतदेव पर्यचिनोत्[4] ?

---

१. परोपकरणे जातं यदीयं मानसं शिवे।
देवप्रयागसंज्ञस्य देवस्य वरर्णिनी॥
दर्शनात्स्मरणाद्ध्यानत्तथानामप्रकीर्तितम्।
पापानि प्रशमं यान्ति नराणां पापकर्म्मणाम्॥
अपि पापैः समायुक्तो ब्रह्महत्यामुखैः किल।
तत्क्षेत्रं तु नरः स्पृष्ट्वा सद्यः शुद्धिमवाप्नुयात्॥ के० १५०-१३-१५

२. तीर्थानां तु त्रयस्त्रिंशत्कोटिस्त्रयस्थिति बुधैः। १५०-६१

३. ततो लोकेषु विख्याता शान्तानाम्नी नदी शुभा।
भविष्यति महापुण्या स्वर्गमोक्ष प्रदायिनी॥ के० १५३-६६

४. गंडकी बाहुतरणाद्धर्मस्खलति कीर्तिमान्।
गत्वा देवप्रयागं चालकनन्दातटेनवै॥ आनन्द रामायण ६१४
इत्युक्त्वा भगवान् रामस्तस्थौ देवप्रयागके।
लक्ष्मणेन सह भ्राता सीतया सह पार्वति॥

रमणा सिद्धपीठे स्थितं शक्तिमन्दिरमतिप्राचीनं वर्तते। प्राक्सृष्टमिदं मन्दिरं हिन्दूमन्दिर निमार्णशैलीमभिविनक्ति। मन्दिरमिदं शोभनैः पाषाणखण्डैः सुश्लिष्टितं विद्यते। दैर्ध्येणेदं पंचदशफीटमितां वर्गाकारतां विंशतिफीटमितां चोच्छ्रायतां दधाति शिखरप्रान्तेऽस्यैका रक्तवस्त्रनिर्मिता पताका विलसति। काष्टखण्डेन निर्मितमेकमेव-द्वारमस्ति शक्तिभवनस्यान्तः गृहे प्रवेशाय निर्गमनाय च। शक्तिदर्शनाय समागतैः भक्तैःयस्मिन् कस्मिन् समयेऽपि शक्तिमन्दिहस्यान्तर्गृहे प्रवेष्टुं शक्यते।

दक्षिणदिग्वर्तिना द्वारेण मन्दिरस्य गृर्भगृहे प्रविश्य पश्चिम भित्तिकायां पाषाण-खण्डनिर्मितवेदिकायां प्रतिष्ठित रमणादेव्याः दर्शनं भवति। इयं देवी प्रसन्नवदनाऽष्ट-भुजासमायुक्ता सिंहाधिरूढ़ा रक्तवस्त्रपरिवेष्टिता दैर्ध्येण च त्रयः फीटपरिमिता वर्तते। शिरो मुकुटेन सुशोभते अस्याः मूर्त्याः सर्वाः भुजाश्चास्याः शंखचक्रगदापद्म इत्यादि-भिरायुधैः समलंकृताः सन्ति। रमणा मन्दिरेस्मिन् शिवशक्त्यात्मकमेकं पाषाण-लिंगमपिविद्यते। मन्दिरास्यस्य पूर्वस्यांदिशि एकस्मिन् मन्दिरे कालभैरवस्य मूर्तिः प्रतिष्ठति। सर्वेषामापत्तीनां निवारणार्थंजनाः मूर्तेरस्याः दर्शनं कुर्वन्ति ते च धूपाक्षत-सिन्दूरादि द्रव्यैः भैरवस्य पूंजनमपि कुर्वन्ति।

चिरकालादेवास्मिन्पीठे पशुबलिप्रथा प्रचलितासीत्, किन्तु किंचित्समय पूर्वमेव श्रीमता विद्वद्वयर्येण ज्योतिश्शास्त्रचक्षुश्चक्रधर जोशी महाभागेन पूर्वप्रचलिता बलिप्रथा निरवशेषतांनीता। तेनैव ज्ञानेन्द्रेण सोपदेशेन महताप्रयासेन च रमणाशक्तेः सात्विकी पूजा समारब्धा।

अधुना तु न केऽपि अस्य मन्दिरस्य संरक्षकाः न च दैनिकीपूजा व्यवस्थाऽस्मिन् मन्दिरे। ये भक्तजनाः देव्याः दर्शनार्थमत्रागच्छन्ति ते शक्तेः पूजा व्यवस्थामपि स्वयमेव कुर्वन्ति। रमणानामकमिदं सिद्धपीठं धार्मिकाणां क्षेत्रीय जनानां च श्रद्धा-विश्वसयोर्केन्द्रमस्ति, इत्यस्मिन् विषये कोऽपि सन्देहो नास्ति। अतः पीठेऽस्मिन् दैनिकी पूजा समारम्भणार्थं सम्यक् कार्यसंचालनार्थंचात्र एकस्या प्रबन्धसमितेः महत्यावश्यकता वर्तते।

---

ततः सुरगणाः सर्वे अवतीर्णास्तु तत्र वै।
केचिद्वै मृगरूपेण कपिरूपेण केचन॥
सेवितुं वै दाशरथिं ससीतं हिमवत्सुते।
गंगायाः उत्तरे भागे दृश्यते यो महागिरी॥
तत्र राजा दशरथो नित्यं रामपरायणः।
आयाति मृगयाव्याजाद्दर्शनाय रमापतेः॥
तेनैवं तद्गिरेर्नाम दशरथांग इति स्मृतम्।
यो वे निष्कल्मषः शुद्धो निरीहो रामतत्परः॥
सवै पश्यति राजानं दशरथं सुमनोहरम्॥

रमणा सिद्धपीठेऽस्मिन् वर्षस्य सर्वासु नवरात्रिषु संख्यातीता जनाः समागच्छन्ति, ते च शक्तेः दर्शनं पूजनं स्तवपाठं, यज्ञं च कुर्वन्ति। विषुवत्संक्रान्त्यां, दीपावल्यां मकरसंक्रान्त्यां वसन्तपंचम्यामेतादृशेषु अन्येषु पर्वदिनेष्वपि धार्मिकाः जनाः भक्तिभावनया रमणामूर्तेः दर्शनं पूजनं च विदधति। इयं रमणादेवी स्वभक्तानां सर्वान्मनोरथान् पूरयति। देवी प्रसादाच्च शाक्ताः निःसन्देहं सकलानभीष्टानाप्नुवन्ति।

जनैश्चात्र न केवलं देवप्रयागमिति धार्मिकस्थानस्य तीर्थयात्रायाः लौकिकं सुखलभ्यते अपितु पारलौकिकं सुखमपि प्राप्यते। ये जनाः च भागीरथ्यलकनन्दयोसंगति देशकालौ संकीर्त्य गंगांनमस्कृत्य विष्णोःस्मृत्य भस्मना मृतिकया च स्नान्ति[१], ते स्वात्मानं पवित्रयन्ति। स्वाभीष्ट प्राप्तये शिवपूजनस्य क्षेत्रपाल पूजनस्य च महत्वमप्यत्र दरीदृश्यते[२]। अस्मिन् रामतीर्थे[३] सन्ध्यादिकया क्रियया पितृक्रियया भूमि, गो, हिरण्य रत्नदानैश्च जना इहलोके सुखं भुक्त्वा अन्ते विष्णुलोकं गच्छन्ति।

---

१. प्रथमं भस्मना स्नानं कर्तव्यं मुनिपुगंव।
सद्यादि ब्रह्ममंत्रैश्च भस्मनो ग्रहणं भवेत्॥
अभिमंत्र्याग्निररिति वै भस्येत्युद्धरणं भवेत्।
मानस्तोकेति मंत्रेण लेपनं त्रयम्बकेन वै॥
एवं यः स्नाति मर्त्यो हि भस्मना मुनिवंदित।
तत्क्षणातस्य नश्यन्ति पापानि निखिलानि च॥
मृदा स्नानं ततः कुर्य्यान्मत्रैरेभिस्तु नारद।
येषामुच्चारणादेव मुच्यते सर्वपातकैः॥
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे।
शिरसा धारयिष्यामि रक्षत्वं मां पदे-पदे॥ के० १६३-२१-२५
इति वै मृतिका स्नानं कृत्वा गंगा तु प्रार्थयेत्।
पृथिव्यां यानि तीर्थानि तानि ते सन्ति जह्नुजे॥ के० १६३-३०
विना वै भवतीं मातर्नान्यो मे गतिकारकः।
नमस्ते देवदेवेशि पतितं मां समुद्धरः॥
इत्युच्चार्य नरोभक्त्या गंगाया प्रविशेत्ततः।
२. भैरवं प्रार्थयेदेभिर्यत्रवय्यैस्तु नारदः॥
सागर स्वननिर्घोष दण्डहस्तासुरान्तक।
जगत्स्नसृर्जगन्मर्दिन्नमामि त्वां सुरेश्वरम्॥
तीक्ष्णद्रष्टं महाकाय कल्पातं दहनोपम।
भैरवाय नमस्तुभ्यमुनुज्ञां दातुमर्हति॥ के० १६३-३२-३५
विश्वेश्वरं शिवं गच्छे तमस्य शिवपूजनम्।
कृत्वा शैवेन मंत्रेण सड्वर्गेण मुनीश्वर॥

एकं विशालमत्ति प्राचीनं रघुनाथ मन्दिरमत्र वर्तते। रघुनाथमन्दिरेऽत्र दैनिकी पूजा भवति। वर्षस्य सर्वेषु पर्वदिवसेषु रामचन्द्रस्य पूजनं यथाविधि अत्र सम्पाद्यते। दीपावल्या अवसरे रामतीर्थेऽस्मिन् रामायणपाठस्यायोजनं भवति। आयोजनेऽस्मिन् बहवो धार्मिकाः सत्पुरुषाश्च सम्मिलिता भवन्ति। रामचन्द्रस्य सम्यक् पूजनेन[1] ब्राह्मणानन्नप्रदानेन चात्र मनुष्याः मुक्तिं भुक्तिं च प्राप्नुवन्ति।

## विकृताख्या (चमराड़ादेवी) सिद्धपीठम्।

विकृताख्या इति नामधेयस्य शक्तिसिद्धपीठस्य मन्दिरं केदारखण्डस्थित टिहरी जनपदे अस्ति। इदं च गर्दभासुरनामधेयस्य पर्वतस्योत्तुंगशिखरमधितिष्ठति। पर्वतश्चायमनुमानतश्चतुःसहस्रफीटावधि तुंगतां धारयति। एतत्स्थानं परितः महान्त्यरण्यानि सन्ति। शीताधिक्या एका महती विशेषताऽस्या स्थानस्य। इयं विकृताख्या शक्तिः कालिका, चामुण्डा, चमराड़ादेवी नामभ्यश्चापि लोके प्रसिद्धा।[2]

अस्य सिद्धपीठस्य प्राच्यां दिशि हिमाच्छिादितधवलशैलाः दृश्यन्ते, प्रतीच्यां-समतल भूमिः, दक्षिणस्यां शैलानामुच्चशिखराणि, उदीच्यां च सुरम्याः वनपंक्तयः सुशोभन्ते। परितः उपत्यकावर्तिषु ग्रामेषु तापसा इव जनाः उटजसदृशभवनेषु च

---

धूपदीपादिकं दत्वा स्तुत्वा नत्वा च भक्तितः।
ततः श्रीरामचन्द्रस्य दर्शनाय ब्रजेन्सुधीः॥

१. स्नात्वा गच्छेत्तस्तीरे कृत्वा सन्ध्यादिका क्रियाः।
पितृक्रियाश्च कृत्वा वै ब्राह्मणां स्तोषकेतदा॥
भूमिदौ राज्यमाप्नोति हयको वाहनानि च।
धेनुदश्च महाभाग परमां गतिमाप्नुयात्॥
अन्नदाने न दारिद्रयं रत्नदौ गतिमुत्तमाम्।
हिरण्यदः सुवेशं हि सुंदरं देहमेव च॥ में० १६३-३८-४०

२. अनेन विधिना यस्तु प्रकरोति प्रदर्शनं।
श्रीरामस्य दयासिन्धोर्यात्रां चैव तथा मुने॥
स वै विष्णुः प्रजायेत श्रीरामस्य प्रसादतः।
इह भोगान्परान्प्राप्य विष्णुना सह मोदते॥ के० १६३-६७-६९
भोजनं तीर्थवासिभ्यः सुस्निग्धं प्रीतिपूर्वकम्।
दद्याद्वै विष्णुप्रीत्यर्थं रामभक्ति परायणः॥
संतुष्टा यस्य विप्रेन्द्रा देवक्षेत्र निवासिनः।
सफलं तु कृतं तस्य विपरीते तु निष्फलम्॥ के० १६३-६५-६६
भो भो द्विजवरश्रेष्टा नैमिषारण्य वासिनः।
एष वः कथितः सर्वे देवतीर्थस्य विस्तरः।
मुक्तिमुक्तिप्रदः श्रीदः पुत्रपौत्र तथैव च॥ के० १६३-७०

सुकुटुम्बेनसहनिवसन्ति। पशुपालनेन कृषिकर्मणा वा ते जीविकोपार्जनं कुर्वन्ति। सिद्धपीठं समीप एव वागीश्वरं शिवलिंगमस्ति।[१] अस्मिन् स्थाने तपः साधनां कृत्वा देवगुरुणा बृहस्पतिना वागीशत्वसिद्धिः सम्प्राप्ता[२] वागीश्वरलिंगस्य दर्शनेन पूजनेन च धनधान्यपुत्रादि सम्पत्तयः समुपलभ्यन्ते जनैः।[३] तत्रैव त्रिभुवनपावनीगंगा प्रवहति यमुनाया एका परमपावनी धारा अप्यत्र गंगाया विलीना भवति[४]—

चामरान्दोलनी धारा, नाक्षत्रीनदी[५] चामेश्वरं शिवलिंगं[६] क्षेत्रस्यास्य पावनतां वर्धयति। बदरीनाथ यातायातमार्गोऽपि चात्रैवास्ति।

सिद्धपीठादस्मात् चन्द्रवदनीसिद्धपीठं, रममण्डनासिद्धपीठं, वागीश्वरलिंगं

---

१. अथान्यच्च प्रवक्ष्यामि तस्य वै पश्चिमोत्तरे।
नाम्ना वागीश्वरः ख्यातः सर्वसिद्धिप्रदायकः॥
यस्य दर्शनमात्रेण ब्रह्महत्यादि कोटयः।
नश्यन्ते नात्र सन्देहो सत्यं च शिवभाषितम्॥ के० १४३-६-२

२. पुरा यत्र महादेवोंगिरापुत्रेण नारद।
संस्तुतो भगवान्देवो विद्यापारगकामतः॥
शातं साग्रं तपस्तेपे जिताहारो जितेन्द्रियः।
ततः कतिपयैर्वर्षैस्तपस्तोंगिरसो मुने॥
प्रसन्नो भगवान्रुद्रा वागीशत्वं ददौ मुने।
स्वयं चैवात्र संतस्थौ वागीशत्वभिधानकः॥ के० १४३-३-५

३. तस्य वै दर्शनाद्याति शिवलोकं न संशयः।
पुनः पृथिव्यां विप्रेशो जायते सर्वशास्त्रगः॥
पुत्रपौत्र समायुक्तो धनधान्यनिधिस्तथा।
भवति शिवसादृश्यं लशते मात्र संशयः॥ के० १४३-६-७

४. इदं परमकं स्थानं न वदेद्यस्य कस्यचित्।
अत्र गंगा च यमुना द्वे धारे सिद्धिदायके॥
सानिध्यं सेवितु शम्भोरागते सर्व भावतः।
तत्र चिन्हं प्रवक्ष्यामि येन ते प्रत्ययो भवेत्॥
तदा गंगा च यमुना कलेषे स्तः शिवप्रदे।
तादिमेऽपि शुभे धारे स्यातां कलुषके मुने॥
तयो स्नानान्तरो याति गंगायमुनयोः फलम्।
तयोर्वै दर्शनादेव सर्वपापैः प्रमुच्यते॥ के० १७३-८-११

५. ततः पश्चिमदिशि च नदी परमपावनी।
नाक्षत्री तु समाख्याता सर्वपापविशोधिनी॥ —के० १४३-१२

६. ततश्चोत्तरदिग्भागे चामरेश्वर संज्ञितः।
चामरान्दोलिनीधारा तत्र पापप्रणाशिनी॥ —के० १४३-१४

पौड़ी जनपदस्थित गुह्येश्वरीसिद्धपीठं, नागराजामन्दिरम् इति बहूनां शाक्त शैव-वैष्णव मन्दिराणां दर्शनं भवति।

इदं सिद्धपीठमादिकालादेव प्रतिष्ठितम्। पुरा कदाचिच्छंकरेण सहगामिनी-शक्ति कालिकारूपं धारयित्वा अस्मिन् शैले गर्दभासुरनामकं दैत्यराजं जघान। तदारभ्य अयं पर्वतः गर्दभासुराचल नाम्ना प्रथितो बभूव शक्तिश्च विकृताख्या इति प्रसिद्धा।[1] अद्यापि अस्मिन् स्थाने नवरात्रपर्वषु रात्रिषु देवी विशिष्टं ध्वनिं प्रसारयतीति सर्वत्र लोकप्रसिद्धिः।

अस्मिन् सिद्धपीठे त्रीणि पाषाणलिंगानि सन्ति।[2] तेष्वेकं नातिबृहद् प्राकृतिकं पाषाणलिंगं विद्वद्भिः कालिकाशक्तिरूपेण पूज्यते। अन्ये च लघ्वाकारिके पाषाणलिंगे महालक्ष्मी महासरस्वती चेति कल्प्येते। महती महिमा गीयते तत्र त्रयाणामेतेसां लिंगानां विशेषतस्तु कालिका लिंगस्य। लोक किम्बदन्ती च प्रसिद्धाय देतयोः लघ्वाकारयोर्द्वयोर्लिगयोर्मध्ये एकतमलिंगं त्रिमासं यावत् अस्मिन् सिद्धपीठे स्थित्वा पुनरपरान् अन्यत्राधितिष्ठति। पुनश्च व्यतीतायां त्रिमासावध्यां निवर्तते तदस्मिन्नेव सिद्धपीठे।

न ज्ञायते कदा अस्य सिद्धपीठभवनस्य रचना सञ्जाता। न च कानिचित् पुष्ट प्रमाणानि समुलभ्यन्ते परं पुराकदाचिदज्ञातसमये निर्मितमासीदिदं सिद्धपीठभवनं पाषाणखण्डैः सुश्लिष्ठैः। अधुना तु किंचित् समय पूर्वमेव मन्दिरसमितिः नवीन मन्दिरं परिणिनाय। नूतनमिदं मन्दिरमधुना दैर्ध्येण द्वादशफीटमितां वर्गाकारतां दशफीटमितां चोच्छ्रायतां दधाति। अस्मिन् द्वे चातिथिशाले अपि स्तः।

विकृताख्यादेवी सिद्धपीठे शक्त्युपासना पूजा च भक्तैः वर्षस्य सकलेष्वपि दिवसेषु सम्पाद्यते किन्तु आश्विनचैत्रमासयोर्नवरात्रिषु शुक्लपक्षस्याः प्रतिपादाया आरभ्य नवमीतिथि पर्यन्तं विशेषैश्वर्यादि फलाभिकांक्षिणः भक्ताः देव्याः शक्तिरूपिण्याः दर्शनं पूजनं च विशेषेण कुर्वन्ति। अनयोर्मासयोः संख्यातीताः जनाः देवी उपासनां पूजां च कुर्वन्तो दृश्यन्ते। वैशाखमासस्य दिग्प्रविष्ठायां तिथौ अस्मिन् सिद्धपीठे एकस्य विशालमेलापकस्य आयोजनं भवति। अस्मिन् मेलापके बहवो जनाः वीणानि साणमृदांगादिभिः वाद्यैः सह संगीताराधनां कुर्वन्तो अत्रागत्य देव्याः दर्शनं पूजनं च कुर्वन्ति। अस्तमिते च भगवतिभास्करे ते भक्ताः स्वगृहं निवर्तन्ते। अस्मिन् पीठे शक्तिदेव्याः विशेषपूजनं पशुबलि प्रदानेन क्रियतेस्म अतिप्राचीनकालादेव। वर्तमान-

---

१. उत्तरे च ततः शैले गर्दभासुरसंज्ञिते।
तस्य गर्दनामा वै निहतो दानवो मुने॥
तस्यदेहो य माख्यातो गर्दभासुरसंज्ञितः।
तन्मूध्नि कालिका देवी गर्दभोद्खर नादिनी॥ —के० १४३-१६-१७
चिबुके काचरो देवो विकृताख्यां जलस्थले॥ का० पु० १९

२. शिवस्यैव परामूर्ति ब्रह्मविष्ण्वीश्वरात्मिका।
सर्वभूतात्मभूताख्या त्रिलिंगा लिंगरूपिणी॥ —शि० पु० ५-४-९

कालेऽपि बलिप्रथायाः महत्वंवर्तते । शाक्तमतावलम्बिनः पूजासंविधानकैः पूजनं कृत्वा कालीचक्रं निर्माय अनेकान् महिषानजांश्च घ्नन्ति । शाक्तपूजापद्धतिसख्या शक्त्या सह चण्डभैरवस्य पूजनमपि अनिवार्यतया विधीयते अतः चण्डभैरवः शक्तिसिद्धपीठस्य निकटे एव विहित । तच्च ग्रामः चौण्ड इति नाम्ना प्रसिद्ध अद्यापि वर्तते । तत्र चण्डभैरव पूजनं जनानां मनोकामनाः सफलयति इति लोकमान्यता ।

अस्मिन् सिद्धपीठे दैनिकीपूजा न केनापि पुजारिणा क्रियते । शक्तेः पूजनार्थं समागताः भक्तजनाः स्वयमेव तादृशीं व्यवस्था विदधति यथा तेषां पूजनं शास्त्रोक्त विधिना सम्पाद्यत । मनोरथाः मे सफलीभवन्तु इति भावनया जनाः मन्दिरे दुर्गापाठ होम, यज्ञ, बलिदान इमानि कर्माणि कुर्वन्ति । इयं मे इष्टदेवी इति मत्वा भक्ताः पूजनं कुर्वन्ति स्वाभीष्ट फलं च प्राप्नुवन्ति ।[1]

अस्य सिद्धपीठस्य संरक्षणार्थं क्षेत्रीयजनैः एकासमिति निर्वाचिता । सा चाधोलिखित कार्याणां व्यवस्थां विधत्ते ।

(क) नवरात्रिषु उत्सवदिनेषु च दातृणां दानधनस्य व्यवस्था ।

(ख) यात्रिणां निवासाय धर्मशालादीनां निर्माण, भवनानांच संरक्षा ।

(ग) जलस्य व्यवस्था ।

(घ) विशिष्ट मेलापक दिवेसेषु पूजन सामग्रीणां व्यवस्था ।

औषधि निर्माण योग्यरनेकाः सन्ति वनस्पतयोऽस्मिन् गर्दभासुररपर्वतखण्डे चमराड़ादेवी सिद्धपीठे । प्राकृतिकी सुषमया विराजतेऽयं भूमागः स्वसौन्दर्येण जनानां चेतांसि रञ्जयति । चमराड़ादेवी सिद्धपीठं निकषैव स्थितेषु पर्वतखण्डेसु वृहद् खनिजसम्पदस्तीति क्षेत्रीय जनाः कथयन्ति। किञ्चित्काल पूर्वमेवं अत्रत्या जनाः एभ्यः पर्वतखण्डेभ्यः लोहादयोधातवो प्राप्नुवन् । भूभागोऽयंमेभिर्विशेषणैः सर्वेक्षणयोग्य प्रतीयते अत्र स्थितेभ्यः पर्वतखण्देभ्यः खनिज-सामग्रीमौषधिनिर्माणयोग्य सामग्रीं चोपलब्धये—चमराड़ादेवी सिद्धपीठे एक पर्यटक केन्द्रस्यादित्यपि आवश्यकता अत्र दरीदृश्यते ।

यद्यप्यस्मिन् क्षेत्रे बहूनि सन्ति स्थानीय अखिलभारतीय देवीदेवतानां मन्दिराणि किन्त्वधुनाचौण्डग्रामस्थितं चामुण्डामन्दिरं चण्डभैरवमन्दिरं च प्रति जनानामास्था दरीदृश्यते चामुण्डामन्दिरस्य नवनिर्माणभारं चौण्डग्राम निवासिना प्रभुदयालेन स्वीकृतो वर्तते । चैत्राश्विनमासयोर्नवरात्रपर्वसु स्थानीया जनाः चामुण्डामन्दिरे चण्डभैरवमन्दिरे च दुर्गासप्तशतीपाठ-देवीभागवतपाठ भैरवस्तोत्रपाठादीनामायोजनं कुर्वन्ति । अस्मिन् क्षेत्रे सर्वे जनाः शाक्तपरम्परायारनुपोसका एवावलोक्यन्ते । चौण्डग्रामे पाण्डेयजात्युद्भवाः ब्राह्मणाः निवसन्ति । ते समस्त भरपूर क्षेत्रस्य पौरोहित्यकर्ममपि कुर्वन्ति । एषां ब्राह्मणानां सदुपदेशेन क्षेत्रीय जनानाँ धार्मिकी संस्कृति

---

१. सा वै दूरा प्रपूज्या वै गन्धपुष्पाक्षतादिभिः ।
धनधान्यादि बृद्धि स्यात्तस्य वै सफलाकृषि ।। —के० १४३-१८

पालनीया वरीवृत्यते। अस्मिन् ग्रामे पूर्वकालादेव ज्यौतिषका कर्मकाण्ड परायणाः तान्त्रिकाश्चजनाः निवसन्ति। चमराड़ादेवी सिद्धपीठस्य सुरंक्षणार्थमप्येते ब्राह्मणाः प्रयत्नशीला सन्ति पीठेऽस्मिन् महिषबलिप्रथोन्मूलनाय ब्राह्मणानामेतेषां दृढ़ो संकल्पो दरीदृश्यते। क्षेत्रीय जनानां प्रयत्नैः चमराड़ादेवी सिद्धपीठस्य विकासं सम्यग् रूपेण शीघ्रमेव भवितुमर्हतीति मन्यामहे।

अस्मिन् सिद्धपीठे जनानां भव्याभावना दृश्यते। अत्रत्या जनाः धार्मिक-सामाजिक-राजनीतिक-आध्यात्मिक क्षेत्रेषु विजय प्राप्त्यर्थे इमदेवीं एव फलदात्री मन्यन्ते। कालारात्र्यां तिथौ सिद्धपीठे यः जनः नवार्णव 'ओं ऐं ह्रीं क्लीं चामुण्डाय्यै-विच्चे।' मंत्रं अष्टाधिकशतसंख्यकान्यपि जपति सः राज्ये निश्चितमेव विजयं प्राप्नोति।

## रणमण्डना (पावकी देवी) सिद्धपीठम्

रणमण्डनेति शक्तिसिद्धपीठं केदारखण्डस्थित टिहरी जनपदे दोगी क्षेत्रान्तर्गत पावकीदेवी नामके स्थले चास्ति।[1] अस्मिन् सिद्धपीठे शक्तिमन्दिरं ऋषिकेश देवप्रयाग-यातायात-मार्गान्तराले गूलरगाढ इति स्थानाद् पंचक्रोशादूर्ध्वभागे शैलशिखरे अति प्राचीन कालादेव प्रतिष्ठितम्। शैलश्चायं समुद्रतटादनुमातश्चतुः सहस्र फीटावधि तुंगतां धारयति। परितः मन्दिरमिदं केवलमेव अरण्यानां शोभा दरीदृश्यते। पावकीदेवी नामके स्थले रणमण्डनायाः प्रतिष्ठा विषये किम्वदन्तीयं प्रचलिता-रणमण्डनाऽभिधेयं सिद्धपीठं सतेः मृतशरीरस्य किंचिद्भग पतनेन संजातम्।

अस्मिन् सिद्धपीठे निवसन्ति शक्तिदेवी देवासुरसंग्रामे अनेकान् दैत्यान् जघान तस्माद् कालादेव शक्तिरणमण्डनेति नाम्ना विख्याता बभूव। यांत्रिक यानानां मार्गाणां चाभावे पुरा भक्तजनाः तीर्थयात्रिणः ऋषिकेशात् रणमण्डनापीठं गत्वा देवी-दर्शनं कृत्वा शक्तेः पादोदकं पीत्वा च देवप्रयागं गच्छन्ति स्म। अधुना तु शक्तेः दर्शनकांक्षिणः जना एव अत्रागच्छन्ति च।

अस्मिन् सिद्धपीठे एकं नातिबृहद् प्राकृतिकं पाषाणलिंगमस्ति। कृष्णवर्ण-मिदंलिंग क्षेत्रीयैः जनैः पावकीकाली पादुका इति नामाभ्यापि कथ्येते। इयं देवी रणमण्डना कालीक्षेत्रेऽपि विद्यते क्षेत्रीयजनाः त्वेदंसिद्धपीठं न्यायालयः मन्यन्ते। पारस्परिक विवादानां निर्णयाय सत्यस्यानृतस्य परीक्षणार्थं जनाः रणमण्डनामन्दिरं गच्छन्ति उभयपक्षीया एव सत्यस्य रक्षणार्थमसत्य च विनाशार्थं शक्तेरग्रतः प्रार्थनां कुर्वन्ति। शक्तेः प्रभावात् स्वल्पावधौ सत्यस्य सज्जनस्य कल्याण जायते असत्या-सज्जनस्य च हानिर्भवति इयं लोकमान्यता जनानां हृदयेषु सर्वत्रैवात्र दृश्यते।

बहुकालपूर्वमेवास्मिन्पीठे मन्दिरस्य रचना संजाता। किन्तु किंचित्कालपूर्व-मेवास्य प्राचीन मन्दिरस्य भक्तैर्धार्मिकजनैः दातृभिश्च जीर्णोद्वारः कृतः। इदानीमिदं

---

१. ततो देव्याः पूर्वभागे गिरौ गव्यूति मात्रके।
आस्ते तत्र महादेवी नाम्ना तु रणमण्डना॥ —के० ८९-४०

मन्दिरं षोडशफीटमितां वर्गाकारतां अष्ठादशफीटमितां चोच्छ्रायतां दधाति। कृष्णवर्ण शक्तेः लिंगस्य समीपे अत्र त्रिशूलमशलपरिधानि विविधान्यायुधान्यपि सन्ति।

रणमण्डना सिद्धपीठे शक्तिपूजा भक्तैश्शक्तैः वर्षस्य सकलेष्वपि नवरात्रिषु सम्पाद्यते, किन्तु पौषमासस्य नवरात्रिषु शुक्लपक्षस्य प्रतिपदाया आरभ्य नवमी तिथि पर्यन्तं संख्यातीताः जनाः देव्युपासनां पूजां च कुर्वन्तो दृश्यन्ते।

अतिप्राचीनकालादेवास्मिन्पीठे शक्तेः पूजनं पशुबलि प्रदानेन क्रियन्ते स्म। वर्तमानकालेऽपि वलिप्रथायाः महत्वमत्र बर्तते। शक्तमतावलाम्बिन, भक्ताः शक्तेः विविधोपचारैः पूजनं कृत्वा कालीचक्रंनिर्माय पौषमासस्य शुक्लपक्षस्याष्टमीतिथौ अनेकान् महिषानजांश्च घ्नति। कौलमतावलम्बिनः शाक्ताः विशेषतः अत्रागत्य शक्तेः पूजनं कृत्वा स्वेष्टं फलं प्राप्नुवन्ति।

चैत्राश्विनमासयोर्नवरात्रपर्वषु संख्यातीताः श्रद्धालु पुरुषाः स्त्रियश्च सपरिवारेण मित्रगणैश्च सह अत्रागत्य शक्तेदर्शनं पूजनं च कुर्वन्ति। शक्तेर्विशेषपूजां भक्तजनाः रात्रावेव सम्पादयन्ति। विशेषपूजेयं सात्विकी राजसी तामसी च भवति। पौषमासस्य नवरात्र पर्वषु चात्र देवीयज्ञमपि समायोजितं भवति। यज्ञस्यायोजनं भक्तजना एव कुर्वन्ति। यज्ञेऽस्मिन् विद्वांसः दुर्गासप्तशतीपाठं देवीभागवतपाठं-होमाभिषेकं च विदधति। शुभावसरेऽस्मिन् संख्यातीता जनाः अत्रागत्य देव्याश्चरित्रं श्रृष्वन्ति समुदिता भूत्वा च ते रणमण्डनादेव्याः पूजनमभिषेकं देव्यापराध क्षमापनस्तोत्रपाठं च कुर्वन्ति। पूजनानेन ते देवीभक्ता स्वात्मानं कृतकृत्यं मन्यन्ते।

प्राचीनकालदेवास्मिन् पीठे लिंगपूजन पीठपूजनास्य चापेक्षा यन्त्रपूजनस्य महत् प्रचार आसीत्। किन्त्वधुना शक्तेर्लिंगपूजा पीठपूजा च सम्यग् विधिना सम्पाद्यते जनैः। सम्प्रतित्वत्र यत्र पूजनस्य च स्वल्पैव महत्वं दृश्यते। जनानां श्रद्धाविश्वासयो केंन्द्रभूतमिदं सिद्धपीठं भक्तैः कृते यात्राकालात् पूजनकालाच्च स्वल्पावधौ एव तेषां सकलान्यभीष्टानि साधयति। भक्ताश्चात्र यं यं चिन्तयते तं तं निश्चितमेब प्राप्नुवन्ति।[1]

---

१. यत्रगत्वा नरोयाति देवीलोके मनामयम्।
शरद्वसंतयोः काले बलिपूजोपहारकैः॥
पूजयेद्भक्तिभावेन पूजयन्त्येव तं सुरा।
विमानवरतारुढ्य किंकिणी जालमालिनम्॥
परितोऽसरसां वृन्दैर्गन्धर्वैः सिद्धकिन्नरैः।
शोभमानं प्रयात्येव भित्वा सूर्यस्य मण्डलम्॥
ब्रह्मलोकं मुनिर्वैररीप्सितं दुःख वर्जितम्॥
अत्र यं कुरुते कामं तं तं प्राप्नोस्यसंशयम्।
सर्वपाप प्रशमनं सर्वोपद्रव नाशनम्।
समस्तैश्वर्यदं पुंसां नित्यं दानविधायिनी॥ —के० ८९-४१-४४

## सुन्दरीदेवी (जयन्ती) सिद्धपीठम्

ऋषिकेश, देवप्रयाग यातायात मार्गमध्यवर्तिनः टिहरी गढ़वाल जनपदगतस्य शिवपुरी इत्यभिधेयस्य स्थानस्य समीप एवं ब्रह्मकूट पर्वतस्योपत्यकायां सुन्दरी नामधेयं शक्ति पीठमधितिष्ठति । इदं पीठं सतीवपुः वामजंघापतनेन प्रतिष्टितम् किम्बदन्तीयं लोके प्रसिद्धा । अस्मिन् पीठे सुन्दरीरुपिण्याः शक्त्याः स्थापनाप्रतिष्ठा च ब्रह्मणा कृता । आदिकाले शक्तिभुवनेश्वरी सृष्टि सृजनात्मककार्ये हिरण्यगर्भे नियुयोज । शक्तेरादेशमनुपालयन् सोऽपि तस्मिन् कर्मणि संलग्नो बभूव । बहुशः प्रयतमानोऽपि यदा जगत्कर्ता सृष्टिसृजनकार्ये सफलतां नाप्नोत् तदाकथंकेन प्रकारेण वाऽहं सृष्टिं विरचयिष्यामि इति चिन्तातुरो उद्विग्नमनाश्चाभूत ।[1] ध्यानावस्थितेन चेतसा शक्तिस्मृत्वा पृथिव्यां परिभ्रमन् स शान्तानुकूलं स्थलमिदमवाप । स्थानस्यास्य परमां हृदयाह्लादिनी मनोरंजनी सौन्दर्य-सम्पन्ना शोभा विलोक्यास्मिन् पीठे स सुन्दरींनाम्नीं शक्तिं स्वाभीष्टलाभाय प्रतिष्ठापयामास । तदारभ्य बहूनि वर्षाणि यावदत्रस्वयम्भूः कार्यसिद्धये शक्तेः सुन्दर्या उपासनाञ्चकार । उपासनया प्रभावेण शक्तिस्तं दर्शनीयं परमसुन्दरं स्ववपुः दर्शयामास । एतस्याः कल्याणमय्याः शक्तेः दर्शनात्परं स स्वाभीष्ठसिद्धिप्रदां बृद्धि स्मृति शक्तिचोपलभ्य सपद्यैव जरायुजाण्डज स्वेदजोद्भिजादि सृष्टिं ससर्ज । सिद्धपीठमिद निकषैव एकां सुरम्यानगरी ब्रह्मा विरचयामास तदा पर्वतशिखरदेका नद्यपि अत्र विनिसृताऽभूत् । ब्रह्मण उपासनानन्तरं शक्तिरियं सुन्दरीदेवी पर्वतोऽयं ब्रह्मकूटः पुरीयं ब्रह्मपुरी नदीयं ब्रह्मपुत्री नामभ्यो जगति प्रख्याता अभूवन् । कालान्तरे इन्द्रपुत्रेण जयन्तोऽपि अत्र एकां गुहां निर्माय शक्तेरुपासनां चकार, येन शक्तिरियं जयन्ती नाम्नाऽपि लोके विख्याता बभूव ।[2] समुद्रतटादिदं पीठं पंचशताधिकैकसहस्त्रफीटावधितुंगतां धारयति । सुन्दरी-पीठस्य पूर्वदिग्भागे हेमवतीनदी उत्तरदिग्भागे ब्रह्मपुत्री (हिंवल) नदी च गंगायां

---

१. अथान्यत्ते प्रवक्ष्यामि पीठं परमदुर्लभम् ।
ब्रह्मकूटगिरौ विप्र पश्चिमोत्तरयोर्दिशि ।।
सुन्दरीति च विख्याता देवदानव सेविता ।
तत्र ब्रह्मपुरीदिव्या यत्रास्ते भगवानजः ।
आराध्यामास यत्र देवीं त्रैलोक्यसुन्दरीम् ।
रहस्यं परमंपीठं सद्य प्रत्यय कारकम् ।।
सृष्टिकर्तृत्व सामर्थ्य यत्र प्राप प्रजापतिः ।
तत्र सन्निहिता नित्यमिन्द्राद्यास्त्रिदिवौकसः ।। —के० १३७-१-४

२. जयन्त्यां वामजघां च पत्यमाना च सत्वरम् ।
सर्वलोकहितार्थाय शक्ति च भैरवं तथा ।। —द० स० इ० श० सि० ४२

विलीने भवतः।[1]

हिंवलगंगयोर्संगमस्थले एकं प्राचीनं शिवमन्दिरं। येनेदंस्थानं शिवपुरीति नाम्नः ख्यातमस्ति मन्दिरेस्मिन् प्राकृतिकमेकं पाषाणमयं लिंगं विद्यते। एका धर्मशालाऽपि यात्रिणां साधूनांच विश्रामहेतुका अस्ति, यस्यां बहवः साधवः निवसन्ति चात्र प्रतिदिनं ते शंकरमन्दिरे लिंगार्चनं कुर्वन्ति शिवपुर्यारस्या उत्तरदिग्भागे गूलरगाढ़नामकं स्थानं वर्तते। इदमपि परम पावनतामुपलक्षयति। यात्रिणः शिवपुरीतः द्विक्रोशपरिमित मार्गमतिक्रम्य गूलरगाढ़ नामकं स्थानं प्राप्य गंगातटेऽत्र एकस्य विशालशिवमन्दिरस्य एकस्याः प्राकृतिक कन्दरायाअपि दर्शनं कुर्वन्ति। गाढान्धकारमुक्तायामस्यां कन्दरायां प्रविश्य दिवसेऽपि विभावर्यारनुभवो भवति। अस्यां पाषाणमयं शिवलिंगं वर्तते। निरताः शिवलिंगार्चने बहवः साधवोऽपि अत्र निवसन्ति। धर्मशाला गौशाला उच्चतर माध्यमिक विद्यालयश्चापि स्थानस्यास्य उत्कृसृतां वर्धयति। स्थानस्यास्य अतिप्राचीन-कालादेव गौरवास्पदतासीत् किन्तु किंचित्कालपूर्वमेव स्व० डॉ० स्वामी पुरुषोत्तमोऽस्य स्थानस्य माहात्म्यं वर्धयामास। तेन महाभागेनात्र संगठिता साधूनामेकासभा, विरचितमेकमुपवनम्, निर्मितैका च गौशाला। स्वामिना कृतेनाथक प्रयासेनेदंतीर्थमा-श्रमपदमुपलब्धम्। स्वामी पुरुषोत्तममताबलम्बिनः साधवः सन्त्यत्र वहवः साम्प्रतमणि। ते प्रतिदिनं प्रातःकाले गंगायां स्नान्ति, शिवार्चनं कुर्वन्ति, उपवनं सिंचन्ति, मध्यान्हे गाश्चारयन्ति। समीपवर्ति क्षेत्रेषु भारतीय संस्कृतेः प्रचार-प्रसारमपि कुर्वन्ति। एतेषां साधूनां दिनचर्या अत्र परमश्लाघनीया दृश्यते। गूलरगाढ़ इति लघुसरितया सह गंगायाः संगमोऽप्यत्र भवति।

सुन्दरीपीठेऽस्मिन् चत्वारि सन्ति मन्दिराणि लघ्वाकाराणि प्राचीनतमानि सभानानुरुपाणि पाषाणखण्डैः निर्मितानि। मन्दिराण्येतानि शक्ति शिवगणेश-भैरवादीनि नात्युच्छ्रितानि विद्यन्ते। मन्दिरेष्वत्र पाषाणमूर्तयोविलसन्ति। शक्तिमन्दिरं दैर्घ्येण-दशफीटामितां वर्गाकारतां द्वादशफीटमितांचोच्छ्रायतां दधाति शीर्षभागेऽस्य एकाध्वजा एकं कलषं, एकं त्रिशूलं च विलसन्ति। सुन्दरीमन्दिरस्यगर्भगृहस्य दक्षिणभित्तिकाया-मेकस्यां वेद्यां चतुर्भुजाकारिण्याः शंखचक्रगदापद्मानि हस्तेषु धारिण्याः शक्तेः सुन्दर्याः पाषाणमूर्तिः प्रतिष्ठते।

अस्मिन् पीठे चैत्राश्विनमासयोर्नवरात्रिषु मेलापकानामायोजनं भवति, येषु संख्यातीता जनाः सम्मिलिता भवन्ति। अत्र ते सुन्दर्य्याः शक्तेः दर्शनं

---

१. ब्रह्मपुत्री नदी तत्र सर्वसौभाग्यदायिनी।
तस्यां स्नात्वानरो याति ब्रह्मलोकं महामते॥ —के० १३७-६
इत्युक्त सुन्दरीपींठं ब्रह्मकूटे गिरौ स्मृता।
नदी हेमवती चैव ब्रह्म पुत्री तथैव च॥
एतयोः संगमो स्नातवा ब्रह्मलोके महीयते।
सुन्दरीपीठ माहात्म्यं श्रुत्वा पापैः प्रमुच्यते॥ —के० १३०-१६-१७

कुर्वन्ति[1] सूक्तपाठं पठन्ति, माहात्म्यं शृण्वन्ति नामानि च जपन्ति ढोलमृदंगादि वाद्यानि वादयित्वा सोल्लासैः प्रफुल्लितमनोभिः नृत्यन्ति, गुणानुवादं च गायन्ति। मेलापकानामवसाने ते शक्तेर्प्रसादं प्राप्य शक्तिर्नामानिकीर्तयन्तः स्वगृहाणि निवर्तन्ते।

मन्दिरस्य कार्यं संचालनार्थमत्र काऽपि समिति नास्ति। येन प्रख्यातस्यास्य सिद्धपीठस्य व्यवस्था सम्यक्रूपेण न दृश्यते। पीठेऽस्मिन् कस्यापिनियतस्य पुजारिणोऽभावात् शक्तेर्दैनिकी पूजा अपि न भवति।

धार्मिकजनानां इदं सुन्दरीसिद्धपीठं श्रद्धाविश्वासयोर्केन्द्रमस्ति। वारमेकमपि शक्तिदर्शनादत्र सर्वानैश्वर्यान् प्राप्नुवन्ति इति सर्वत्र प्रसिद्धा किम्वदन्ती।

नवरात्रपर्वसु सुन्दरी सिद्धपीठे ये जनाः ब्रम्हकृत तंत्रोक्तरात्रिसूक्तपाठं कुर्वन्ति ते मनोभिलषितान् कामान् प्राप्नुवन्ति—

ओं विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम्।
निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः॥ १॥
त्वं स्वाहा त्वं स्वधात्वं हि बषट्कारः स्वरात्मिका।
सुधा त्वमक्षरे नित्ये त्रिधा मात्रात्मिका स्थिता॥ २॥
अर्धमात्रास्थिता नित्या यानुच्चार्या विशेषतः।
त्वमेव सन्ध्या सावित्री त्वं देवि जननी परा॥ ३॥
त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते जगत्।
त्वयैतत्पाल्यते देवि त्वमत्स्यन्ते च सर्वदा॥ ४॥
विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने।
तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये॥ ५॥
महाविद्या महामाया महामेधा महास्मृतिः।
महामोहा च भवती महादेवी महासुरी॥ ६॥
प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभाविनी।
कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा॥ ७॥
त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा।
लज्जा पुष्टिस्तथा तुष्टिस्त्वं शान्तिः क्षान्तिरेव च॥ ८॥
खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा।
शङ्खिनी चापिनी बाणभुशुण्डी परिधायुधा॥ ९॥
सौम्या सौम्यतराशेषसौम्यभ्यस्त्वतिमुन्दरी।
परापराणां परमा त्वमेव परमेश्वरी॥ १०॥
यच्च किञ्चित् क्वचिद्वस्तु सदसद्वाखिलात्मिके।
तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसै तदा॥ ११॥

---

१. यस्या दर्शनमात्रेण लभते परमं पदम्।
एतत्पीठं समं पीठं त्रैलोक्ये दुर्ल्लभं परम्॥ के० १३७-८

यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत् ।
सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥ १२ ॥
विष्णुः शरीरग्रहणमहमीशान एव च ।
कारितास्ते यतो तस्त्वां कः स्तोतुं शक्तिमान् भवेत् ॥ १३ ॥
सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता ।
मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ ॥ १४ ॥
प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु ।
बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ ॥ १५ ॥

## सप्तमोऽध्यायः

### कमलाक्षेत्रे सिद्धपीठानां विशेषवर्णनम्

निर्धारितस्य कमलाक्षेत्रस्य विस्तारः रुद्रप्रयागादारभ्याकोटद्वारं अलकनन्दायाः तटवर्ति क्षेत्रंचावगम्यते। बहूनि सन्त्यस्मिन् क्षेत्रे पर्वतानां सुरम्य शिखराणि बनानि नदीनां सगमस्थलानि च। परम पावनी नवलानदी दूधातोली पर्वता दुद्भवती क्षेत्रस्यास्य मध्यभागाद् समुद्गच्छन्ती व्यासघाटे गंगानद्यां विलीना भवति। क्षेत्रेऽस्मिन् रुद्रप्रयाग, श्रीनगर कमलेश्वर, किलकिलेश्वर एकेश्वर व्यासघाट, नीलकण्ठ इत्येतानि प्रमुख तीर्थस्थलानि विद्यन्ते। बहूनि सन्त्यास्मिन् क्षेत्रे प्राचीनान्यर्वाचीनानि मन्दिराणि सन्ति। इमानि देवमन्दिराणि केदारखण्ड स्थितस्यास्य क्षेत्रस्य देवभूमित्वं ख्यापयन्ति। अत्र निवसन्तो जनाः पर्वतीयाः पर्वतमुपत्यकासु गृहं कल्पयित्वा तत्रैव निवसन्ति। निम्नोन्नतेषु भूभागेषु सोपाननिभानि क्षेत्राणि कल्पयित्वा कृषिकार्यण्यपि सम्पादयन्ति। ते गोधूमयबधान्यकोद्रवश्यामकादीन्यन्नानि समुत्पादयन्ति गावः महिषा अजाः प्रभृतयश्च पशवोऽपि पालयन्ति। अत्रत्यानां जनानां कृषिकार्यं पशुपालनं चेति मुख्यो व्यवसायः समवलोक्यते, येषां शिक्षाऽपि समुन्नता दृश्यते। अत्र निवासिनां पारावारिको दम्पत्योः पितापुत्रयोः भ्रातृभगिन्योश्च सम्बन्धः शोभनो दरीदृश्यते। अस्मिन् क्षेत्रे यत्र मुख्यानामिष्टदेवतानां नागराजः नृसिंह, भैरव, दुर्गा, घण्टाकर्णादीनामन्दिराणिप्रतिष्ठितानि सन्ति तथैव स्थाने-स्थाने शक्तिमन्दिराणि सिद्धपीठानि चावलोक्यते नवरात्रादिवसेष्वुत्सव दिवसेषु चात्रत्या संख्यातीता जनाः श्रद्धया सिद्धपीठेषु यात्रां कुर्वन्तो दृश्यन्ते। जनानामेषां सिद्धपीठेषु महती श्रद्धाऽवलोक्यते सर्वेषां कार्याणां सिद्धये जनाः भक्ताः सिद्धपीठानां यात्रा तत्र स्थितानां शक्तीनां पूजैव एकान्ततः साधनं मन्यन्ते। कमला, चामुण्डा, राजराजेश्वरी महिषमर्द्दिनी, गुह्येश्वरी, नन्दभद्रेश्वरी दीप्तज्वालेश्वरी, सुरेश्वरी एतानि सिद्धपीठानि क्षेत्रेऽस्मिन् प्रतिष्ठितानि सन्ति। वर्णनमेषां सविस्तरमधस्तात्क्रियते—

### कंसमर्द्दिनी सिद्धपीठम्

सिद्धपीठमिदं कंसमर्द्दिनीनामकं गढ़वाल पौढ़ीजनपदस्य श्री क्षेत्रे श्रीनगराभिधाने स्थाने विद्यते[1]। कृतयुगे विश्वामित्रस्य वंशे सत्यकेतु नामा एको नृपोऽभवत्

---

१. अत परं श्रृणु प्राज्ञ पीठं वै कांसमर्द्दिकम्।
यत्र देवी परा साक्षाद्वर्तते कंसमर्द्दिनी॥
जाता युगे युगे चैव पुरा नन्दगृहे शुभा।
सावैध संस्थिता नित्यं शिवसंगविलासिनी॥ —के० १९१-२-३

यस्यात्मजो सत्यसन्ध इति विख्यातोऽभूत्। कोलासुरं नाम दैत्यं पराजेतुम समर्थेन सत्यसन्धेन अशरीरिणी वाणीं श्रुता "सत्यसन्ध शक्त्युपासनया साफल्यं गमिष्यति" श्रुत्वैव सा अलकनन्दातटे एकस्यां महत्यां शिलायां श्रीयंत्रं विलिख्य आस्थाय च निश्चलां समाधिं श्रीदेवीमर्चयामास।[1] एवं च व्यतीतेषु शतद्वयवर्षेषु प्रत्यक्षीभूता श्रीदेवी सत्यसन्धायैकं चन्द्रहास प्रदाय अकथयत्[2] राजन्! अनेनैवत्वं कोलासुरं जेष्यति। अनेन छिन्नं तच्छिरः कबन्धं च यावद्दूरं पतिष्यतः तत् क्षेत्रं श्रीक्षेत्रमिति नाम्ना प्रसिद्धं भविष्यति[3] तथा कृतेऽस्य क्षेत्रस्यास्य प्रसिद्धिः श्रीक्षेत्रं इत्यभवत् एतद्नन्तरं काच्चिपला नाम्नी वनिता स्वसौन्दर्याभिवृद्धये श्रीयंत्रस्थल समागत्य शक्तिमाराधयामास।

शक्ति प्रसादादत्र सा दिव्यस्वरूपमवाप[4]। तदारभ्येदं क्षेत्रं चपलातीर्थं

---

१. एकां शिलां समानीय सत्यसन्धो नरेश्वरः।
तप्यां तद्यत्रमालिख्यस्थित्वा तत्र दृढासनः॥
पूजां चकार देवेस्याः विद्यायाः भक्तितत्परः॥ —के० १७८-४६-४७
गंगायाः दक्षिणतीरे वर्तते सा शिला शुभा।
यस्यास्तु दर्शनादेव महापातकिनोऽपि च॥
सद्यः शुद्धिं प्रयान्त्येव किमन्यैर्वहुभाषितैः॥ —के० १९१-८

२. जहि त्वं तं महादुष्टं राजन् कोलासुरं शुभः।
यावत्वदध्स्तसंक्षिप्तंशिरः कायात्पतिष्यति।
तावच्छ्रीसंज्ञकं क्षेत्रं भविष्यति सुप्रण्यदम्॥ —के० १७८-३

३. कोलोत्तमांगमारस्य यादतकोलकलैवरम्।
तावच्छ्री संज्ञकं क्षेत्रं योजनानां चतुष्टयम्॥
योजनांनां त्रयं ख्यातां तिर्यणागतमेव च।
अतिपुण्यतमं क्षेत्रं सर्वशास्त्रेषु गोपितम्॥
इदं स्थूलतमं ज्ञेयं सूक्ष्मं तु कथ्यतेऽधुना।
जीवनेन्द्रपुराद्विप्र यावद्वर्षवती नदी॥
इति सूक्ष्मं हि कथितं ह्यति सूक्ष्मं निगद्यते॥
खाण्डवाख्यनदीतीराद्यावच्छितिपुरं भवेत्।
यस्मिन् क्षेत्रेमुनिश्रेष्ठ धर्मनेत्र इति श्रुतः॥ —के० १७७-१७-१३

४. इति श्रुत्वा वचस्तस्याश्चपलापि समाययौ।
तपः कृतवती सापि स्वर्वेश्यात्वाय सुव्रत॥
स्मरंती मनसा शोभानाम्नीं देवीं परां शिवाम्।
ततः कतिपयैर्वर्णैः प्रसन्नाभून्महेश्वरी॥
इन्द्रलोकं प्राप्तवती स्वर्वेश्या चात्रवत्प्रभो॥ —के० १९१-२२-२५

नाम्नोऽपि प्रसिद्धतां गतम्[1]। श्रीयंत्रस्य महात्म्यमत्राति पुण्यप्रदं वर्तते[2] वर्तमानसमये कलासू नाम्नः स्थानात् डूंगरपंथ पर्यन्तमलकनन्दातटवर्ति भूखण्डमिदं श्रीक्षेत्रेमिति वर्तते। क्षेत्रस्यास्य श्रीसंज्ञकस्य पुण्यतममतीव महत्वं विद्यते[3]। शक्तिशिवयोनिवासस्थलेऽस्मिन्[4] श्रीक्षेत्रे बहूनि सन्ति मन्दिराणि सिद्धपीठानि च[5]।

धर्मविध्वंषिणः कृष्णद्विषः कंसस्यमर्द्दिनीयं परा इति नाम्नाख्या देवी श्रीनगरे कथं कस्माद् वा स्थानात् कस्मिन् समयेऽत्र समागतेति पुराणेषु प्रसिद्धा कथाधर्म-

---

१. तदावधि महाभाग चापलं तीर्थमुत्तमम्।
ख्यातं च सर्वलोकेषु चतुर्वर्ग फलप्रदम्॥ —के० १९१-२६

२. तस्मिन्नेव स्थले रम्ये शिला परमदुर्लभा।
श्रीशिलेति समाख्याता सर्वैश्वर्यप्रदायिनी॥
तस्यां स्थित्वा तु यः कश्चित् सप्तरात्रमतन्द्रितः।
यत्किंचिज्जपते मर्त्यश्चक्रवर्ती भवेन्नरः।
यत्किंचिद्क्रियते कामं तत्सर्वं लभते परम्॥
न विद्यते हि कुत्रापि शिलायाश्च समं क्वचित्।
दर्शनादपि यस्याश्च सर्वपापैः प्रमुच्यते।
कोटिजन्मकृतैः पापैर्मुच्यते स्पर्शनादपि॥
पूजनादपि राजेन्द्र सर्वैश्वर्य पतिर्भवेत्॥ —के० १६१-२७-३०

३. काश्यादिषु च तीर्थेषु वसति ह्यंशमात्रतः।
अत्रवै हिमवत्प्रान्ते सर्वोनिवसन्ति प्रभुः॥
अहोधन्या मनुष्येषु पश्यन्ति सकृद्धेव हि।
इदं क्षेत्र महापुण्यं देवा एव न संशय॥ —के० १७७-३९-४०
श्रृणोति यो मुनिश्रेष्ठ श्रीक्षेत्रस्य च वैभवम्।
स्नातं वै सर्वतीर्थेसु दत्ता वा शकला मही॥ —के० १९३-५३

४. विस्मयो न त्वया भूप मन्तव्यो देवदर्शनात्।
अत्र वै देवतासर्वेवसन्त्यैव हि नित्यशः॥
पूर्वजन्मकृतात्पुण्यात्प्राप्यते हिममन्दिरम्।
अत्र वै हि मृतः कश्चिन्न च भूयोऽभिजायते।
यत्र देवशिवस्साक्षावर्तते शिवया सह।
स्वयं समप्रभावेन नंदिभृंग्यादिभिर्नृप॥ के० १७७-३६-३८

५. चामुण्डं भैरवीपीठं कांसमर्द्दनकंतथा।
गौरीपाठं समाख्यात तथा माहिषमर्दिर्दनम्॥
राजराजेश्वरीपाठं सद्यः प्रत्ययकारकम्।
एतान्यन्यानि पीठानि श्रीक्षेत्रे कथितानि हि॥ —के० १९६-३-४

संस्थापनार्थाय भक्तानां परित्राणाय दुष्टतां च विनाशाय[1] द्वापरयुगे कंस कारागृहे कृष्णावतार रूपेण भुविसमवतीर्णे कृष्णे नन्दगृहे गोकुलाख्यां भूमौ परेति नाम्ना समवतीर्णा महामायां देवीं यशोदा प्रसूत। वसुदेवेन कृष्ण विनिमयेन मथुरायां समानीतामिमां शिषुरूपिणीं देवीं कंसः वद्धशिलायामेकस्यां कठोरायां पातयामास।[2] परं तस्य हस्ताच्युतादिवं चोत्पतन्ती तव हन्ता भूमावेव समवतीर्ण इति घोषयन्ती सा महामायाऽष्ठभुजारूपिणी इदं स्थानं समागता प्रतिष्ठिता च वभूव। तदा प्रभृति स्थानमिदं कंसमर्द्दिनी सिद्धपीठ नाम्ना प्रथितंसञ्जातम्। सिद्धपीठमिदं कंसमर्द्दिनीमन्दिरं, कालीमन्दिरं, महामायामन्दिरं, योगनिद्रामन्दिरं, श्रीमन्दिरं, कमलामन्दिरमिति[3] नामभिः प्रसिद्धं वर्तते। इदं सिद्धपीठं सत्याः मृतशरीरस्य ग्रीवाभाग पतनेन संजातमित्यपि कथ्यते।[4] आदौ भानुशर्मा ब्राह्मण अत्र कंसमर्द्दिनी शक्तिमाराधयामास।[5]

कंसमर्द्दिनी सिद्धपीठमिदं श्रीनगर निकषैवोत्तरस्यांदिशि विराजते। सिद्धपीठं परितः कृषियोग्या भूमिः सम्मुखे चालकनन्दाजस्त्रप्रवाहिनी वारिधारा स्व कलकलनिनादैः कंसमर्द्दिनीस्तुवन्ती भक्तानां मनांसि आह्लादयति। पारं नद्याः किलकिलेश्वर इति विख्यातं महादेव मन्दिरम्। तन्निकषैव महेन्द्राचल पर्वतः गगन चुम्बिभिः स्वशिखरपंक्तिभिः भक्तानां हिताय देव्या इत इव संतिष्ठते। कमलेश्वर महादेव मन्दिरपि श्रीक्षेत्रवर्ति वर्तते, यत्र कार्तिकमासस्य शुक्लपक्षेवैकुण्ठचतुर्दश्यांतिथौ बृहद् मेलापको भवति। साम्प्रतं तु गढ़वाल विश्वविद्यालयोऽपि श्रीनगरं संस्थापितोऽस्य गौरवं वर्धयति। स्थानमिदं समुद्रतटात् नवशताधिकैकसहस्त्र। १९००। फीटावधि तुगंतां धारयति।

वर्तमान कंसमर्द्दिनी सिद्धपीठमन्दिरस्य रचना पाषाणखण्डैः सुश्लिष्टैः। षट्षष्ट्यधिकाष्टदशशततमे वैक्रमाब्दे। संवत् १८६६। संजातेत्यत्रोत्कीर्ण शिलालेखेन विज्ञायते। गोरखीयैः गोरखा स्वशासनकाले। १८०४–१८१५ ई०। अस्मै निर्माणाय

---

१. यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानयधर्मस्य तदात्मानं सृजाम्यहम्॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भबामि युगे-युगे॥ —श्रीमद् भ० गी० ४-७-८

२. श्रीमद्भागवत द० पू० अ० ३-५

३. बराहशैले तु जया कमला कमलालये।
रुद्राणी रुद्रकोट्यां तु काली कालञ्जरे तथा॥ —देवी भा० ७-३०-६१
श्रीनामा श्रीगिरौ चैव काली कालोदको तथा॥ —कुब्जि तं० प० ७

४. श्रीशैलेषु गता ग्रीवा महालक्ष्मी चकार ह।
भैरवं सम्बरानन्दं कृत्वा ख्यातिं जगाम हा॥ —द० सं० इ० २०

५. आराधिता हि विप्रेण पुरा वै भानुशर्मणा।
सैव सम्पत्प्रदात्री च सर्वपाप प्रणाशिनी॥ —के० १९१-४

प्रजुरं धनं प्रदत्तम्। शिलालेखेनापरेण नववर्षाधिकाष्टशततमे खृीष्टाब्दे। १८०६ ई०। निर्मितमासीदिदं मन्दिरमिति सुस्पष्टं भवति। तदानीं गढशासकाः गोरक्षीयाः स्वराज्यविस्तार कर्मणि युद्धेषु च साफल्यार्थमधिगन्तुं देव्या उपासनां चक्रुः। अतः देव्याः मन्दिरस्य रचनायै तैर्विपुलं वित्तं प्रदत्तमिति अनुमीयते। अनुश्रुतिरिमति प्रसिद्धा यदाद्यशंराचार्येण निर्मापितम् मन्दिरमिदम्। मन्दिरमिदं सभामण्डपः गर्भ-गृहञ्चेति द्वयोर्भागयोर्विभक्तमस्ति। मन्दिरमिदं पञ्चदशफीटमितां वर्गाकारतां विंशतिफीमितां चौच्छ्रायतां दधाति।

पूर्वदिग्वर्तिना द्वारेण सभा मण्डपं प्रविश्य पुनश्चैकमपिद्वारमतिक्रम्य गर्भगृहस्य पश्चिमभित्यां काष्ठनिर्मित शिविकायां कंसमर्द्दिनी देवी प्रतिष्टिता अस्ति। सा सदैव रक्तवस्त्र परिवेष्ठिता उपतिष्ठति न च शक्नोति साक्षाद्द्रष्टुं कोऽपि जनएनां मूर्तिः : ऋत्वगपि पुजारी चक्षुषी निमील्य देव्या अभिषेकं स्नानादिकं सम्पादयति। देव्युपासनां तत्समीप स्थितामन्येषां जनानामयं द्रढीयान् विश्वासः यत् कोऽपि यदि प्रमादान्निर्बन्धाद् वा देवीं साक्षादवलोकयेत् तर्हि स सद्य एव महतीनामापत्तीनां गर्ते पतेत्। किम्बदन्ती चेयं प्रसिद्धा यच्छिविकायां नास्ति देव्याः साक्षान्मूर्तिः, सा तु अस्मिन्नेव मन्दिरे अन्तर्भुवि निलीना वर्तते। सम्बरानन्दभैरवोऽपि देवीमन्दिरं निकषैव विराजते।

इममपि सुप्रसिद्धं यत् पुरेयं कंसमर्द्दिनी समीपस्थस्यैव नागेश्वरमन्दिरस्य पुजारिणः धर्मपत्न्याः शरीरं प्रविश्यतन्मुखेनविविधानि शाश्वत वाक्यानि कथयति स्म। अद्यापि शक्तेरलौकिकेब प्रभावेण मोहिता जनाः विशेषतो स्त्रियः शनिवासरे अत्रागत्य श्रद्धया सर्षप, माष. गन्धाक्षत, धूप, सौभाग्य द्रव्य, दीप, रक्तपुष्पादिभिः देव्यार्चनं कृत्वा कृत-कृत्यतां मन्यन्ते स्वात्मानं। प्रसिद्धं सिद्धपीठमिदंमस्मिन् कलौ अपि दर्शनेन भक्तानां दुःखानि निवारयति।

सिद्धपीठमन्दिरस्य सञ्चालनार्थमत्र एका समितिः निर्वाचिता अस्ति। सा मन्दिरस्य समुद्धरणार्थं जनसंग्रहं करोति। अस्या समिते अध्यक्षपदं उपाध्यक्षपदं च गढवाल विश्वविद्यालस्यस्योपकुलपति समलंकरोति।[1]

शक्तेर्दैनिकी पूजा अत्र भवति। वैदिकः पौराणिक तांत्रिक पद्धतिभिः शक्ति-पूजन घिल्डियाल जात्युद्भवविप्रैः सम्पाद्यते। पंचवर्षाणिप्राक् अत्र पशुबलिभिः पूजाया वैशिष्ट्यमासीत्। साम्प्रतं तु नास्ति बलिप्रथा। ये जना अत्र शक्तेस्सात्विकी, राजसी, तामसी वा पूजां कुर्वन्ति ते सद्य एव स्वाभीष्टं फलं प्राप्तुवन्ति : श्रीचक्रं निर्माय ये जनाः शक्तिपूजनं बिदधति ते स्वल्पावधौ एव मनोवांछितफलं प्राप्नुवन्ति।[2]

---

१. तस्यास्तु दर्शनादेव सर्वपापैः प्रमुच्यते।
पूजनादबलिभिश्चैव सर्वसिद्धीश्वरी भवेत्॥
कथितं ते महाभाग पीठं वै कांसमर्द्दिकम्॥ —के० १९१-५-६

२. नवहस्तं त्रिहस्तं श्रीचमभिषेचने।
स्थण्डिले नित्यपूजायां हस्तमात्रं प्रशस्यते॥ —वि० तं० ७-१८८-१

## चामुण्डा सिद्धपीठम्

चामुण्डा[1] इति नामधेयं देवीसिद्धपीठं पौडीजनपदस्य श्रीनगरनामके स्थानेऽलकन्दायाः दक्षिणतटेस्थितंवर्तते। हनुमन्मन्दिरगरुडतीर्थयोर्मध्येस्थितमिदं पीठं तारादत्त गैरोला भिधेयेन सोपानेन मार्गेण गम्यते। मन्दिरं निकषा साम्प्रतं एकेन साधुना शरदानन्द नाम्ना स्वकीयाश्रमोऽपि स्थापितः।

अस्य पीठस्य विषये पुराणेस्वियं प्रसिद्धिः पुरा किल असुरो शुम्भनिशुम्भौ स्वर्गाधिपं पुरन्दरं विजित्य स्वर्ग स्वाधिकारे कृतवन्तौ। तौ पराजेतुमसमर्थ इन्द्रः शक्त्याः देव्याः शरणं ययौ, सहायतार्थं तां न्यवेदयच्च ! इन्द्रस्य निवेदनं सामयिकं मत्वा दैत्य वधाय च स्वमनसि निश्चित्य सा देवराजेन्द्रं समाश्वासितवान्। एकस्मिन् दिने दैत्यराज्ञः शुम्भस्य सैनिकौ चण्डमुण्डासुरौ पृथिव्यां परिभ्रममाणौ हिमालयप्रान्ते अलकनन्दायास्तटे समागतवन्तौ।[2] तौ दृष्ट्वा शक्तिः विविधैरंलकारैर्वस्त्रैश्चात्मानं विभूष्य स्नानार्थं तत्रनदीतीरमागच्छत् अवलोक्य च तां नवयौवनां शेभनाङ्गीनां सर्वालंकार विभूषितां चण्डमुण्डौ तदीय बृतान्तं स्वस्वामिने शुम्भाय अकथयताम्। वृतान्तभवगत्य च तस्या नवयोवनायाः सर्वांगसुन्दर्याः प्राप्ति कामनायाः स्वसन्देश हरान् दूतान् स प्रेषयामास। ते च दूताः देव्याः समीपे समागत्य स्वभर्तुः सन्देशं तस्यै अकयनस्माकं स्वामी अद्य स्वर्लोकाधिपतिरस्ति। सर्वैरपि रत्नैः विभूषितं देवदानवैश्च सेवितं तं शुम्भासुरं वरय, इतिश्रुत्वा सा प्रत्युवाच।

यो मां जयति संग्रामे योमे दर्पं व्यपोहति, यो मे प्रतिबलो लोके स मे भर्ता भविष्यति[3] इति देव्याश्च दर्पयुतं वचनं श्रुत्वा शुम्भस्य समीपे गत्वा ते देव्याः कथनं शुम्भाय न्यवेदयन्। शुम्भासुरः श्रुतवेदं कथनं महान्तौ बलिष्ठौ चण्डमुण्डासुरौ सेनयासहतां नवयौवनां बलादवनेतुं प्रेषयत्।

विपुलया सेनया सह तौ शक्तेः स्थानमाजग्मतुः। दृष्ट्वा च तामसुरसेनां देव्याः मुखं क्रोधेन श्यामतामवाप।[4] सा हस्तयोः खड्गमादाय कालिका रूपेण तां मर्द्दयती क्षणमपि न विरराम। खड्गेन सा चण्डमुण्डासुरयोः शिरसोछेदनं कृत्वा चामुण्डानाम्ना विभूषिताऽभूत्।[5] अनन्तरं चामुण्डादेवी अलकनन्दायाः उभयतः

---

१. चामुण्डा भैरवी पीठं.........— के० १८६-३-४

२. ददृशुस्ते ततो देवीमीषद्धासां व्यवस्थितताम्।
सिंहस्योपरिशैलेन्द्रश्रृंगे महति काञ्चने॥ —दुर्गा स० ७-३

३. दुर्गा सप्त श० ५-१२०॥ —के० १८६-३५

४. ततः कोपं चकारोच्चैरम्बिका तानरीन्प्रति।
कोपेनचास्या वदनमसीवर्णमभूत्तदा॥ —दुर्गा स० ७-५, के० १८७-२३

५. यस्मात्वं देवि हे चण्डे चण्डमुण्डविहागता।
एहीत्वा तौ महादैत्यो देवैरपिदुरासदौ॥

तयोरसुरयोः मस्तकौ प्रक्षिप्य अस्मिन्पीठे निवासाय समागता इति। यद्यपि इदं सिद्धपीठं सत्याः पार्थिवशरीरस्य किन्चिद्भागपतनेन प्रतिष्ठामधिजगाम तथापि चामुण्डामिधेयाशक्तेः निवासानन्तरं चामुण्डासिद्धपीठमिति लोकविश्रुतं जातम् इति किम्वदन्त्यपि लोके प्रथिता समभवत्।

चामुण्डापीठे एव अधुना शारदानन्दाश्रमो स्थापितो स्ति। अत्र गोलक नाम्नो पर्वतात् एका स्वल्पा वारिधारा विनिर्गत्य अलकनन्दायां संमिलति। केदारखण्ड पुराणे इयं वारिधारा कटकवती नदी इति कथ्यते। द्विसष्ठ्युत्तरैकोनविंशतितमे ईसवीयाब्दे (१९६२ ई०)। पौडी जनपदस्यैकं सन्यासिनं स्वप्ने चण्डिका समादिदेश यत्तवं चामुण्डा पीठस्य समीपं एवं नागकुण्डे पतितां मूर्ति अस्मिन् पीठे स्थापय। सोऽपि तथैव कृत्वा सिंहवाहिनी दशभिर्भुजैर्युतां मूर्ति पीठेऽस्मिन् स्थापयामास इति वाक्कथा लोके विख्याता।

चामुण्डामन्दिरं नाति विशालं वर्तते। इदं पंचदशफीटमितां वर्गाकारतां विंशतिफीटमितां चोच्छ्र्यतां दधाति। मन्दिरस्य शिरोभागो एकं कलश एका पताका च विलसति। गर्भगृहेऽस्य मन्दिरस्य एकस्यां वेदिकायां देव्याः मूर्तिरस्ति तस्याश्च दक्षिणभागे गौरीसुतस्य मूर्तिः भित्तिकायांसंलग्नाः दृश्यते। मन्दिरमभितः भक्तानां कुटीराणि सन्ति। सम्मुखे-चाश्वत्थवृक्षः छायया जनानां संतापं हरति। मन्दिरस्य समीप एव भगवती अलकनन्दा कल-कल रवेण देव्याः स्तोत्रं गायतीव अहर्निशं प्रवहति। सहस्रशः भक्ताः प्रतिदिनमत्र अलकनन्दायां स्नात्वा देव्याः दर्शनेन पुण्यमर्जयन्ति।[1]

अस्मिन् पीठे शक्तेः दैनिकी पूजा भवति। प्राचीनकाले अत्र पशुबलिना शक्ते-पूंजनमक्रियत, किन्तु सम्प्रदीयं प्रथा समाप्ततांगता दृश्यते। साधवोऽत्र शक्तेर्पूजनं सात्विकविधिना एव सम्पादयन्ति।

प्राचीनकालादेव शाक्तानां क्षेत्रीय जनानामिदं चामुण्डादेवी सिद्धपीठं श्रद्धा-विश्वासयोर्केन्द्रमासीत्। अधुनाप्यवलोक्यते यदेतत्सिद्धपीठं प्रति जनानामसीमा श्रद्धा। इयं शक्ति स्वोदारवृत्तिनां भक्तानां धार्मिकाणां कष्टान् दूरीकृत्य ऐश्वर्या-रोग्यादि प्रदानेन तानुपकरोति। 'ओं चामुण्डायै नमः' इति मंत्रस्मरणमात्रेणात्र परमं सुखं लभ्यते।[2]

---

तस्मात्वं त्रिषु लोकेषु चामुण्डेति च नामतः भविष्यतीह विख्याता
सर्वकामफलप्रदा ।। —के० १८७-३६-३७

१. अस्मास्तु पूजनान्मर्त्य सर्वसिद्धीश्वरोभवेत्।
चामुण्डाया दर्शनेनसर्वपापैः प्रमुच्यते ।।
यं यं कामयते कामं तं तं प्राप्नोति निश्चितम् ।। —के० १८७-४७-४८

२. शृणु चार्वांग शुभगे चामुण्डामंत्रमुत्तमम्।
यस्य विज्ञान मात्रेण पुनर्जन्म न विद्यते ।। —मातृ० भे० तं० ६-२२
शक्तिः सं० तं० ५१-२० ।। वि० तं० १-१२-३१७ ।। ३-५०-४

## राजराजेश्वरी सिद्धपीठम्

राजराजेश्वरीति नामधेयं सिद्धपीठं[१] टिहरी गढवाल जनपदस्य कीर्तिनगरमिति नाम्नः प्रसिद्धात् स्थानात् क्रोशद्वयपरिमितमार्गमुल्लंध्य श्रीक्षेत्रे स्थित राणीहाट नामके स्थाने विद्यते। सतीदेवी वपुः दक्षिणकर्णभाग पतन संस्थापितमिदं राजराजेश्वरी नाम्ना लोके प्रसिद्धम् परं पुराणेषु कथेयमपि कीर्तिता यत् कदाचित् धनदेन स्वेष्टसिद्ध्यर्थमत्र देव्याः प्रतिष्ठा कृता।[२] तस्य भक्त्या पूजनेनोप-सनया च प्रसन्नादेवी धनेशं राजराजेश्वर इत्युपाधिना समलञ्चकार। तदनन्तरं सा राजराजेश्वरीति प्रसिद्धि गता। सिद्धपीठमिदं भैरवीपीठं[३] माधवीपीठं सुन्दरीपीठं[४] चापि कथ्यते।

नरेन्द्रः सत्यसन्धोऽपि एकस्यां शिलायां श्रीयंत्र विलिख्य राजराजेश्वरीपीठे शक्तिमर्चयामास।[५] शक्तेरस्याः बहूनि नामान्युल्लिखितानि सन्ति तंत्रग्रन्थेषु।[६] राज-

---

१. गंगाया उत्तरेतीरे ह्यग्तः क्रोशादर्धखण्डके।
राजराजेश्वरी नाम्ना प्रथिताहं नराधिप ॥ —के० १७७-७८

२. पूर्व तत्र महाराज राजराजेन धीमता।
सम्पत्यैराधिताहं वै ततोऽत्र निवसाम्यहम् ॥
राजराजो महाराज संप्राप महतीं क्रियाम्।
अस्मिन् वै तीर्थराजे तु मदाराधन कर्मणा ॥
ततो मां नरशार्दूल स्थापयामास राजराट्।
त्रिंशत्कोटि सुवर्णस्य स्थण्डिलस्योपरि ध्रुवम् ॥
ततो मे नाम विख्यातं राजराजेश्वरीति वै।
इदं स्तोत्रंमयाख्यातं पठिष्यन्ति मदालये ॥ —के० १७८-७८-८१
श्रीशैले दक्षिणे कर्णे खण्डे शक्तिस्तु सुन्दरी।
भैरव सुन्दरानन्दो जातो देशे तु दक्षिणे ॥ —द० सं० इ० श० सिं० ७

३. भैरवी पीठमाख्यातं सद्यः प्रत्यय कारकम्।
सप्तरात्रं निराहारो जितात्मा जितविग्रहः करोति पूजनंदेव्याः
सिद्धिः प्राप्नोति दुर्ल्लभाम् ॥ —के० १८५-३
तदादीदं महादेवी राजराजेश्वरीशिवा।
बभूव नाम्ना नृपते सर्वसिद्धिप्रदायिनी ॥ —के० १८५-३१

४. स्थानेश्वरे भवानी तु विल्वके विल्वपत्रिका।
श्रीशैले माधवी प्रोक्ता भद्रा भद्रेश्वरी तथा ॥ —देवी भा० ७-३०-६०

५. एकां शिलां समानीय सत्यसन्धो नरेश्वरः।
तस्यां तद्यंत्रमालिख्य स्थित्वा तत्र दृढ़ासनः ॥
पूजाञ्चकार देवेस्याः विद्यायाः भक्ति तत्परः।
गन्धैः पुष्पैस्तथा दीपैर्नैवेद्यैर्वलिभिस्तथा ॥ —के० १७८-४६-४७

६. राजराजेश्वरी विद्या पञ्चमी परसुन्दरी।
एकद्वित्रिविधा देवी कोटिधाऽनन्तरूपिणी ॥
अङ्गरूपैर्नामभेदैर्नानानामविधायिनी ॥ —शक्ति सं० तं० २-३६

राजेश्वरी सिद्धपीठात् चतुर्षुदिक्षु शैलानामुच्चावच शिखराणां वनस्पतिभिः परिपूरितानां सघनानां बनानां च दर्शनं भवन्ति। सम्मुखेऽत्र दक्षिणस्यांदिशि कलकल प्रबाहिनी मन्दविलासिनी अलकनन्दा प्रवहति। पीठमिदं समुद्रतटात् नवशतैकसहस्रफीटावधितुंगतांदधाति, श्रीक्षेत्रेऽस्य विशदवर्णनं तु कंसमर्द्दिनी पीठे (पाठे) पठितव्यम्।[1]

अस्मिन् पीठे मन्दिरस्य भवनमति प्राचीनं वर्तते। शोभनैः पाषाणखण्डैः निर्मितमिदं मन्दिरं चत्वारिंशत् हस्तमात्रोच्छ्रितमस्ति रचना चास्य समतलभूमौ विद्यते। एटकिन्सनस्य मतानुसारेण अस्य निर्माणं परमारजातीयैः नृपैः १०–११ तमायं शताद्ब्यां (ई०) कारितम्। अस्य मन्दिरस्य रचना शैली कत्यूरी पध्दत्या विद्यते। अत अनेके विद्वांस इदं मन्दिरं जगद्गुरुणा शंकराचार्येण निर्मापितमपि मन्यन्ते। मन्दिरस्य शिखरप्रान्ते पित्तलनिर्मितमेकं कलशं विराजते, एका ध्वजाऽपि तत्र विलसति। मन्दिरमिदं द्वयोर्मागयोर्विभक्तमस्ति सभामण्डपं गर्भ गृहं च। सभामण्डपस्य कपाटे सदैवानावृते वर्तते। अप्रतिहतमण्डरूपेण प्रवेशं लभमानाः भक्ताः सभामण्डपस्य भित्तिकायां प्रतिष्टितायाः महिषमर्द्दिन्याः सार्धत्रयहस्तौच्छ्रितायाः हस्तद्वयपरिमितायाः सुविस्तीर्णायाः शक्तिमूर्तेः दर्शनं कर्तुं पारयन्ति। गर्भगृहे देव्युपासका एव गन्तुं शक्नुवन्ति इतरेषां प्रवेशो निषिद्धः। शक्त्याः दक्षिणे भागे सुन्दरानन्दभैरवः प्रतिष्ठति।

गर्भगृहे द्वादशाङ्गुलपरिमितायाः शक्तेः राजराजेश्वरी देव्याः रजतनिर्मितामूर्तिः पद्मासनस्था विराजते। तदीया स्थितिः शयानस्य शंकरस्य नाभावस्ति। चतुर्भुजीदेवी त्रिषु हस्तेषु धनुर्बाणत्रिशूलानि धारयन्ती दुराचारिणां वधाय समुद्यतेव स्वात्मानं दर्शयन्ती चतुर्थकरमुन्नमय्य भक्तेभ्योऽभयं वितरति। एकं शयनासनमत्र अर्धचन्द्राकारं तोरणमिव तां परिवेष्टयति। यस्तस्य प्रभामण्डलस्य द्योतकोऽस्ति। अस्यासनस्य चतुष्पदेषु ब्रह्मविष्णुरुद्रइन्द्रादीन् देवान् स्वहस्तयोः धारयन्ती सा प्रसन्नमुखी भूताऽ व तिष्ठति। शक्तिमूर्तेः पृष्टतः भित्तिकायां सुबिस्तीर्णं रक्तवस्त्रमवलोक्यते, तस्यां सलग्ना मुखाकृतिरस्ति शक्तेर्वाहनस्य केसरिणः। मन्दिरस्य शिखरादेव लम्बितमेकं छत्रं शक्त्युपरि विलसति।

मन्दिरस्य भित्तीनां बाह्य देशेषु प्रस्तरखण्डैः निर्मिता विष्णोर्मूर्तिः दौवारिकानां मूर्तयोऽन्येषां च दिवौकषां मूर्तयश्च संलग्ना दृश्यन्ते। मूर्तिभिराभिः १३-१४ शतद्वयां गढदेशमूर्तिकलावैशिष्ट्यं परिलक्षितं भवति। पुरातत्वान्वेषकेभ्योऽत्र शोधसामग्रीणां प्रचुरता सम्भाव्यते।

राजराजेश्वरी मन्दिरे शक्तेर्दैनिकी पूजा शाक्तपध्दत्याभवति। कतिचिद्वर्षपूर्वमत्र पशुबलिप्रथा प्रचलिता आसीत् सा तु अष्टपञ्चाशदुत्तरैकोनविंशति शततमे ईशवीयाब्दे समाप्ता। कथ्यते यत् योवनारम्भे कन्यकानां केशेषु तैलं मर्दयित्वा ताभ्यः देवदासीति दीक्षां दीयते स्म। अनन्तरं गणिकावृत्तिना ताः स्वजीवनं यापयन्ति स्म।

---

१. के० अध्याय १७७, १७८, १९३।

अधुना तु नैनादृशी प्रथा अत्र दृश्यते। अस्मिन् पीठे ये जनाः शक्तेः राजराजेश्वर्या स्तोत्रपाठं कुर्वन्ति ते राजपदं प्राप्नुवन्ति।[१]

मन्दिरेऽस्मिन् चैत्राश्विनमासयोर्नवरात्रिषु मेलापकानामायोजनं भवति। बहवो जनाः येषु मेलापकेषु सम्मिलिता भवन्ति। राजराजेश्वर्या दर्शनपूजनाभ्यां च ते मनोवाञ्छितं फलमाप्नुवन्ति।

सुप्रसिद्धस्य राजराजेश्वरी मन्दिरस्य संचालनार्थमत्र काऽपि समिति नास्ति। यस्याभावे मन्दिरस्य व्यवस्था शिथिली दृश्यते। शिथिलेन प्रबन्धेन बहूनि मन्दिराण्य-

---

१. वन्दे सर्वमयीदेवी सर्गस्थित्यन्तकारणीम्।
सर्वदेवस्तुतां देवी प्रतिपद्ये महेश्वरीम्॥
नानारत्नविभूषां च सिंहासन कृतासनाम्।
इन्द्रादिमुकुटाच्छन्नपादपीठां सुलोचनाम्॥
कोटिबालार्कसदृशी सुन्दरांगी महाबलाम्।
ईडे सकलसम्पत्यै जगत्कारणमम्बिकाम्॥
त्वमेव मूलप्रकृतिर्माया विश्वविमोहिनी।
त्वयाव्याप्तं जगत्सर्वं मोहितं च त्वयावरे॥
त्वमिन्द्रस्त्वं यमोदेवो महादेवस्त्वमेव हि।
शेषः सर्वस्यधर्ता त्वं त्वतो नान्योऽस्ति किंचन॥
वेदमाता त्वमेवासि ब्रह्माविष्णुशिवात्मिका।
सर्वरूपामिधादेवि विष्णूत्संग निवासिनी॥
दर्पिसुदुष्टदैत्यघ्नी महादेवकुटुम्बिनी।
इन्द्रस्य राजलक्ष्मीस्त्वं भवपाशविमोचिनी॥
सरस्वती त्वमेवासि सर्वशास्त्रप्रबोधिनी।
प्रभात्रैलोक्यमाणिक्यरूपा संयमिनी शिवे॥
कुबेर गृहसम्पत्यं यत् स्त्री रूपं त्वमेव हि।
असुराणां निहंत्री च भक्तदारिद्र्य नाशिनी॥
यावत्त्वदपादकमले भक्तिर्नैवोपजायते।
तावत्संसार दुःखौघैर्बाध्यते भुविमानवः॥
नाहं तव महिम्नो हि पारं जानामि पार्वति।
स्तोतुं त्वां जननी मेघ योग्यता स्यात्कथं शिवे॥
तथाप्यहं महाभागे स्तोतुं त्वां भगवत्प्रिये।
न स्तोत्रेण हि दुष्प्राप बिरंच्यादिभिरीश्वरैः॥ — के० १७८-६०-७१
ततो मे नामविख्यातं राजराजेश्वरीति वै।
इदं स्तोत्रं मयाख्यातं पठिष्यन्ति मदालये॥
ते वै मम महाराज भक्तानां भक्तनायकाः॥ —के० १७८-८१

स्मिन्स्थले भूरिशःनश्यन्ति। सुसंचालनार्थमस्यपीठस्य प्रबन्धसमितेः परमावश्यकता प्रतीयते।

श्रीक्षेत्रे राणीहाट नाम्नः स्थानं प्राचीनकालादेव गढसभ्यतायाः संस्कृतेश्च केन्द्रभूतमासीत् सम्प्रति गढवाल विश्वविद्यालयस्य पुरातत्वविभागाध्यक्षेण कान्तिप्रसाद नौटियालेन क्रियमाणे उत्खननेनात्र प्राचीन सभ्यताया उत्कृष्टकलायाश्च प्रतिकानि विभिन्नानि चिह्नानि समुपलब्धानि।

श्रीक्षेत्रेऽस्मिन् एकं देवलगढनामकं स्थानमपि भारतीय संस्कृतेरनुपोषकमासीत्। इदं श्रीनगरं निकषा विद्यते। तत्रापि राजराजेश्वरी मन्दिरं तिष्ठति। यत् देवलगढनगर्याः निर्माणेन सह ईशायाः पञ्चदश्यां शताब्द्या गढदेशीयभूपैः निर्मायते स्म। मन्दिरेस्मिन् विविधाः देवताः प्रतिष्ठिताः सन्ति। वितेऽत्र पित्तले लिखित त्रिपुरा सुन्दरी यंत्रं ताम्रमये पत्रे श्रीदेवी यंत्रं ताम्रेव पत्रे लिखित काली यंत्रम्। एकस्यां वेदिकायामत्र हवन कुण्डं निर्मीयते, यस्मिन् यज्ञान्तकाले होमं विदधति। प्रारब्धाद्यावधि पर्यन्तं कुलदेवीति रूपेण पूज्यते इयं देवी जनैः स्वकामान् सिध्यर्थम्। श्रद्धया सुपूजितेयं सुफलं ददाति इत्यस्ति जनानां दृढो विश्वासः। राजराजेश्वरी स्वरूपात्मकं पाषाणलिंगमप्यत्र वर्तते। विभिन्नैर्मंत्रैः समलंकृतेऽस्मिन् राजराजेश्वरी सिद्धपीठे अत्रत्याजनाः शक्तेः पीठपूजां लिंगपूजां मूर्तिपूजां यंत्रपूजां पादपूजां च कुर्वन्त्येव तथापि प्रधानतया पीठपूजाया महत्वम् दरीदृश्यते।

देवलगढ नामके सुप्रसिद्धेऽस्मिन् स्थाने अचिरात्पूर्वमेव गढ़देशीयानां राजधानीमासीत्। अत्र विराजमानैश्चित्रैः मंदिरैश्च प्रदेशस्यास्य निवासिना धार्मिकी सांस्कृतिकी राजनीतिकी ऐतिहासिकी च ताकालिकी स्थिति सम्यक् समवलोक्यते।

## महिषमर्द्दिनी सिद्धपीठम्

गढ़वाल पौडीजनपदस्य देबलगढाभिधाने स्थाने स्थितं प्राचीन सिद्धपीठेषु गौरीमहिषमर्द्दिनी सिद्धपीठं स्ववैशिष्ट्यमादधाति। सिद्धपीठमिदं प्राचीन काले सतेः पार्थिवशरीरस्यांगभाग पतनेन सञ्जातम् ज्ञायते के० पुराणाध्ययनेन यत् पुराकस्मिश्चिद् समये देवलनाम्नो द्वीपपाल एक रत्नमयं विशालं महिषशृङ्गमत्र समानीतवान्। तस्माद्दिनादेव सिद्धपीठमिदं महिषमद्दिनी नाम्ना लोक विश्रुतं जातम्[1]। शृङ्गमिदं स द्वीपपाल केदारनाथस्य दक्षिण भागस्थित महिषखण्डकइति नाम्नो पर्वतादानीतवान्[2]। अस्मिन् महिषखण्डके पर्वते प्राचीनकाले शक्तिः महिषासुर-

---

१. द्वीपपालो महाराजो देवलो नाम विश्रुतः।
आनीतवान् महाशृङ्ग सर्व रत्नमयं शुभम्॥
तदाद्यत्र महावाटं बभूव मुनिसेवित॥ —के० १९१-९०-९१

२. कुम्भोद्भव महाप्रज्ञ शृणु तीर्थानि सर्वशः।
केदारदक्षिणेभागे धरो महिषखण्डकः॥

महन्यत इति। अत्रादौमहिषमर्दिन्या: शक्तेः स्थापना प्रतिष्ठा पूजा चापि भूपतिना देवलेन कृता। सिद्धपीठमिदं चैत्रवत्याः नद्याः पश्चिमभागे विद्यते। इदं परित क्रोशैक-परिमित वर्तुलाकार क्षेत्रमति पुण्यप्रदं पावनञ्चास्ति। पीठाद्स्मात् क्रोशार्ध्दकं परिमितपथमतिक्रम्य गंगाऽलकनन्दायाः दर्शनं भवति प्राचीनकाले ब्रह्मादयो देवा अत्र तपस्यया परमां सिद्धिं लब्धवन्तः।

महिषमर्द्दिनी पीठेऽस्मिन् मन्दिरस्य निर्माणं कत्यूरीशैल्यामभवत्। येनास्य निर्माणकालो ईशायाः सप्तशताब्दीतः पूर्वं निश्चीयते। मन्दिरमिदं सभामण्डपं गर्भगृहञ्वेति द्वयोर्भागयोर्विभक्तमस्ति। गर्भगृहस्य शीर्षभागे एकं छत्रं तस्योपरिपित्तल-निर्मितं विश्वकर्मणा शंकराचार्यो ऽ कारयत दैर्घ्येणेदं विंशतिफीटमितां वर्गाकारतां पंचदशफीटमिता मुछ्रायतां दधाति।

प्राचीनकालादेवेदं मन्दिरं शाक्तानां तांत्रिकाणां च उपासनायाः केन्द्रभूत-मासीत्। अस्मिन् पीठे नरबलिना जनाः शक्तिमर्चयन् वैदिककालानन्तरे प्रवेशे तांत्रिककाले। सुमाड़ीग्रामस्य गोनदा दादा आसीदन्तिमो जनः यः देव्यार्चने बलिरूपेण दीयते स्म। अनन्तरमत्र पशुबलिप्रथायाः प्रचलनं बभूव सम्प्रति तु सा प्रथा ऽपि निरबशेषतां नीता। बलिप्रथा समाप्तिं गताऽनन्तरं जगद्गुरुः शंकराचार्यः मन्दिरेऽस्मिन् शक्तिपूजनस्याधिकारं नाथसम्प्रदायस्योपसकान् समर्पयत्। अधुनाऽपि तेषामेवात्र प्रभुत्वं दरीदृश्यते।

शक्तिभवनस्यान्तः गृहे शक्तेः महिषमर्द्दिन्याः एकंपाषाण लिंगं विद्यते। महिष-मर्द्दिनी स्वरूपमिदं लिंगं भक्ताः श्रद्धया पूजयन्ति सिद्धपीठस्यास्यान्ततो बाह्यतश्च विभिन्नाः विपुलाश्च मूर्तयः सन्ति। तेषु सुहासपूर्णचन्द्रमुखी गौरीदेवीं गाम्भीर्यपूर्णमुखी गौरीदेवी, कालीदेवी भुवनेश्वरीदेवी ताम्रमयी गौरीदेवी, वंशीवादयन्कृष्णः पित्तिल-निर्मित भैरवनाथ पाषाणखण्ड निर्मिता केसरवाहिना गौरी, महिषासुरमर्द्दिनी देवी इत्यादयो मूर्तयः स्वाभिः स्वरूपाभिः जनानां मनांसि आह्लादयति मन्दिरस्य द्वारे भित्तिकासु चापि विविधाः मूर्तयः संलग्नाः सन्ति। गोपुरमुभयतः दौवारिकौ गणेशश्चोपविश्यमानोऽस्ति। मुख्यद्वारस्योत्तर भागे गजाननस्य द्वेभूर्ती शिवपार्वत्योः तस्या, मुखभागे नान्दी, पञ्चानां पाण्डवानां मूर्तयः, तैः संह द्रोपदी कुन्ती मूर्ति च मन्दिरस्य भितिकासु ब्रह्मा, विष्णु महेश्वर, महाकाली, महालक्ष्मी, महासरस्वत्यादीनां मूर्तयोऽश्ववारिकाणां चित्राण्यपि सन्ति।

---

पुरो यदा महादेवी जघान महिषासुरम्।
तस्य खण्डसमादाय चिक्षेप गिरिसत्यये॥

आविर्भूतासि तत्रैव नाम्ना महिषमर्द्दिनी।
तस्याः दर्शन मात्रेण नरः शिवपुरं ब्रजेत्॥ —के० २०१-३-८
निशुम्भशुम्भमथनी महिषासुर मर्द्दिनी॥ विद्या० तं० ३-४९-५०

आश्विनचैत्रमासयोर्नवरात्रिष्वत्र बृहद् मेलापकानामायोजनं भवति। समयेऽस्मिन् संख्यातीताः भक्ताः स्वाभिलाषाणां पूर्तये अत्र समागत्य श्रद्धया षोडशोपचाररीत्या देवीं महीषमर्द्दिनीं पूजयन्ति[1] मेलापकावसानकाले होमाष्ठकद्रव्येण होमं च कुर्वन्ति। क्षेत्रीय जनानां श्रद्धाविश्वासकेन्द्रभूतायाः महिषमर्द्दिन्याः दर्शनेन पूजनेन च भक्ताः परमैश्वर्यं लभन्ते। अस्याश्चरित्र श्रवणेन च धर्मार्थकाममोक्षाः सिद्ध्यन्ति[2]।

अस्मिन् पीठे शक्तेः दैनिकीपूजायाः का ऽपि व्यवस्था नास्ति यात्रादिवसेषु भक्ताः शक्तेर्पूजनार्थं पूजासामग्रीणां व्यवस्था स्वयमेव कुर्वन्ति। सुप्रबन्धाय न चात्र का ऽपि समितिः निर्वाचिता अस्ति। संचालनार्थमस्यपीठस्य धार्मिकैर्जनैः निर्मिता एकस्याः समितेरावश्यकता दृश्यते। समितिरेव अस्य पीठस्योन्नति कर्तुं शक्नोति।

## गुह्येश्वरी सिद्धपीठम्

गुह्येश्वरी इति नमधेयं सिद्धपीठं ताम्राचले विश्वाधारपर्वतस्योपत्यकायां शवधारखाल इत्यभिधाने स्थाने विद्यते[3]। प्राचीनकाले अत्र दक्षयज्ञ दग्धायाः सत्याः पार्थिवशरीरस्य किञ्चिद्भागपतनेनेदं सिद्धपीठं संजातमिति कथ्यते गुह्येश्वरी सिद्धपीठस्य विषये पुराणेष्वियं कथा प्रचलिता वर्तते-पुरा किल कश्चिद् वेणुर्नाम्नो आसीद्राजर्षिः स अस्मिन् पीठे समागत्य स्वाभीष्टसिद्धये शक्तेःप्रसादनार्थंतपश्चकार[2]। तपसः प्रसन्ना सती शक्तिस्तं साक्षाद्दर्शनमददात्। शक्ते दर्शनात्प्राप्य मनोरथान्यखिलान् सोऽत्र गुप्तस्थानेदं शक्तेः स्थापनां गुह्येश्वरी नाम्ना कारयामास। तदारम्य गुह्येश्वरी नाम्ना देवीपीठमत्र जगति प्रसिद्धम्। प्राचीनकाले मृतात्मनां पार्थिव-

---

१. अष्टम्यां च चतुर्दश्यां तृतीयायां तथा नृप।
करोति पूजनं तस्या बलिधूपाग्नि तर्पणैः॥
यंयं कामयते कामं तंतं प्राप्नोति निश्चितम्।
शरत्कालेऽपि यः कश्चिन्महिषार्धमहेश्वरीम्।
संतर्प्ययेद्भक्तियुक्तश्चक्रवर्ती भवेत्प्रभुः॥ —के० १९२-९९-१००

२. दुर्गासप्तशती अध्याय २–३

३. अथान्यदपि दिव्यास्तु पीठं परमकं परम्।
अलकनन्दापूर्वतटात्पूर्वं भागे महार्थदम्॥
यत्र पूर्वं महाराजो वेणुर्नाम तपोऽकरोत्।
ततो वै पश्चिमे पार्श्वे योजनद्वय सम्मिते॥
विश्वधारे महापुण्ये पर्वते द्विजसत्तमः।
अति पुण्यतमं पीठं सर्वसिद्धि प्रदायकम्॥
तत्र ताम्राचले दिव्ये महादेवी व्यवस्थिता।
गुह्येश्वरीति विख्याता सर्वसिद्धि प्रदायिनी॥ —के० १७४-१-४

शरीराणामन्तिमदाहसंस्कारमभूदस्मिन् स्थाने । येन स्थानमिदं शवधारखाल नाम्नोऽपि लोके प्रसिद्धतां गतम् ।

देवप्रयाग पौडी यातायात मार्गान्तराले अस्य पीठस्य स्थिति ताम्राचलस्य-सुरभ्यामुपत्यकायां वर्तते । देवप्रयाग इति प्रसिद्धस्थानात् क्रोश द्वयपरिमितपदाति-पथमतिक्रम्य यानेन वाहनेन च जना अत्रागन्तुं शक्नुवन्ति । सिद्धपीठादस्मात् सर्वतः ग्रामाणां कृषि क्षेत्राणामुद्गतानां पर्वतशिखराणां बनानामुपवनानां च मनोहारिणी-छटाऽव लोचयते । गंगाऽलकनन्दायाः दर्शनमप्यस्माद्भवति । इयमापि स्थानस्यास्य पावनतांमुपलक्षयति, शीतलमनिलमत्र मन्दं मन्दं प्रवहत् भक्तानां मनांसि आह्लादयति अत्रस्थिते-उच्चमाध्यमिका शिक्षासंस्थाऽपि स्थानस्यास्यं शौर्यं वर्धयति समुद्र-तटादिदं स्थानमनुमानतः २७०० फीटावधि तुंगतां दधाति ।

सिद्धपीठेऽस्मिन् मन्दिरस्य रचना प्राचीनकालेऽभवदिति कथ्यते जनैः । किन्त्वधुना प्राचीनमन्दिरस्य स्थाने नवीनमन्दिरस्य रचना किञ्चित्कालपूर्वमेव संजाता । भूमौ एकं चत्वरं निर्माय क्षतस्योपरि मन्दिरमिदं प्रस्तरखण्डैः निर्मितंवर्तते । दैर्ध्येणेर्दपंचदशफीटमितां वर्गाकारतां द्वाविशंतफीटमितां चोछ्रायतां दधाति । मन्दिरस्य शिखर प्रान्ते एकं कांस्यमयं कलशं दूरतः दृश्यमाना एका ध्वजा रक्तवस्त्रनिर्भिता विराजते ।

अस्मिन् मन्दिरे एकं शक्तिस्वरूप पाषार्णलिगं विद्यते । समलंकरोति पाषाण-चतुर्भुजा शक्तिमूर्तिरपि । सा च मन्दिरस्यान्तः गृहे पश्चिमभिन्तिकायां निर्मित काष्ठपीठिकामधितिष्ठति । विविधालंकारैरलंकृतायाः रक्तपरिधानेन सुशोभितायाः शक्तेः गुह्येश्वर्याः दर्शनं मन्दिरस्य द्वारादेव भवति । खड्गचक्रत्रिशूलगदादीनि सन्त्यत्र बहूनि आयुधानि । मन्दिरस्याभ्यन्तरो बाह्यतश्च ब्रह्मा, विष्णु, रुद्र, भैरव, द्वारपालदीनां मूर्तयः प्रतिष्ठन्ति ।

आसीत् पूर्वकालादेवास्मिन्पीठे शक्तेः दैनिकी पूजायाः प्रचलनम् । अधुनाऽपि इमां प्रतिवासरीय पूजां सेम्नग्रामस्य जोशी जातीयाः ब्राह्मणाः सम्पादयन्ति । पूजकाश्च ते सामग्रीणां व्यवस्थामत्र यात्रिभिस्समर्पितद्रव्योपहारैश्च कुर्वन्ति । मन्दिरस्य कार्यसंचालनार्थमत्र न का पि प्रबन्ध समितिः समितेरभावादत्र बहुव्यव-धानाः भवन्ति मन्दिरस्य कार्य संचालने मन्दिरेस्मिन् शक्तेस्सात्विकी-राजसी-तामसी त्रिविधा पूजायाः महत्वं दृश्यते । अत्र वैशाखमासस्य विषुवत्संक्रान्सां कार्तिकमासस्य च शुक्लद्वितीयायां (भातृद्वितीयायां) वारद्वयं प्रतिवर्षं गुह्येश्वरी दर्शनार्थं बृहद् मेलापकयोरायोजनं भवति । एतयोः संख्यातीता जनाः भक्ताश्चात्र समागत्य शक्तेः दर्शनं कुर्वन्ति, षोडशोपचारेण शक्तिमर्चयन्ति च ते देवनृत्यं, आर्तिक्यं स्तबपाठं, बलिदानं होमं चापि विदधति । मेलापकावसान समये समुदिता सर्वे जनाः पुष्पाञ्जलि-मादाय शक्तेःस्थानात् स्वगृहान् प्रतिनिबर्तन्ते ।

पुराणाध्ययनेनावगम्यते यदत्र शक्ति प्रतिवर्षे द्विवारं प्रत्यक्ष दर्शनप्रदानार्थं साक्षात् प्रकटी भवति[1]। अतः शक्तेर्दर्शनं पूजन-पाठ-यज्ञ-होमादिभिः जनाः सर्वान् कामानाप्नुवन्ति। देहान्ते परमं पवित्रं शक्ति स्थानं च प्राप्य परमानन्दस्यानुभवं कुर्वन्ति। विषुवत्संक्रान्त्यां भातृद्वितीयायां च साक्षाच्छक्ति अदृश्यभावेनात्र भक्तेभ्य ईप्सितफलं ददाति इति जनाः कथयन्ति। विषुवत्संक्रान्त्यां भातृद्वितीयायां च ये जनाः गुह्येश्वरी सिद्धपीठे, शक्तेः पीठपूजां लिंगपूजा, च सम्यग् कुर्वन्ति ते निश्चितमेव मनोवांछित फलं प्राप्नुवन्ति।

## नन्दभद्रेश्वरी सिद्धपीठम्

गुह्येश्वरीसिद्धपीठस्य पूर्वस्यांदिशि पौडीगढ़वाल जनपदस्य कोटक्षेत्रे झाँझड़ इत्यभिधेयस्य ग्रामस्य सन्मुखे स्थितस्य पर्वतस्योच्चशिखरे मेनानद्याश्च दक्षिणतटेऽस्ति नन्दभद्रेश्वरी सिद्धपीठम्[2]। विषयेऽस्मिन् पौराणिकी कथा प्रसिद्धा वर्तते—पुरा कश्चिद् नन्दभद्रेश्वर नाम राजाऽभूत्। स न्यायेन प्रजां पालनम् शत्रूणां शक्तिं तिरस्कृत्य स्वपराक्रमेण शीलेन च दिग्दिगन्तेषु ख्यातिमलभत। अस्यैधमानो पराक्रमं दृष्ट्वा बलिष्ठाः सर्वेशत्रवस्तेन सह युद्धं कर्तुमारभन्ते। प्राचीनकाले संग्राममिदमद्वितीयं संग्रामं बभूव। महति संग्रामेऽस्मिन् शत्रुभिः पराजितः नन्दभद्रेश्वरः त्यक्तवा राज्यलक्ष्मीं सिद्धपीठेऽस्मिन् समायात दृष्ट्वा चात्र स्वात्मानन्दरुपिणीं शक्तिं स्थानां स निश्चल-मनोभूय आस्थाय च बहूनि कालानि यावत् शक्तेरुपासनाञ्चकार। उपासनयाऽनया प्रसन्ना भूता शक्तिस्तं स्वकीयं स्वरूपं दर्शयामास। शत्रवस्तव शीघ्रमेव विनंक्ष्यन्ति, चिरकालयावञ्च त्वं राज्यलक्ष्मीं भोक्ष्यति इत्याशीर्वादमप्यददत्। शक्तेरित्याशिषं प्राप्य नन्दभद्रेश्वरी नाम्नाः शक्तेः स्थापना प्रतिष्ठा च स एवात्र चकार। अनन्तरं शत्रुभिश्चिरकालादपहृतराज्यमनुप्राप्य शक्तेः प्रसादादजातशत्रुरिव स राज्यलक्ष्मी-मभौक्षीत्। एतदारन्य नन्दभद्रेश्वरी सिद्धपीठं जगति प्रसिद्धम्। क्षेत्रीयजनैः पीठमिदं भुवनेश्वरी पीठमपि कथ्यते। पौडीनगर देवप्रयाग यातायात मार्गान्तराले स्थित खांडीखाल इति स्थानात् चतुष्क्रोश परिमितकोट नाम्नो यातायातमार्गमतिक्रम्य नन्दभद्रेश्वरी सिद्धपीठं गन्तुं शक्यते। पीठादस्मात् सर्वासुदिक्षु समानानुरुपाणां पर्वत-शिखराणां सुरम्योपत्यकानां उच्चावचानां कृषिक्षेत्राणां रामणीयकता जनानां चेतांसिरञ्जयति। अस्मिन् क्षेत्रे भारतीयसंस्कृतेरनुपोषकाः कृषिकार्यनिरताः कुशलवः

---

१. अतिगुह्यतमा ख्याता नाम्ना गुह्येश्वरीमतः।
वर्षमध्ये द्विवारंस्यातत्र दर्शन गोचरा॥ —के० १७४-५

२. सतः पूर्वदिशायां वै पीठमन्यन्महामते।
नन्दभद्रेश्वरीमत्र सर्वदेवनमस्कृता॥ —के० १७५-१
तत्रमेनेति विख्याता सुपुण्या सरिदुत्तमा।
जलस्पर्शेन तस्यातु मुच्यते सर्व पातकैः॥ —के० १८५-५

पटवश्च जनाः निवसन्ति। सिद्धपीठस्य वामभागेऽच त्रिगुणात्मिका देवी प्रतिष्ठति[1]। अत्र समीपवर्तिषु भूभागेषु कोटग्रामे स्थितं एकं प्राचीनं शंकरमन्दिरम् एका उच्चतमा माध्यमिकी शिक्षणसंस्था, विकास क्षेत्रकार्यालयं पशुचिकित्सालयं, चिकित्सालयञ्चापि विद्यते। उद्भवती सीतादेव्याः दर्शनमप्यत्र भवति शालीग्राम निर्मिते जानकी मन्दिरे। धार्मिक, सांस्कृतिक, राजनीतिक, सामाजिक क्षेत्रेषु इदंक्षेत्रमुत्तरोत्तरं बृद्धिं लभते। सिद्धपीठमिदं समुद्रतटादनुमानतः २५०० कीटावधि तुंगतां धारयति।

नन्दभद्रेश्वरी सिद्धपीठमन्दिरस्य रचना प्राचीनकाले एव समभवत्। अस्य जीर्णोद्धारं किञ्चित्कालपूर्वमेव मेदिन्यां पाषाणखण्डैः निर्मित वेदकायां "झांझड" इति नाम्नो ग्रामस्य निवासी स्वर्गीय पण्डित चक्रधर जुयालेन कृतम्। ज्ञायते इदं मन्दिरस्य वाह्यभित्यां शंखस्फटिकेन निर्मितपट्टिकायामुत्कटशिलालेखेन[2]। वर्तते इदं नूतन-मन्दिरं पाषाणखण्डैः सुश्लिष्टैः। दैर्घ्येणेदं पंचविंशतिफीटमितां वर्गाकारतां त्रिशंत्फीट-मितां चोच्छ्रुग्रतां दधाति। शीर्षप्रान्तेऽस्य विराजते एकं कलशं पित्तलनिर्मितम् एका चात्र पताका श्वेतरक्तपीतवस्त्रैः निर्मिता सुशोभते सा शक्तेस्त्रिगुणात्मिकायाः स्वरूप मुपलक्षयति। मन्दिरं परितः स्तम्भषोडशभिः परिवेष्टिता मनोरमा परिक्रमा अस्ति। यपरिक्रमणमिदं स्व० पं० विद्याधर जुयाल एव निर्मापितम्। अस्मिन्पीठे यात्रिणां निवास द्वे धर्मशाले विद्येते। अनयोरेकस्या निर्माणकार्यं नवदिल्यां गठित मन्दिरसमितिना सम्पादितम् अपरस्याः निर्माण तोषाख्येति ग्रामस्य वासिन्या मखुलीदेव्या प्रदत्तधनेन कारितम्। महिला मण्डलेन निर्मितं सुरम्यमेकं कीर्तनभवनमप्यत्र वर्तते। एतेषां भवनपरिक्रमादीनां निर्माण कर्तृणां परिचयं भवनानां भित्तिकासु उद्घटितशंख-स्फटिकपट्टिकासु उत्कटलेखैबधम्यते[1]।

---

१. तस्मिनेव महाभाग वामभागे सुसिद्धिदा।
गुणश्रीरिति विख्याता देव्यसौ त्रिगुणात्मिका॥
त्रेतायां सात्विकौ मूर्तिर्द्वापरे राजसीमता।
कलौ सा तामसी देवी ततोऽसौ त्रिगुणात्मिका॥ —के० १७५-६-७

२. ओं भुवनेश्वर्या महेशि श्रीसुन्दरी त्वच्चरणाज्ञयैव।
प्रातः समुत्थाय तव प्रियार्थं संसार यात्रामनुवर्तयामि॥

यह शिलालेख स्वर्गीय श्रीमान् चक्रधर जुयाल की पुण्यस्मृति में है। इन्होंने अपने जीवनकाल में ही अपनी अनन्यभक्ति के अनुरूप श्री भुवनेश्वरी मन्दिर के जीर्णोद्धार का अधिकांश कार्य पूर्ण कर लिया था। मन्दिर की शेष सेवा द्वैजूला भाइयों के सहयोग से सम्वत् २०१२ में हुआ।

१. यह धर्मशाला दिल्ली मन्दिर समिति ने सन् १९६७ में बनवाई थी उसी ने सन् १९७९ में इसे नया रूप दिया।

दूसरी धर्मशाला सम्वत् २७०४ में तोणख्या ग्राम निबासी मखुलीदेवी ने बनवाई।

मन्दिरस्य प्रधानद्वारेण सभाभवने प्रविश्य तत्र स्थापितमूर्तीनां गणेशशंकर भैरवादीनां दर्शनं भवति। भवनस्येदं पश्चिमद्वारेण जनाः शक्तेर्गर्भगृहं प्रविशन्ति। तत्र पश्चिमदिशि स्थित भितिकायां निर्मित वेदिकायां अष्टाभिर्भुजाभिः समलंकृतायाः पाषाणखण्डनिर्मितायाः रक्तवस्त्रधारिण्याः बहुभिरलंकारैरलंकृतायाः वैजयन्तिना उरोभागं विभूषितायाः मुकुटेन शिरं कर्णोकुण्डलाभ्यां मुखं चन्दनेन सुशोभितायाः विविधैरायुधैः समलंकृतायाः नन्दभद्रेश्वर्याः प्रतिष्ठित मूर्तेः दर्शनं भवति, दर्शनीयतमाः वह्वोऽन्येऽपि देवा अत्र प्रतिष्ठन्ति। सिद्धपीठेऽस्मिन् शक्तेर्दैनिकी पूजा भवति[१]। अस्याः पूजायाः सम्पादनं झांझड, भवान, बडुल, कड़ाकोटादीनां ग्रामाणां निवासिनः जुयालजातीयाः ब्राह्मणाः कुर्वन्ति। प्राचीन कालादेवात्र पशुबलिप्रथा प्रचलिता आसीत्, किन्त्वधुनेयंप्रथा समाप्तिं गता विगतवर्षेभ्यश्चात्र विद्वद्भिः केवला शक्तिः सात्विकी पूजा समारभ्यते।

अस्मिन् पीठे क्षेत्रीयाःजनाः शरदवसन्तयोर्नवरात्रिषु बृहद् मेलापकानामायोजनं कुर्वन्ति। मेलापकेषु बहवो जनाः सम्मिलिता भवन्ति। यात्रिणश्चात्र बहूनि छत्राणि, द्रव्योपहाराणि, सौभाग्यद्रव्याणि शक्तये समर्पयन्ति नवरात्रावसरेषु अत्र देवीभागवतपाठ, मार्कण्डेयपुराण, चण्डीपाठादीनां सम्यग् व्यवस्था भवति अखण्डदीपयवांकुर होमाभिषेकादीनां व्यवस्थाऽपि क्रियते मनीषिभिः। नवरात्रिषु साक्षाच्छक्तिरत्र निवसतीति कथ्यते। येषु शुभदिनेषु अत्र समागतानां भक्तानां शक्तेर्दर्शनेन पूजनेन च सर्वेमनोरथाः सिद्ध्यन्ति[१], नन्दभद्रेश्वरी देवी स्वभक्तानां आयुं श्रियं बलं कीर्तिं च विवर्धयति।

प्राचीनकाले नासीदत्र मन्दिरस्य संचालनार्थं काऽपि समिति। अधुना त्वत्र सुधीभिः गटिता समितयस्त्रिस्रः मन्दिरस्य संचालनं कुर्वन्ति। एताभिः समितिभिः संचालितमिदं सिद्धपीठं व्यवस्थितरूपेण विकसितं दृश्यते।

## दीप्तज्वालेश्वरी (ज्वालपादेवी) सिद्धपीठम्

सिद्धपीठमिदं ज्वालपादेवीति नामधेयं गढ़वालस्य पौडीजनपदस्य कपोलस्यूं क्षेत्रे विद्यते। अस्य स्थिति पौडीकोटद्वारयातायातमार्गान्तराले नावालिकानद्यः वामतटे वर्तते। स्थापना सम्बन्धी कथेयं प्रसिद्धा पुरा प्रजापतेः दक्षस्य यज्ञभूमौ यज्ञकुण्डे निर्वहन्त्याः सत्याः बदनात् प्रदीप्ताग्नि सदृशी ज्वालैका विनिर्गता। सोत्पतन्ती ज्वाला आकाशमार्गेणात्र समानीता पपातयेनेदं स्थानं ज्वालेश्वरी सिद्धपीठामिधेयेन प्रथितम्।

---

मन्दिर की परिक्रमा स्व० ब्रिगेडियर विद्याधर जुयाल ने अपने भाई नरेन्द्र दत्त जुयाल की पुण्यस्मृति में सम्बत् २०२८ में बनवाई।

कीर्तनभवन महिलामण्डल ने सन् १९७८ में बनवाया।

१. यस्तस्य मानसो भक्त्या शरत्कालेऽर्चनं मुने।
प्रकरोति मतिस्तत्र यत्र सा परमेश्वरी॥ —के० १७५-४

अस्यसिद्धपीठस्य माहात्म्य समन्धिनी, चापि पुराणेष्वियं कथा प्रचलिता वर्तते— पुरा किल पुलोमदैत्यस्यैका पुलोमजानाम्नी कन्या आसीत् सा युवती कदाचिद् देवराजानमिन्द्रमपश्यत् । इन्द्रस्य परमोत्कृष्टरूपं वीक्ष्य देवराजानं भर्तृ रूपेण प्राप्तिकामनया नवालकातटेऽस्मिन् पवित्रस्थले सा समायाता । आस्थाय च शक्तेरुपासनां कारयामास । किञ्चित्कालान्तरं पुलोमजायाः तपसः प्रभावात्सा शक्तिः प्रदीप्ताग्नि सदृशं साक्षात् ज्वाल्पादेव्याः स्वरूपं दर्शयामास । अस्याः दर्शनमात्रेणैव पुलोमजा स्वाभीष्टसिद्धिमवाप । तस्मिन्नेवकालै पुलोमजेयं ज्वालेश्वरी नाम्ना शक्तेः प्रतिष्ठाञ्चकार[1] । अस्मिन् विषयेऽन्या किम्वदन्त्यपि प्रसिद्धाऽभूत् प्राचीनकाले गढ़वाल क्षेत्रेऽस्मिन् यातायातमार्गाणामद्यतनीया सुव्यवस्था नासीत् । अतो यातायातव्यवस्था पदातिरूपेण सामग्रीणां वानयनं भारवाहकेभ्य अक्रियत । कस्मिंश्चित् समये एको विष्ठजातीयो जनः कोटद्वारनगराल्लवणमारं स्कन्धे निधाय नवलातटेऽत्र समागतः । भारंच भूमौ निधाय रात्रौ अत्रैवाशयिष्ट । प्रातः निद्रां विहाय यदैव स लवणभारमेवालाकयत् तदैव तत्रैकं पाषाणमयं शोभनं लिंगमपश्यत् । अहोः भारमिदं अनेन पाषाणेन द्विगुणीभूतमिति विर्तकितमनसा तल्लिंगमत्रैव निक्षिप्य भारमिदंस्वस्कन्धे स्वगृहमगच्छत् ।

रात्रौ स स्वप्ने प्रदीप्ताग्निमिव ज्वालां शक्तिं ददर्श । इयं शक्ति स्तमकथयत्— भो साधु ! प्रातरेव नवलानद्यास्तटें गच्छ, यत्र लवणभारस्थितं पाषाणलिंगमक्षिपत्वं तत्रैव तल्लिगमुद्घाट्य मदीयां स्थापनां प्रतिष्ठां च ज्वाल्पादेवी नाम्ना कुरु अखण्डदीपकस्या व्यवस्थापि सदैव कर्तव्या इति कथयित्वा सा तत्रैवान्तर्बभूव । शक्ति वचनान्यनुपालयन् स अपरेद्यु प्रभाते नवलातटं प्रत्याजगाम । अत्र शक्तेः ज्वाल्पायाः लिंगस्य च स्थापना प्रतिष्ठां च कारयामास । अखण्डदीपकस्य व्यवस्थाऽपि तत्कालादेवात्र समभूत् । एतदारस्य शक्तिरियं ज्वाल्पादेवी नाम्ना जगति प्रसिद्धाऽजायत ।

ज्वाल्पादेवी सिद्धपीठात् सर्वासुदिक्षु पर्वतानामुच्चावचानिशिखराणि सघनानि वनानि कृषि क्षेत्राणि च संदृश्यते । इदं निकषा पश्चिमीनवालिकानदी अविरलभावेन प्रवहति स्नानदर्शनाभ्यां जनानां पापान् प्रक्षालयति । सा दूधातोली पर्वतादुद्भूयइमां भूमिं पवित्रां करोति । सतपुल्यां च पूर्वनवालिकया सह मिलित्वा व्यासधाटे गंगायां विलीना भवति । नवलामुत्तीर्य चान्दकोट एकेश्वर क्षेत्रस्य सीमा प्रारभ्यते । इदं

---

१. अथान्यश्रृणु पीठं वै देव्याः परमकं शिवम् ।
पुण्यं नवालकातीरे तन्मानं योजनार्द्धकम् ॥
अतिपुण्यतमं पीठं सद्यः प्रत्ययकारकम् ।
दीप्तज्वालेश्वरी ख्याता सर्वसिद्धि प्रदायिनी ॥
पूर्वं तत्र पुलोम्नश्च कन्यायाराधिता पुरा ।
दृष्टतया प्रदीप्ताग्निज्वालेव नगकन्यका ॥ —के० १६५-१-३

स्थानं समुद्रतटात् ७५० मीटरावधि तुंगतां धारयति ।

सम्पूर्णानन्दसंस्कृत विश्वविद्यालयेन सम्बद्ध एको संस्कृत विद्यालयोऽप्यत्र वर्तते । विद्यालयेऽस्मिन् विशाल: पुस्तकालयो विद्यते, यस्मिन् वैदिक साहित्य लौकिक साहित्य, तान्त्रिक साहित्य-व्याकरण-दर्शन-हिन्दी-आंग्ल विषयाणां पञ्चसहस्राणि पुस्तकानि संकलितानि सन्ति । इदानीमस्मिन् विद्यालये पंचशिक्षका: पंचविंशच्छात्रा: गीर्वाग्वाण्यारनुशीलनं कुर्वन्ति । अध्ययन निरिक्षकेभ्य: शिक्षकेभ्यश्छात्रेभ्यश्चात्र शिक्षकावास-छात्रावासादीनां धर्मशालादीनाञ्च समुचिता व्यवस्था वर्तते । इमे छात्रा अध्यापकाश्च प्रतिदिनं ज्वाल्पादेवीमपि पूजयन्ति । व्यवस्थाभिरेताभि: विद्यालयोऽयं पीठस्यास्य माहात्म्यं वर्धयति ।

अधस्तात् प्रसिद्धयातायातमार्गस्य वीथिकायां एकं सिंहनामकं द्वारमधितिष्ठति । तस्मात् द्वारादर्धकिलोमीटरपरिमित पदातिपथमाश्रित्य एकेनापरेण विजयनामक द्वारेण प्रविश्य ज्वाल्पादेवी मन्दिरस्य सम्यग् दर्शनं भवति । मन्दिरमिदं दैर्ध्येण विंशतिफीटमितां वर्गाकारतां त्रिंशत्फीटमितां चोच्छ्रायतां दधाति । पाषाणखण्डै: निर्मितमिदं मन्दिरं एकस्यां वेदिकायां समधिष्टितं वर्तते । मन्दिरमिदमादिगुरुणा शंकराचार्येण निर्मापितमिति सर्वत्रप्रसिद्धि: विनिर्मिता मन्दिरस्य छदि: पाषाणपट्टिकाभि: दूरादेव दृश्यमाना शोभना पताका, कांस्यनिर्मितं कलशं, लोहमयं त्रिशूलं मन्दिरस्य शीर्षभागे विलसन्ति । अस्मिभ् पीठे समुपस्थितानां भवनानां प्राचीनता निर्माणकर्तृ णां च परिचय अमीषां भवनानां भित्तिकासु समुद्घटितशंखस्फटकपट्टिकासु उत्कट लेखेनावगम्यते । ज्वालेश्वरी मन्दिरस्यान्त: गृह प्रकोष्ठे पाषाणनिर्मिताया: सर्वांगसुन्दर्या ज्वाल्पाया: प्रतिष्ठा वर्तते । अनया मूर्त्या सह गणेशभैरवमुलोमजादीनां मूर्तीनां दर्शनमपि भवति । कल्याणमय्या: ज्वाल्पामूर्त्या। सम्मुखेऽखण्डदीपक: सदैव प्रज्वलति । संख्यातीतानि सन्त्यत्र रजतनिर्मितानि शक्तेरुपरि अवलम्बितछत्राणि । विराजन्तेऽत्र बहून्यायुधानि लोहनिर्मितानि अस्यां भूमावेव शक्तिस्वरूपमेकंलिंगमुद्घाट्य तस्योपरि मृतिकां विकीर्य ज्वाल्पादेव्या: स्थापनामकरोच्छंकराचार्य इति कथ्यते ।

चैत्रश्विनमासयोनवरात्रिषु अत्र बृहद् मेलापकानामायोजनं भवति । तेषु मेलापकेषु बहवो जना: सम्मिलिता भूत्वा बहून्युपहाराणि शक्ते: पूजनार्थं समपर्यन्ति । न केवलं केदारखण्डस्थजना अत्रागच्छन्ति अपितु सर्वे भारतीया: शाक्ता अत्रागत्य स्वाभीष्टसिद्धये शक्तेर्दर्शनं-पूजनं-होमं-यज्ञं च कुर्वन्ति ।

अत्र किञ्चित्कालपूर्वमेव गठितैका ज्वाल्पादेवी समिति: । सा अस्मिन्पीठे स्थित-मन्दिरस्य विद्यालयस्य च संचालनं करोति । अत्र स्थितानां सर्वेषां भवनादीनां च संरक्षणमियमेव समिति: करोति ।

अस्य क्षेत्रस्य निवासिन: पीठस्यास्य महतीं प्रशंसां कुर्वन्ति अत्र स्थितानां निवासिनां ,जनानां हृदये ज्वाल्पादेवी प्रति या श्रद्धा भक्तिश्च वर्तते सा वर्णनातीता ।

ज्वालपापीठस्य यात्रां कृत्वाः जनाः महत्पुण्यं प्राप्नुवन्ति ।[१] इयं ज्वालपाशक्ति भक्तानां सर्वाण्यशुभानि विनाशयति, सर्वान्मनोरथान् पूरयति । एभिः वैशिष्ट्यैः सिद्धपीठमिदं साक्षाद्देवीस्वरूपं मन्यते जनैः ।

## सुरेश्वरी-महेशानी सिद्धपीठम्

सुरेश्वरी-महेशानी इति सिद्धपीठस्य स्थितिः पौडीजनपदस्य सुरकूट पर्वतस्य सुरम्योपत्यकायामस्ति ।[२] शक्तिभक्तिशालिनो भक्ताः प्रसिद्धनगरं ऋषिकेशमतिक्रम्य मुनिकीरेती नाम्ना प्रसिद्धे स्थाने गंगामुत्तीर्य स्वर्गाश्रमं प्राप्यं तस्मादष्टमील-परिमित पदातिपथमाश्रित्य देवीदर्शनं लभन्ते । अन्योऽपि मार्गः लक्ष्मणझूलेति स्थानात् चतुष्मीलपरिमित पथमुत्क्रम्य फूलचट्टी वर्तते तस्मात् स्थानात् चतुष्मीलपरिमितपथ मबलम्ब्यमानः भक्ता अत्रागन्तुं शक्नुवन्ति । पदगामिभिः यात्रिभि एताभ्यां द्वाभ्यामेव मार्गाभ्यां महेशानी सिद्धपीठमागन्तुं शक्यते ।

सुरकूट पर्वतोऽयं मणिकूट पर्वतानाम्नोऽपि प्रसिद्धः । शैलश्चायं समुद्रतटाद-नुमानतः पंचशताधिकाद्विसहस्रफीटमितां वर्तते । पर्वतस्यास्य रमणीयोपत्यकायां नीलकण्ठ महादेव मन्दिरं परमसुन्दरम् साधूनामाश्रमं च विद्यते । तस्यैव समीपे अर्द्धक्रोशपरिमितपथे गम्यमाने महेशानी सिद्धपीठस्य दर्शनं भवति । इदं सिद्धपीठं सुरेश्वरी-भुवनेश्वरी वा सिद्धपीठमपि कथ्यते जनैः मणिकूटादपि शक्तिभवनस्य सुन्दरता दृश्यते ।[३] महेशानीनीलकण्ठसिद्धपीठयोर्विषये पौराणिकी गाथेयं प्रसिद्धा-पुरा कस्मिश्चित् समये श्वेतवराहकल्पे देवदानवाश्च समुद्रस्य मन्थनं चक्रुः मथ्यमानात्त-स्मादुदधेर्हालाहलंविषं समुद्गतम् । विषस्य प्रसरदुग्रवेगस्य भीषणज्वालभिः दिशः विदिशश्च व्याप्तान् वीक्ष्य भीतादेवासुराः सुरक्षामलभन्तः सदाशिवं शरणं ययुः । त्रिलोक्याः कल्याणार्थं उमया सह कैलासे विराजमानं शिवमवलोक्य ते देवास्तं स्तुतिभिः प्रणेयुः । प्रजानां स्वस्त्यर्थं भूतभावनो भगवान् शिवस्तद्विषं करतले निधाय

---

१. सर्वयज्ञेसु यत्पुण्यं सर्व तीर्थेषु यत्फलम् ।
तत्फलं समवाप्नोति तेन चैकेन कर्मणा ॥
इति ते कथितं दिव्यं दीप्तज्वालेश्वरी स्थलम् ॥ —के० १६८-२८-२९
कोटिकालानल ज्वाला सेवनीया विधानतः ।
सर्वसर्वादि भूतेयं कोटिसिद्ध प्रदायिनी ॥ —शं० सं० तं ५-६४

२. शृण्वत्र परमं पीठं सद्यः प्रत्ययकारकम् ।
गंगायाः पश्चिमे भागे सुरकूटगिरी स्थितः ॥
तत्र सुरेश्वरी नाम्ना सर्वसिद्धिप्रदायिनी ।
यस्याः सन्दर्शनादेव शिवलोके महीयते ॥ —के० १३३-१०-११

३. मणिकूटगिरीश्रेष्ट पीतवर्ण त्रिलोचन ।
तदद्यारोहणं कृत्वा द्रक्ष्यामि भवनं तथा ॥ —योगिनी तंत्रात्

स्वमुखे प्रक्षिप्य कण्ठ एव रुरोध । जलकल्मषः स कालकूटः शिवस्याप्युपनि स्वसामर्थ्यं प्रदर्शयन् तं नीलकण्ठं कृतवान् । तद्विषपानैव शंकर नीलकण्ठनाम्ना प्रसिद्धो बभूव ।[1]

विषपानेन व्याकुलीभूतः शंकरः मणिभद्राचन्द्रनद्योः संगमस्थले कन्दरस्यां समाधिस्थो बभूव । शंकरेण विना सर्वेदेवाश्चिन्तामासुः शंकरस्यान्वेषणाय सत्या पार्वत्या सह दिवौकसः सर्वासु ककुप्सु अटमानाः मणिकूटपर्वतकन्दरां प्रापुः । तत्र समाधिस्थितं शंकरं निरीक्ष्य अभिवन्द्य च देवास्तु स्वर्लोकं ययुः परं देवीपार्वतीसती तु पुनरपि शंकरमभिलषन्ती विविधविटपविस्तृतस्वर्णलतारुढ़ पक्षिणां कलरैवः प्रति-बोध्यमान जलकुक्कुटकारण्डवकुलहसादिपक्षिभिर्विचित्रनादितैरमलजलाशयैरतिरमणीयं तदुपवनं गत्वा तपस्तप्तुमारेभे । पार्वतीशंकरौ एतस्मिन्स्थाने विशंतिसहस्राणि वर्षाणि यावत् समाधिस्थौ बभूवतु । अथ पार्वतीशंकरयोस्तपसाधनां प्रशंसन्तस्तस्मिनाश्रमे देवर्षिगन्धर्वाः विष्णुब्रह्माप्रभृतयो देवास्त्रिदशालयात् पुष्पाणि वर्षयामासुः । तप साधनानन्तरं रामणीयके आश्रमेऽस्मिन् शक्तिशंकरौ बहूनि वर्षाणि यावत् प्रणय-विलासमकुरुताम् ।[2]

यद्यपि इदं सिद्धपीठं सतेः पार्थिवशरीरस्य दक्षिण स्तन पतनेन समुत्पन्नतां गतमासीत् । तथापि पार्वतीशंकरयोस्साधनेन शंकरस्य तपस्यास्थलं नीलकण्ठ नाम्ना शक्तेस्तपस्या स्थलं व महेशानी सिद्धपीठ नाम्ना प्रथिते बभूवतु । सतेः पार्थिवशरीर-स्यांगपतनस्थलमेव पार्वत्यास्तपसाधनास्थलं बभूव । कालान्तरे शक्तिस्तपस्यास्थले शक्ति मन्दिरं शंकरस्तपस्यास्थले च शंकरमन्दिरं भक्तैः निर्मापितम् ।

केदारखण्डस्य सिद्धपीठेषु पीठस्यास्य महेशानी नामधेयस्य महती विशेषता वर्तते । सुदूरेभ्यः स्थानेभ्य पदगामिनो यात्रिणोऽनेकान् कष्टान् विगणय्य समागत्यत्र विविधैः पूजनोपहारैश्च देव्या आराधना कृत्वा इहलोके सर्वेश्वर्यं प्राप्तुवन्ति। देहत्यागअनन्तरं च तान् शक्तेः कृपया तत्पदप्राप्तिर्भवति । नीलकण्ठस्य यात्रिणः महेशानी सिद्धपीठस्य यात्रा अवश्यमेव कुर्वन्ति ।

पूर्वकालेऽस्मिनाश्रमे नीलकण्ठसंज्ञ के शक्तिशंकरयोः प्रसादात् सप्तलक्ष-राक्षसाः मुक्तिं गताः ।[3] रन्तिदेवो महीपतिरपिल्वाभीष्ट प्राप्तये शंकरस्य प्रसादनार्थमत्र

---

१. ततः करतलीकृत्य व्यापिहलाहलं विषम् ।
अभक्षयन्महादेवः कृपया भक्तवत्सलः ।।
तस्यापि दर्शयाभासं स्ववीर्यं जलकलमषः ।
यच्चकार गलेनीलं तच्च साधोर्विभूषणम् ।। श्रीमद् ८-७-४२-४३

२. तत्रदेवी महेशानी ब्रह्मादिभिरभिष्टुता ।
यत्र तु श्रीमहादेवः पार्वत्या सहितः प्रभुः ।
समक्षं क्रीडते तत्र दृश्यते पुण्यकृज्जनैः । के० ७९-८

३. ययुः परमिकां तन्वी गतिं श्रुणु ममप्रिये ।
नीलकण्ठाख्यतीर्थेषु सप्तलक्षाणि राक्षसाम् ।।

तीव्रतपश्चकार ।[1] प्राचीनकाले एव चन्द्रवंशीयेन महीपतिना राजारजिना देवलोकं विजित्य तत्रैव स्वराजधानीमुद्घोषिता । पुनरपिस्वराज्य प्राप्तये इन्द्रेणात्र शक्तेराराधना तपश्चरतां विहिता । तस्मात् कालादेव पर्वतमिदं सुरकूटसंज्ञकं, सिद्धपीठंचात्र सुरेश्वरी नामधेयं बभूव । सुरकूटपर्वतमिदं रामगिरि चापि कथ्यते ।

महेशानी सिद्धपीठस्थले एकं सुन्दरं प्राचीनमन्दिरमस्ति । अस्य मन्दिरस्य रचना गतभूते मन्वन्तरेऽभूदिति जनाः कथयन्ति । किन्त्वस्य मन्दिरस्य वास्तुकला निर्माणशैली च नास्य अतिप्राचीनतां दधाति । अश्मचूर्णेन प्रस्तरखण्डेभ्यश्च शक्तिभवनस्य त्रिशत्फीटवर्गाकारचत्वरस्य मध्यभागे विंशतिफीटवर्गाकार क्षेत्रे रचना संजाता । शिखरप्रदेशेऽस्य पित्तलधातुनिर्मितं चन्द्रिकेव धवलराग शोभितं कलशमस्ति । मन्दिरस्यास्य वहिर्भागे एकं स्तम्भमस्ति, तस्य च शीर्षभागं पंचफीटावधि समन्तम् अश्मचूर्णेन प्रस्तरखण्डैश्च निर्मितम् ।

शक्तिभवनायान्तर्गृहे रक्तवस्त्रसमावेष्टितायाः एकस्याः चतुर्भुजाधारिण्याः शक्तिमूर्तेः दर्शनं भवति । एकं च तत्र पाषाणमयंलिङ्गमपि विद्यते । मन्दिरस्य दक्षिणदिशि चण्डभैरवमन्दिरे वर्तते नाति बृहद् भैरवस्य पाषाणनिर्मिता प्रतिमा ।

शक्तेः कालभैरवस्य च पूजनमत्र प्राचीनसमये पशुबलिनासम्पादितमासीत् । साम्प्रतं तु इयं परम्परा समाप्तिं गता दृश्यते । अधुना तु भक्तैः शक्तेर्पूजा सात्विकी विधिना सम्पाद्यते । शाक्तारपि कल्नाणहेतवे शक्तेपूर्जनं-जप-तप होम पुष्पादीनां सौभाग्यद्रव्यादीनां च समर्पणं कृत्वा सम्पन्नं कुर्वन्ति । भक्तिपूर्वक सम्पादितेन पूजनेन भक्ताः पुत्रपौत्रादिधनसम्पत्तयः समुपलभ्येह अन्ते उमालोकं गच्छन्ति ।[2]

महेशानी सिद्धपीठे देव्याराधनाय भक्ताः प्रायः प्रतिदिनमागच्छन्ति किन्तु

---

मुक्ति प्राप्तानि तत् क्षेत्रं श्रृणु देवी यथातथम् ।
तत्र शुम्भनिशुम्भाख्यौ पर्वतौ द्वौ महोन्नतौ ॥ —के० ७९-५-६

१. एकदा तत्र रम्भोरु ! रन्तिदेवो महीपतिः ।
चकार तु तपस्तीव्रं तोषयन्मनसा शिवम् ॥
समक्षं गतवांस्तस्य ह्यचिरेण सदाशिवः ॥ —के० ७९-९
स्तनमिदं भुवि रामगिरौ गतं भणति दक्षिणजन्तु शुभप्रदम् ।
शुभमतिं तु शिवां कुरुते ततो ब्रजति भैरवतामिह चण्डकः ॥
—द० सं० इ० २६

२. धूपैर्दीपैश्च नैवेद्यैर्बलिभिमेषबर्करः ।
महिषैश्च महाभाग सुरयन च द्विजेतरः ॥
पूजयिष्यति यो मर्त्यो राज्यं दास्यामि तस्य वै ।
अपुत्रो लभते पुत्रं धनार्थी लभते धनम् ।
कन्यार्थी लभते कन्या स्वार्गार्थी स्वर्गमाप्नुयात् ।
मोक्षार्थी लभते मोक्षं सर्वो धन्यतरो भवेत् ॥ —के० १३६-२०-२२

आश्विनमासस्य शुक्लपक्षस्याष्टम्यांतिथौ (महाष्टम्यां) अत्र एकस्य वृहद् मेलापकस्यायोजनं प्रतिवर्षं भवति। कालेऽस्मिन् भक्ताः सुदूरस्थेम्यस्थानेभ्योऽत्रागत्य यथाशक्ति पूजोपहारेण देवीमर्चयन्ति। अस्य मेलापकस्य महत्वं सिद्धपीठेऽस्मिन् अतिप्राचीन कालादेवामन्यत। महेशानी सिद्धपीठस्य समीपे नीलकण्ठमन्दिरमस्त्येव। बहूनि चान्यानि सिद्धि क्षेत्राण्यपि सन्ति निकटवर्तीनि नाक्षत्रीनदी, पंचवरानदी, नन्दिनीनदी, पंकजानदी, विष्णुपुष्करतीर्थं, बल्लभारतीशा सिद्धकोट, सिद्धगुहा, सिद्धबाबास्थल, भद्रकाली, चामुण्डादेवी, चन्द्रभद्रानदी मणिभद्रानदी, झिलमिलगुहा, गणेशगुहा, इत्यनेकेषां प्रसिद्धतीर्थस्थलानां च महतीविशेषता संलक्ष्यते। शुम्भनिशुम्भसंज्ञकौ द्वौपर्वतौऽपि अत्र विराजेते। महेशानी सिद्धपीठे यात्रिणः प्रभूतधनान्युपहाराणि च समर्पयन्ति। यात्रिभिः भक्तैश्च समर्पितानामुहाराणामुपभोगः मन्दिरस्य पूजन प्रबन्धकेन एव क्रियते। अत्र नास्ति काऽपि समिति प्रबन्धकर्त्री। अतः स्वभोगविलाशेषु धनव्ययं कुर्वन्ति। पूजा प्रबन्धकोऽयं मन्दिरस्य सुरक्षार्थं यात्रिणां च सुविधार्थं कथमपि न प्रयतते।

महान्तौ पुरुषाः भारतीयाः देवीभक्ताश्चात्र प्रतिवर्षमेकवारंतु महामहिम शालिनः सिद्धपीठस्यास्य[1] दर्शनं कर्तुं प्रयतन्ते। भक्तैः सर्मपित पूजोपचारं स्वपत्या सह शक्तिरगृह्णाति इति मन्यते।[2]

---

१. एतत्पीठसमं पीठं त्रैलोक्ये न हि विद्यते।
यस्त्वत्र अपि विप्रेश त्रिरात्रं नियतेन्द्रियः॥
प्राप्नोति परमां सिद्धिं सत्यमेव न संशय॥ —के० १३३-१७
इदं मे परमं देव-भजिष्यन्ति महेश्वरीम्॥ —के० १३६-१८

२. पतिपूजा बिना पूजां न गृह्णायि कदाचन।
अत एव महेशानी आदौलिगं प्रपूजयेत्॥ —मा० भे० त० ७-५५



मायादेवी सिद्धपीठम्



मनसादेवी सिद्धपीठम्



चण्डीदेवी (सिद्धपीठम्)



राजराजेश्वरी सिद्धपीठम्



गौरी महिषमर्द्दिनी सिद्धपीठम्



गुह्येश्वरी सिद्धपीठम्



सुरेश्वरी महेशानीसिद्धपीठम्



ज्वालेश्वरी (ज्वालपादेवी) सिद्धपीठम्



यन्त्रस्य शिलायाश्चपरिभाग

## अष्टमोऽध्यायः

### १. महत्कुमारिका क्षेत्रे सिद्धपीठानां विशेषवर्णनम्

कुंजकूट पर्वतारम्याकनखल क्षेत्र पर्यन्तं निर्धारित क्षेत्रमिदं महत्कुमारिका नामधेयं बिस्तीर्णं वर्तते। क्षेत्रस्यास्य भारतभूमौ सर्वेतो ऽधिकं महत्वं वर्तते। क्षेत्रस्यास्य प्रमुखं तीर्थस्थानं गंगाद्वारं, कनखल क्षेत्रं, ऋषिकेश क्षेत्रं, वीरभद्राश्रमं लक्ष्मणझूला, शिवानन्दाश्रमं चास्ति। गंगाचन्द्रभागानद्योरत्र महती प्रसिद्धि रस्ति क्षेत्रेऽस्मिन् सन्त्यसंख्यानि पुण्यस्थलानि मन्दिराणि च यानि हिमालस्य केदारखण्डस्य च देवभूमित्वं ख्यापयन्ति। केदारखण्डस्य अन्येषां क्षेत्राणामपेक्षा अस्य क्षेत्रस्य समलत-भूमौ निवसत्सु जनेषु प्राचीन-संस्कृतेरपेक्षा नूतनायाः संस्कृतेः प्रभावं सर्वतो दरीदृश्यते। अस्मिन् क्षेत्रे हरिद्वार-ऋषिकेश-देहरादून-नरेन्द्रनगर इत्येतानि महान्ति प्रसिद्ध-नगराणि सन्ति। ऋषिकेशनगरं निकषैव एकं महत् औषधिनिर्माणोद्योगं विद्यमानमस्ति। क्षेत्रस्यास्य प्रमुखाः देवताः शिव विष्णु-हनुमान दुर्गा एवं रूपा सन्ति किन्त्वत्रत्यानां जनानां विशेषतो वनितानां सिद्धपीठेषु बिमली आस्था दरीदृश्यते। सर्वेषां स्वेष्ट-कार्याणां पूर्तये साधकाः जनाश्चापि सिद्धपीठानां दर्शनं तत्र स्थितानां शक्तिनां पूजनं एकान्ततः साधनंमन्यन्ते। क्षेत्रे ऽस्मिन्-महत्कुमारिका-अनंगा-मुण्डमालेश्वरी-मनसा-देवी-मायादेवी-रतिप्रिया-चण्डीदेवी-श्रद्धा इत्येतान्यष्टसंख्यकानि सिद्धपीठानि प्रतिष्ठि-तानिसन्ति येषां विशेषवर्णनमधस्तात् क्रियते—

### महत्कुमारिका (कुञ्जापुरी) सिद्धपीठम्

गढ़वाल टिहरी जनपद स्थितस्य नरेन्द्रनगरस्य पृष्ठभागे एको विशालः कुज्जनामपर्वतोऽस्ति।[1] महतः पर्वतस्यास्य उच्चशिखरे महत्कुमारिका सिद्धपीठमस्ति।[2] पर्वतश्चायं समुद्रतटाच्चतुःसहस्रफीटावधितुंगतां धारयति।

---

१. तस्मादुत्तरभागे हि कूञ्जकूट इति स्मृतः।
तत्र वै संस्थिता बाला सर्वसिद्धि प्रदायिनी॥ —के० १४०-१६

२. तस्मात्पश्चिमदिग्भागे श्रृणु दिव्यं शुभप्रदम्।
महत्कुमारिका पीठं सद्यः प्रत्ययकारकम्॥
तत्र सर्वेदेवगणाः निवसन्तितदर्चकाः।
इदं कुमारिकास्थानं न त्यजन्ति महामुने॥ —के० १४०-१-२

सिद्धपीठस्यास्य दक्षिणतोऽवलोक्यते चन्द्रभागाऽभिधेया नदी। ऋषिकेश-नरेन्द्रनगर-हरिद्वारादीनां नगराणां रामणीयकताचापि दरीदृश्यते स्थानादस्मात् वनसुन्दरी परितोऽत्र सर्वासुदिक्षु स्वकीय पार्वतीयसौन्दर्येणलावण्येन च जनानां मनांसि मोहयति। प्रसिद्धस्थानात् नरेन्द्रनगरात् क्रोशद्वयपरिमितपदातिपथमतिक्रम्य महत्कुमारिका सिद्धपीठं दृष्टि पथमायाति।

सत्याः पार्थिवशरीरस्य विष्णुचक्रकर्तितकरभागपतनादिदं सिद्धपीठं संजातम्। अत्र विषये किंवदंती चापि प्रसिद्धाः-एकदा सत्याः पार्थिवशरीरेऽवसानतांगते अर्द्धनारीश्वरो भगवान् शंकरः सत्याः विरहशोकेनाकुलोभूत्वा पृथिव्यां परिभ्रमन् कुब्जकूटपर्वतस्य श्रृंगं समागतवान्। विभावर्यां स तत्र एकांदेवीं कुमारीकन्यां ददर्श सा च शक्तिरूपाऽसीत्। तस्या दर्शनमात्रेण विमुक्तशोका शंकरस्तस्याः देव्याः प्रतिष्ठामत्र महत्कुमारिका नाम्ना कारयामास। तस्याः प्रारम्भिकी पूजाऽपि शंकरेण कृता।

महत्कुमारिका सिद्धपीठे एकमतिजीर्णं प्राचीन शक्तिमन्दिरमस्ति। इदं दैर्ध्येण विंशतिफीटमितां वर्गाकारतां पञ्चदशफीटमितां चोच्छ्रायतां दधाति। मन्दिरस्यास्य रचना जगद्गुरु शंकराचार्य कारयामासेति सर्वम् प्रसिद्धम्। मन्दिरस्य शिरसि एकं कलशमेका च ध्वजा विलसति। मन्दिरस्यान्तः गृहे एकं पाषाणमयं शक्तिलिंगं वर्तते। एकं चात्र वर्तुलाकारबिलमस्ति तस्मिन्विले शरदीयासुनवरात्रिषु प्रादुर्भवति लिंगमेकं शक्ति स्वरूपात्मकमिति जनाः कथयन्ति। सिद्धपीठेऽस्मिन् द्वे धर्मशाले वर्तते। एकं चात्र कालभैरवमन्दिरमस्ति। तस्यान्तर्गृहेएका पाषाणनिर्मिता भैरवस्य मूर्तिः वर्तते।

किञ्चित्काल पूर्वयावदस्मिन्पीठे बलिप्रथायाः प्रचलनमासीत। अधुना त्वत्र शक्तेर्विशिष्ठापूजा सात्विकविधिना सम्पाद्यते। दैनिकी पूजा अत्र न भवति। नास्ति पूजनसामग्रीणामत्रकाऽपि व्यवस्था। ये जना अस्य पीठस्य यात्रां कुर्वन्ति, ते शक्तेर्पूजनसामग्रीणां व्यवस्थाऽपि स्वयमेव विदधति।

क्षेत्रीयाः जनाः शारदीयासुवासन्तीयासु च नवरात्रिषु अस्मिन् पीठे बृहद् मेलापकानामायोजनं कुर्वन्ति। प्रतिवर्षं आश्विनकार्तिकमासयोरत्र एकस्य राष्ट्रीय बृहद्मेलापकस्यायोजनमपि भवति। इदमायोजनं उत्तर प्रदेश सरकारेण सम्पाद्यते। अस्मिन् मेलापके संख्यातीताः जनाः सम्मिलिता भवन्ति। समयेऽस्मिन् बहवो नेतारोऽधिकारिगणाश्चात्र समागत्य भक्तैः सह शक्तेर्पूजनं दर्शनं यज्ञं स्तवपाठं होमं नृत्यं च कुर्वन्ति, बहूनि च ते द्रव्योपहाराणि शक्तये समर्पयन्ति।

अस्मिन् पीठे कार्यसंचालनस्य सम्यग् व्यवस्था नास्ति। तपोवन निवासी एको क्षत्रिय मन्दिरेऽस्मिन् समर्पितं धनमुपहारांश्च गृह्णाति। धनेनानेन स स्वपरिवारं पुष्णाति। सुविपुलमपि धनं प्राप्य स किञ्चिदपि व्ययं न करोति सिद्धपीठस्य संरक्षणार्थे। व्यवस्थार्थमत्रैकस्याः समितेः परमावश्यकता दृश्यते। सा एव मन्दिरस्य सम्यग् संचालनं कर्तुं शक्यते। ये जनाः महत्कुमारिकापीठे समागत्य देव्याः दर्शनं पूजनं च कुर्वन्ति ते निःसन्देहं वांछितफलं प्राप्नुवन्ति। अत्र नवकन्यकेभ्यो भोजनं प्रदानस्य

महत्‌माहात्म्यं वर्णयते ।[1]

ये जनाः महत्कुमारिका सिद्धपीठे—रूद्रयामलस्यान्तर्गत गौरीतंत्रैर्वार्पित कुंजिका मंत्रजप[2] स्तोत्रपाठं[3] च कुर्वन्ति ते सर्वान् कामानाप्नुवन्ति[4] ।

---

१. इयं कुमारिका देवी भवमुक्ति प्रदायिनी ।
यस्यांदर्शनमात्रेण शिवं च लभते परम् ॥
धन्याः सुकृतिनो लोके कुमारी पूजका मुने ।
तेषां वै दर्शनादेव पापं वर्षकृतं दहेत् ॥ —के० १४०-५-६
कुमारी पूजनफलं मया वक्तुं न शक्यते । —काली तं० श्लो० २७
कुमारी भोजनादेव कुमारी पूजनादपि ।
कुमारी चिन्तनादेव त्र्यैलोक्य विजयी भवेत् ॥ —श० सं० तं० ३७-५३
कुमारी पूजयित्वा तु ध्यात्वा देवीं सुरेश्वरीम् ।
पूजयेत्परया भक्त्या पठेन्नाम शताष्टकम् ॥
तस्यसिद्धिर्भवेद्देवी सर्वैः सुखरैरपि ।
राजानो दासतां यान्ति राज्यश्रियमवाप्नुयात् ॥
—विश्वसार तं० दुर्गाष्टोतरशतनाम स्तोत्र १८-१९

२. ओं ऐं ह्रीं क्लीं चामुण्डायैविच्चे ॥ औ ग्लौं हुं क्लौं जूं सः ज्वालय ज्वालय ज्वल ज्वल प्रज्वल प्रज्वल ओं ह्रीं क्लीं चामुण्डायै विच्चे ज्वल हं सं लं क्षं फट्स्वाहा ॥ इति मंत्रः ॥

३. नमस्ते रूद्ररूपिण्यै नमस्ते मधुमर्दिनि ।
नमः कैटभहारिण्यै नमस्ते महिषार्दिनी ॥
नमस्ते शुम्भहन्त्र्यै च निशुम्भासुरघातिनि ।
जाग्रतं हि महादेवि जपं सिद्धं कुरुष्व मे ॥
ऐंकारी सृष्टिरूपायै ह्रींकारी प्रतिपालिका ।
क्लींकारी कामरूपिण्यै बीजरूपे नमोस्तुते ॥
चामुण्डा चण्डघाती च यैकारी वरदायिनी ।
विच्चे चाभयदा नित्यं नमस्ते मंत्ररूपिणि ॥
धां धीं धूं धूर्जटे पत्नी वां वीं वूं वागधीश्वरी ।
क्रां क्रीं क्रूं कालिका देवि शां शीं शूं मे शुभकुरु ॥
हुं हुं हुंकाररूपिण्यै जं जं जं जम्भनादिनी ।
भ्रां भ्रीं भ्रूं भैरवी भद्रे भवान्यै ते नमो नमः ॥
अं कं चं टं तं पं यं शं वीं दुं ऐं वीं हं क्षं ।
धिजाग्रं धिजाग्रं त्रोटय त्रोटय दीप्तं कुरु कुरु स्वाहा ॥
पां पीं पूं पार्वती पूर्णा खां खीं खूं खेचरी तथा ।
सां सीं सूं सप्तशती देव्या मंत्रसिद्धिं कुरुस्वमे ॥

४. अति गुह्यतरं देवि देवानामपि दुर्ल्लभम् ।
गोपनीयं प्रयत्नेन स्वयोनिरिव पार्वति ॥

## अनङ्गा (भारती) सिद्धपीठम्

पुरा कस्मिश्चिद् समये रैम्यनामको नृपतिरासीत्। स स्वाभीष्ट सिद्धये कुब्जरूपं कृत्वा आस्थाय च त्रिवेणीघट्टस्थिताम्रवृक्षस्याश्रये विष्णोः प्रसादनार्थं तीव्र-तपश्चकार। तदारभ्य पुण्यप्रदं क्षेत्रमिदं कुब्जाम्रक नाम्नः प्रसिद्धम्[१]। रैम्यस्येन्द्रिय-निग्रहेण क्रियमाणस्य तपसः प्रभावादिदं क्षेत्रं हृषीकेश नाम्नोऽपि लोके विख्यातमभूत्। त्रेतायुगे रामचन्द्रस्य भ्राता भरत इदं स्थानं स्वनिवासाय पर्यचिनोतीत्यनेन इदं क्षेत्रं भरताश्रम नाम्नोऽपि प्रसिद्धतां गतम्[२]। कथ्यते प्राचीनकाले ऋषयः शिरोकेशान् अत्र विमुंच्य केदारखण्डस्य यात्रामकुर्वन्, येन स्थानमिदं ऋषिकेश नाम्नः प्रथितम्। सम्प्रति तु एकं नगरमस्य सौष्ठवं वर्धयति।

ऋषिकेश नगरस्थित भरताश्रमे अनंगेति नामधेयं शक्तिसिद्धपीठमस्ति पीठस्यास्य स्थापना अत्र समभवदतिप्राचीनकाले एवास्यपीठस्य विषये प्रचलितेयंगाथा —इदं पीठ सतेः पार्थिवशरीरस्य गुप्तांगपतनेन सञ्जातम्[३]। कालान्तरे अस्मिन्पीठे

---

मारणं मोहनं वश्यं स्तम्भनोच्चाटनादिकम्।
पाठमात्रेण संसिद्धयेत् कुंजिकास्तोत्रमुत्तमम्॥

१. यस्मादाम्रं समाश्रित्य कुब्जरूपेण वै त्वया।
दृष्टोऽस्मि रैम्य तस्माद्वै कुब्जाम्रकमितिस्फुटम्॥
तीर्थमेतन्महापुण्यं करिष्यन्त्यमिधानातः।
अस्मिन्क्षेत्रेऽपि ये मर्त्याः स्नानं दानं जपादिकम्॥
भविष्यतिमहाभाग तत्सर्वं कोटिसंख्यकम्॥
करिष्यन्ति निवासं च तीर्थेऽस्मिन् प्रवरे नराः।
प्राप्स्यन्ति परमं स्थानं पुनरावृत्तिदुर्ल्लभम॥
पापिनश्चापि विप्रेन्द्र मृता विष्नुमवाप्नुयुः।
पितरस्तस्य हृष्यन्ति यस्यास्मिन् क्षेत्रके स्थितिः॥ —के० ११६-३१-३४

२. कुब्जाम्रके महातीर्थे वसामि रमया सदा।
हृषीकाणि (इन्द्रियाणि) पुराजित्वा दर्शः सम्प्रार्थितस्त्वया॥
यदैवाहं तु ऋषीकेशो भवाम्यत्र समाश्रित।
ततोऽस्या परकं नाम हृषीकेशाश्रितं स्थलम्॥
त्रेतायुगे दाशरथिनाम्ना भरतसंज्ञितः।
तुर्योभागो मदीयो वै भविष्यति सहाग्रजः॥
शंकरः शंकरः सापात्पुनर्मां स्थापयिष्यति।
कलो भरतनामानं वदिष्यन्ति महीतले॥
—के० ११६-३८-४१, वराहपु० अं० १२६

३. मातासिद्धवने लक्ष्मी अनंगा भरताश्रमे।
जालन्धरे विश्वमुखी ताराकिष्कन्धपर्वते॥ —देवीभा० ७-३०-७६

कालीदेव्याः प्रादुरभूत्। समुद्भूता च सा स्वाभिमानेन पराक्रमेण च देवदानवयोर्युद्धे अनेकान् दैत्यान् जघान। एतत्कर्म प्रशंसन्तः सर्वेदेवाः स्वर्लोकादत्र पुष्पंवर्षा चक्रुः। ते समागत्य चात्र एतस्या शक्तेरनङ्गापीठोद्भवायाः कृष्णवर्णायाः स्थापना प्रतिष्ठा च माहेश्वरीति नाम्ना कारयामासुः। तदारभ्य अत्र माहेश्वरीति नाम्ना शक्तिजगति विख्याता बभूव[1]। भरताश्रमनिवासिनीयं शक्तिःभारती नाम्नाऽपि लोके प्रथिताऽभूत्[2]। परमपवित्रमिदंभरताश्रमक्षेत्रमासुन्देश्वर्याः हेमवती हिंवलनदी पर्यन्तमवगम्यते[3]। क्षेत्रेऽस्मिन् प्रतिष्टितस्य-अनङ्गा सिद्धपीठस्य प्राच्यांदिशि भरतमन्दिरं आदिवदरी-मन्दिरं वर्तते। समीपे पूर्वभागेऽस्य गंगानदी वामभागे चोत्तरस्यांदिशि चन्द्रभागा नदी प्रवहति। परितः सर्वासुककुप्सु ऋषिकेश नगरस्य शोभा दरीदृश्यते। शंकर-मन्दिरं, त्रिवेणीघट्टः स्वर्गाश्रमं लक्ष्मणझूला, गीताभवनं, परमार्थनिकेतनं, शिवानन्दा-श्रमं इत्यनेकानि पावनतीर्थस्थलानि, मन्दिराणि, आश्रमाणि स्थानस्यास्य पवित्रतां वर्धयन्ति।

बहुकालपूर्वमेवास्मिन्पीठे पाषाणखण्डेभ्यः मन्दिरस्य रचना संजाता। इदमनंगामन्दिरं गंगादक्षिणतटवर्ती प्राचीन हिन्दूनिर्माणशैली अभिविनक्ति मन्दिरमिदं दैर्ध्येण त्रिंशत्फीटमितां वर्गाकारतां पंचविंशत्फीटमितां चोच्छ्रायतां दधाति। शिखर-प्रान्तेऽस्य पित्तलधातुनिर्मितमेकं कलशं विलसति। शक्तेश्चात्र मन्दिरस्यस्कन्धे एकं त्रिशूलमप्यधिष्ठति।

शक्तिमन्दिरस्य मुख्यद्वारेणप्रविश्यान्तर्गृहे एकस्यां वेद्यां चतुर्भुजाकारतां दधतो कृष्णवर्णा शक्तिमूर्तिः पाषाणखण्डनिर्मिता परिवेष्टितारक्तवस्त्रे द्विफीटमितोच्चतां दधाति। इमां निकषैव पूर्वाभिमुखो भूत्वा प्रज्वलत्यत्वण्डदीपको सदैवैव। मन्दिरेऽस्मिन् गणेश महाकालभैरव शक्तेर्लिंगाकृति घण्टाकर्णादीनां मूर्तयोऽपि प्रतिष्ठन्ति। शक्ते-

---

१. अथान्यच्च प्रवक्ष्यामि पीठं परमदुर्लभम्।
यत्रैकरात्राल्लभते सिद्धिं परम दुर्लभाम्॥
माहेश्वरीति विख्याता सर्वसिद्धि प्रदायिनी।
यत्र रुद्रः स्वयं साक्षाद्देवैः सन्निहित सदा॥ —के० १९३-३६-३७

२. भद्रकाली भुजंगाक्षी भारती भारताशया।
भैरवी भीषणाकारा भूतिदा भूतिमालिनी॥ —देवी०भा० १२-६-११८
तपस्स्वनी पुण्यतमा भारती भरताश्रमे।
अकथा नैमिषारण्ये पाण्ड्यो च पाण्डरावना॥ —कुंजि० तं० ७-४७

३. सुन्देश्वरी समारभ्य यावद्धेमवती नदी।
तावत्कुब्जाम्रकंक्षेत्रं पापिनामपि मुक्तिदम्॥ —के० ११७-४
कुब्जाम्रकात्परं क्षेत्रं ब्रह्महत्या निबारणम्।
नास्ति राघवशार्दूल पृथिव्या पुण्यदं महत्॥ —के० १३२-४६

लिंगाकृति अत्र अनङ्गा नाम्ना प्रसिद्धा ।[1]

पूर्वस्मिन् काले अत्र पशुबलि पूजायाः महत् प्रचारासीत् । किन्त्वधुना सा तामसीपूजा निरवशेषतांनीता । सम्प्रति भक्तैः शाक्तशैववैष्णवैः सात्विकी पूजा अत्र समारब्धा । विद्वद्भिःसिद्धपीठेऽस्मिन् षोडशोपचारविधिना शक्ते उपासना पूजा च सम्पाद्यते । इयं दैनिकी पूजा भरतमन्दिर निवासिनः साधवः कुर्वन्ति । समये समये भक्तजनाः भारतीयाश्चात्र समागत्य त्रिवेणी घट्टे गंगायां स्नान्ति । पवित्रदेहेन श्रद्धया विविधैः पूजोपचारैश्च ते शक्तेरनंगायाः पूजनं कुर्वन्ति । पर्वदिनेषु चात्र संख्यातीता जनाः शक्तेर्दर्शनार्थमागच्छन्ति । ते शक्तये वृहद्धनमुपहारांश्च समर्पयन्ति । नवरात्रावसरेषु शक्तेः मात्रदर्शनेनात्र ब्राह्मणवधपापादपि जनाः निष्पापाः भवन्तीति कथ्यते । ये जनाश्चात्र शक्तिस्वरूपाः नवकन्याः भोजयन्ति ते सर्वैश्वयं प्राप्नुवन्ति । सर्वे भक्ताः निःसंदेहोऽत्र शक्तिप्रसादात् स्वेष्टं फलं लभन्ते ।[2] चैत्रमासस्याआश्विनमास्य च शुक्लपक्षे सप्ताभ्यां कालरात्र्यां तिथौ ये जनाः रात्रौ सिद्धपीठेऽस्मिन् शक्तिमर्चयन्ति अष्टभ्यां तिथौ च दुर्गासप्तशती मंत्रैः होमं तर्पणं च कुर्वन्ति ते स्वल्पावधौ एव मनोवांछित फलं प्राप्नुवन्ति । मोक्षस्याभिलाषिणः भक्ताः पावनसिद्धपीठस्यास्य दर्शमात्रैणैव शिवलोकमाप्नुवन्ति । अत्र भरतनाम्नः शिवस्य दर्शनं कल्याणदायकमस्ति ।[3] भरताश्रमेऽस्मिन् भरतमन्दिरस्य संचालनार्थं साधूनामेका समिति निर्वाचिता अस्ति । सा एव शक्तिमन्दिरस्य संरक्षणं करोति । अत्र च यात्रिणामावासाय अपि उत्तमा व्यवस्था वर्तत इति ।

## मुण्डमालेश्वरी सिद्धपीठम्

सिद्धपीठमिदं मुण्डमालेश्वरी नामधेयं देहरादून जनपदस्य ऋषिकेश क्षेत्रे वीरभद्राभिधाने स्थाने विद्यते ।[4] पुरा कस्मिंश्चिदकाले शक्त्या सह असुराणां भयानकं

---

१. अनंगा वदना तत्र तथैवानंगरभैरव ।
अनंगकुसुमा विश्वरूपासुरभंयकरी ॥ —विद्या० तं० ५-८७-१३

२. माहेश्वरीति नाम्ना वै कृष्णवर्णा महामुने ।
तस्य वै दर्शनाद्याति रुद्रलोकं दुरासदम् ॥ —के० १२३-३८

३. कृते वाराहरूपेण त्रेतायां कृतवीर्यजम् ।
द्वापरे वामनं देवं कलौ भरतमेव च ॥
नमस्यन्ति महाभाग भवेयुर्मुक्तिभागिनः ॥ —के० ११६-४२

४. ततोऽपि क्रोशमात्रे हि वीरभद्र तपः स्थलम् ।
लक्षवर्षसहस्त्राणितताप परमं तपः ॥ —के० १०९-८
एकतः सर्वदानानि सर्वतीर्थाटनं पुनः ।
एकतो दर्शनं तत्र वीरभद्रेश्वरस्य हि ॥ —के० १०८-१३

युद्धं बभूव। युद्धेऽस्मिन् शक्तिः बहून् दैत्यान् जघान तेषु बलवतामसुराणां मुण्डानां मालां विधाय तांचकण्ठे निधाय सा कुब्जाम्रकक्षेत्रस्थित वीरभद्रनामके स्थाने समागच्छत्। तस्मिनवसरे दुष्टदैत्यानां कृते मुण्डमालाधारिण्याः शक्तेः स्वरूपमति रौद्रमासीत् तां प्रकुपिताभूतां मुण्डमालेश्वरी प्रशान्तयितुमेकादशरुद्रैः सह सर्वे देवाः मानवाश्चात्र समागत्य मिलित्वा च शक्तेर्पूजनं स्तवपाठमप्यकुर्वन्। अनेन कर्मणा शक्तिः प्रसन्नाऽभवत् भक्तैस्तस्मिन् काले एषा शक्तेः स्थापना अत्र कृता न्यवसन्नेका-दशरुद्राअपि तस्मात्कालदेवास्मिन् पीठे। यद्यप्यस्य पीठस्य प्रतिष्ठासत्याः पार्थिव-शरीरस्यांगपतेनेनाभवत् तथापि मुण्डमालेश्वरी सिद्धपीठमिति प्रसिद्धिस्तु शक्तेः मुण्ड-मालाधारणेन लोकविश्रुताजाता इमां शक्ति पीठेश्वरी शक्तिरपि कथ्यते।

अस्मिन् पीठे शक्तिमन्दिरस्य रचना हिन्दू मन्दिर निर्माण शैल्यामेव समभवत्। मन्दिरमिदं दैर्घ्येणाष्टादशफीटमितां वर्गाकारतां विंशतिफीटमितां चोच्छ्रायतां धारयति। मन्दिरस्य शिखरे कांस्यमय कलशं रक्तवस्त्रेण निर्मिता पताकैकाच विराजते। मन्दिरस्य बाह्यतः परिक्रमणस्थलं विद्यते। तस्य विभिन्नेषु कोणेषु लिंगस्वरूप पाषाणमयैकादश रुद्राः प्रतिष्ठन्ति।

मुण्डमालेश्वर्याः सम्मुखे वीरभद्रेश्वर महादेवस्य सुप्रसिद्धं दीर्घाकार मन्दिरमति प्राचीनं वर्तते। त्रिभुवनपावनी गंगानद्यपि समीपेऽत्र प्रवहति। पीठादस्मात् सघनानां वनानां चोपवनानां धान्यपूरित समतलक्षेत्राणां महात्माजनानां सत्पुरुषणान्चाश्रमाणां, ऋषिकेशनरेन्द्रनगरादीनां नगराणां पर्वतानामुच्चावंचशिखराणां च दर्शनीयतमा छटाऽवलोक्यते। पर्वतीयक्षेत्रसमतलक्षेत्रयोः सन्धिभूतस्यास्यक्षेत्रस्य प्राकृतिकी शोभा-ऽद्वितीया एव दृश्यते। मुण्डमालेश्वर्याः पूर्वभागे निर्मलजलपूरितमेकं शिवनामकं कुण्डं वर्तते।[1]

---

ततोऽति निकटे वामे निवर्तनमिते स्थले।
मुण्डमालेश्वरी देवी प्रमदोत्करशोभिनी॥
यस्या दर्शनमात्रेण सर्वसिद्धीश्वरी भवेत्।
नाना वाद्यमया शब्दाः श्रूयन्ते देवता हताः॥
तत्र पीठेश्वरी देवी सर्वभूता मनोहराः।
तस्मिन् स्थाने तु यो मर्त्यो धीरात्मा दृढ़ निश्चय॥
न कार्य्या भीस्ततो विप्रः य इच्छेच्छ्रे्य आत्मनः। —के० १०८-२२-२४

१. गणेश्वरं महादेवी वीरभद्राय संददौ।
शिवकुण्डे नरः स्नात्वा सर्वपापैः प्रमुच्यते॥
पृथिव्या यानि तीर्थानि तानि सर्वाणि नारद।
स्नातानि तेन भगवान् पूजितश्च तथा भवेत्॥ —के० १०८-९-१०
वीरभद्रेश्वरं दृष्ट्वा स्नात्वा च शिवतीर्थके।
हयमेघफलं भुक्त्वा प्राप्नोति परमं पदम्॥

मुण्डमालेश्वर्याः सिद्धपीठभवने एकमेवास्तिद्वारंभक्तानामन्तः गृहे प्रवेशाय। द्वारेणानेन मन्दिरस्यगर्भगृहे प्रविश्य दक्षिणस्यांदिशि भित्तिकायां पाषाणखण्डैः निर्मितायां वेदिकायां काष्टपीठे प्रतिष्ठिता मुण्डमाला धारिण्या समलंकृताया-आभूषणैः चतुर्भुजाकारिण्याः फीटद्वयपरिमितोच्चतायाः सर्वांगसुन्दर्याः रक्तवस्त्रेणाच्छादित शक्तिमूर्तेः दर्शनं भवति। शक्तिस्वरूपं प्राकृतिकं पाषांणलिंग शिवलिंग गणेशमूर्तिः लक्ष्मी-सरस्वती-कालिका भैरव इत्यादीनां देवदेवीनां विविधाः मूर्तयोऽप्यत्र विलसन्ति।

अस्मिन् पीठशक्ते प्रतिवासरीयपूजाया व्यवस्था प्राचीनकालादेवासीत् प्रचलिता। अधुनाऽपि सन्यासिन्यत्र प्रतिदिनं शक्तेपूर्जनं कुर्वन्ति। नात्र शक्तेः राजसी, तामसी पूजा भवति सात्विकीपूजा अत्र सम्पाद्यते जनैः प्रतिदिनं संख्यातीता जना अत्रागत्य शक्तेः मुण्डमालेश्वर्याः शंकरस्य वीरभद्रलिंगस्य च दर्शनं पूजनं च कुर्वन्ति।

पीठेऽस्मिन् ये भक्ताः कृष्णपक्षस्याष्टभ्यां चतुर्दश्यांतिथौ वा षोडशोपचार विधिना विल्वपत्रेण च शक्तिशिवयोर्पूजनं कुर्वन्ति ते सकलानि कांक्षितफलानि प्राप्नुवन्ति। शिवपुराण देवीभागवत महापुराण मार्कण्डेय पुराणादीनां पठनेन श्रवणेन चात्र मलिनानामप्यन्तः करणानां विशुद्धिर्भवति परमशान्तिश्च लभ्यते।

ये धार्मिकाः फाल्गुनमासस्य कृष्णपक्षे महाशिवरात्र्यां तिथौ निशाकाले गंगाजलकुंकुमधूपदीपविल्वपत्रादिद्रव्यैः शिवस्य वीरभद्रलिंगस्य[1] शक्तेः मुण्डमालेश्वर्याः सिद्धपीठस्य च पुरश्चरणरीत्या पूजनं कुर्वन्ति ते स्वर्गापवर्ग फलान्याप्नुवन्ति शक्तिरत्र भक्तेभ्यः दर्शनं ददातीति प्रसिद्धिरप्यत्र वर्तते।[2] अत्र साधूनां निर्वाचितैका समितिः मुण्डमालेश्वरी सिद्धपीठस्य वीरभद्रमन्दिरस्य च संरक्षणार्थं इयं समिति शक्तिशिवयोर्पूजन व्यवस्था करोति। दातृभिः समर्पित द्रव्योपहारादीनां च नियमित व्यवस्थां विदधाति।

## मनसा देवी सिद्धपीठम्

हरिद्वाराभिधानस्य पुण्यतीर्थस्य पश्चिमदिग्भागे स्थितं उत्तुंगाचलस्योपत्य

---

१. वीरभद्रेश्वरी देवी लिंगरूपी सदाशिवः।
तत्र विल्वमहावृक्षो दृष्टो मुक्तिप्रदो भवेत्॥
यत्त्रिरात्रं महालिंगं पूजयेन्निर्भयो मुने।
स सर्वासिद्धिमाप्नोति सत्यं तच्छिवभाषितम्॥
एकतः सर्वदानानि सर्वतीर्थाटनं पुनः।
एकतो दर्शनं तस्य वीरभद्रेश्वरस्य हि॥ —के० १०८-११-१३

२. ददाति दर्शनं तस्य मुण्डमालेश्वरी शिवा।
नानारूपधरास्तत्र दृश्यंते प्रमथस्त्रियः॥
पुरश्चर्यां च विविधासप्तरात्रं जितेन्द्रियः।
असाध्यमपि सप्ताहात्साधयेत्सधकोत्तमः॥ —के० १०८-२५-३६

कायां मनसादेवी इति नामधेयं शक्ति सिद्धपीठं विद्यते[१]।

प्राक् किल कस्मिश्चिद् समये पृथिव्यां सर्वे देवाः मानवाश्च नागेभ्यः भयभीताः प्राणपरित्राणार्थ ऋषेः कश्यप शरणं ययुः। संत्रस्तानामेषां प्राणिनां दुःखानामुपशनार्थं कश्यपः उरगक्षयमत्र प्राप्त्यर्थं ब्रह्म लोकं जगाम। तत्र प्रजापतेराज्ञया स वेदबीजाननुसारेण अहिविनाशकमंत्रानरचयत्। एभिर्मंत्रैः ब्रह्मणो मनसः एकां कन्यां समजायत। सैव मनसा देवी इति नाम्ना लोके विश्रुता संजाता[२]। बाल्यकाल एव सा शंकरस्योपासनायै चन्द्रशेखरस्य स्थानं कैलासं ययौ। तत्र बहुकालं यावत् सा शंकरोपासनामकरोत्। तदनन्तरं शंकरस्योपदेशेन हरिद्वार क्षेत्रे समागत्य सिद्धपीठेऽस्मिन् मनसा भगवन्तं कृष्णमाराधयामास। इममेवाद्याशक्तिरितिसम्मावयिता भगवता कृष्णेन अत्र देव्याः प्रतिष्ठापनाकृता। तदनन्तरं प्रारम्भिकी पूजा विष्णुना कृता। अनन्तरं चात्र मनसादेव्या मानवाश्च शक्तिपूजनस्याधिकारं प्राप्तवन्त। मनसादेवी जरुत्कारुऋषेः भार्या मुनेः आस्तीकस्य च माता अपि कथ्यते पौराणिकैः। इदं सिद्धपीठं प्राचीनकाले सत्याः पार्थिवशरीरस्यांगपतनेन सञ्जातम् किन्त्वत्र मनसादेव्याः स्थापनानन्तरं मनसादेवी सिद्धपीठभिति लोक विश्रुतं जातम्। गंगाद्वारात् क्रोशैकपरिमितपथमतिक्रम्य पश्चिमदिशि स्थितस्यपर्वतस्योपत्यकायां मनसादेवी सिद्धपीठस्य दर्शनं भवति। उत्तुंगशिखर प्रदेशे निर्मितात् सिद्धपीठादस्मात् हरिद्वारस्थितानां सर्वेषां मन्दिराणाभाश्रमाणां, सिद्धपीठानां गंगानद्याः धर्मशालादीनां सप्तसरोवरतः ज्वाल्वापुरं यावत् गंगातटवर्ति नगरोपनजराणाञ्च दर्शनीयतमं दृर्शनं यात्रिणामन्वेषकानाञ्च मनांसि आह्लादयति। परितोऽत्र वनानामुपवनानां व शोभा दरीदृश्यते। प्राकृतिकसौन्दर्येणालोडिलमिदं सिद्धपीठमवाप्नोति अद्वितीयं स्थानम्। समुद्रतटादिदं १००० फीटावधि तुंगतांदधाति।

न ज्ञायतेऽस्मिन् सिद्धपीठे मन्दिरस्य रचना कदा संजाता। मन्दिरमिदमति प्राचीनं दृश्यते। दैर्घ्येणेदं बिंशतिफीटमितां वर्गाकारतां बिंशतिफीटमितामुच्च पाषाणखण्डैः सुश्लिटैः सुश्लिसृमिदं मन्दिरं एकस्य सुनिर्मितस्य विशालकुट्टिमस्योपरि विराजते। अस्य छदि, त्रपुफलकेनाच्छादिता वर्तते, शीर्षप्रान्ते एकं पित्तलमयं कलशः एका रक्तवस्त्रनिर्मिता पताका एकं त्रिशूलं च विलसति। अस्य मन्दिरस्य समीपे दक्षिण-

---

१. मनसादेवी वर्णन—देवी भा० ९-४७-४८

२. पुरानागभया क्रान्ता वभूवुर्मानबा भुवि।
गतास्ते शरणं सर्वेकश्यपं मुनि पुगंवम्॥
मंत्राश्च ससृजे भीतः कश्यपौ ब्रह्मणाऽन्वितः।
वेदबीजानुसारेण चोपदेशेन ब्रह्मणः॥
मन्त्राधिष्टात्देबीं तां मनसा सृजते तथा।
तपसा मनसा तेन बभूव मनसा च सा॥ देवी भा० ९-४८-११-१३

दिग्भागे एकं लध्वाकारकं शंकरमन्दिरमस्ति। वामभागेऽस्य गणेश, भैरव, काली, लक्ष्मी, सरस्वती, विष्णु, कश्यपादीनां दिवौकसांमन्दिराणि सन्ति। शक्तिमन्दिरस्याधोभागे, यात्रिणां साधुजनानाम् ऋत्विजां च निवासाय बहूनि भवनानि सन्ति निर्मितानि।

शक्ति मन्दिरस्य बाह्यतः एकं प्रकोष्टं परिक्रमणस्थलं वर्तते। तदुत्क्रम्य मनसामन्दिरस्य द्वारे प्रविश्य तस्मादेव मन्दिरस्यान्तः गृहस्य पश्चिमभितिकायां सुनिर्मितवेदिकायां प्रतिष्ठितायाः कल्याणमय्याः मनसादेव्याः दर्शनं भवति इयं देवीमूर्तिफीटत्रयपरिमितशरीरा चतुर्भिर्भुजैः युक्ता प्रस्तरखण्डनिर्भिता सूर्यबिम्ब सदृशं मुखं बिहाय सर्वांगेषु रक्तवस्त्रेणाच्छादिता हस्तयोर्गदाशूलशंखचक्रभुशुण्डिभिर्विविधायुधैः समलंकृता विद्यते। शक्तिमन्दिरस्यान्तः गृहे प्रवेशाय बहिरागमनाय च एकमेवास्ति द्वारम्। गर्भगृहे न शक्नोति प्रवेष्टुं विनाऽनुमतिं प्रबन्धकस्य कोऽपि जनः।

अस्त्यत्र देवोपासकैर्जनैः गठितका समिति मनसादेवी समिति नाम्ना प्रसिद्धा। सा शक्तिर्पूजनार्थं ऋत्विजां नियुक्तिं पूजा सामग्रीणां च व्यवस्थां करोति दातृभिः समर्पित द्रव्योपहारैः। समितिरियं विकासार्थमस्यपीठस्य सततप्रयत्नशीला दृश्यते।

भारतीयाः वैदेशिकाश्च संख्यातीता जनाः प्रतिदिनमत्रागत्य मनसाशक्तेः दर्शनं पूजनं, स्तोत्रपाठं च कुर्वन्ति, परिक्रमणस्थले ते एकां परिक्रमां कृत्वा शक्तेर्प्रसादं च गृहीत्वा स्थानस्यास्य प्राकृतिक रमणीयता विलोक्यम् मनसादेव्यैनमः इतिगायन्तो स्ववासस्थानानि निवर्तन्ते।

प्राकृतिक सौन्दर्यानुपोषकेऽस्मिन् सिद्धपीठे यात्रिणः कृते भोजनावास-भ्रमण-कीर्तनादीनां सम्यग् व्यवस्था कृता समितिभिर्धार्मिकैर्जनैश्च।

नामानि सन्ति द्वादशानि मनसादेव्याः। नाम्नामेतेषां स्मरणात् मनसायाः दर्शनात् पूजनाच्च भक्ताश्चिरायुर्लभन्ते। मनसास्तवपाठेन मंत्रजाप्येन च महारोगाणां निवारणं भवति, समस्ताश्च नागदोषा निवार्यन्ते[1]।

---

१. योगिनो विश्वपूज्यश्च जरुत्कारुप्रिया ततः।
जरत्कारुर्जगद्गौरी मनसा सिद्धयोगिनी॥
वैष्णवी नागभगिनी शैवी नागेश्वरी तथा।
जरत्कारु प्रियास्तीकमाता विषहरेति च॥
महाज्ञायुता चैव सा देवी तत्र पूजिता।
द्वादशैतानि नामानि पूजाकाले तु यः पठेत्॥
तस्यनागभयं नास्ति तस्य वंशोद्भवस्यच।
नागभीते च शयने नागग्रस्तं च मन्दिरे॥
नागशोभे महादुर्गे नागवेष्टित विग्रहे।
इदं स्तोत्रं पाठित्वा तु मुच्यते नात्र संशय॥ —देवी भा० ९-४७-५१-५५

## माया देवी सिद्धपीठम्

पुरा कदाचित् दक्षय एका माया (सती) नाम्नी कन्या कुमार्यावस्थायां शैशवे स्वपित्रा दक्षेण गंगायाः वामतटे शिवालिंगपर्वतोपत्यकायां स्थानमलभत[1]। सा एव शिवस्य सहधर्मिणी बभूव। कालान्तरे दक्षयज्ञकुण्डनिपतिता सती पतितिरस्कार स्वेकाकुला तत्रैव प्राणान् परित्यत्याज शोकाकुलेन शिवेन समुत्थापितं तस्याः पार्थिवशरीरंनाभिभागं विष्णुश्च चक्रखण्डिता तत्रैव निपतिता। तदारभ्य क्षेत्रमिदं मायादेवी सिद्धपीठमित्ति नाम्ना प्रथितां गतम्।

प्राचीनकाले हरिद्वारक्षेत्रमिदं मायापुरनाम्नैव जगति परिचीयते स्म आदि-शक्तेः कुमार्याः मायादेव्याः निवासस्थलं मत्वा सकलाः देवाः स्वर्लोकादनैव निवासाय समागच्छन्। तेषाञ्च देवानां प्रतिष्ठा पृथक-पृथक रूपेण भक्तैः कृता। कालान्तरे सर्वे प्रतिष्ठित देवास्ते सकलां केदारखण्डभूमिं निवासस्थलमकुर्वन्। तदारभ्य केदारखण्डभूमीयं देवभूमि नाम्ना प्रसिद्धाऽभूत्[2]। यदा वैवस्वत मन्वन्तरस्यास्य प्रारम्भकालेऽत्र भूमौ गंगावतरत् तस्मात्कालदेवमायाक्षेत्रमिदं गंगाद्वार हरिद्वार नामम्यां प्रसिद्धि प्राप्तवान्। अधुना तु हरिद्वार क्षेत्रमतिविशालतां गतम्। इदं नगरं हरिद्वार नामकं सप्त सरोवर सीमातः समारभ्य ज्वालापुर पर्यन्तं विस्तीर्णं वर्तते। दर्शन दानाभ्यामंत्र जनाः सर्वाः सम्पत्तयः प्राप्तुवन्ति[3]।

वर्तमान समये मायादेवीमन्दिरस्य स्थिति ललितारा सेतुः+ललितक तीर्थस्य +समीपे एव वर्तते। मायादेवी सिद्धपीठस्याति प्राचीनतां गतस्यापि वर्तमानमन्दिरं नाति प्राचीनम्। एतत्स्थितेनैकेन शिलालेखेन विज्ञायते यदस्य मन्दिरस्य केषाञ्चिद्

---

ओं ह्रीं श्रीं क्लीं ओं मनसा देव्यै स्वाहेति कीर्तितः।
पंचलक्ष जपेन्नेब मंत्रसिद्धिर्भवेन्नृणाम्॥ —दे० भा० ९-४८-६

१. मायापुर्या कुमारी स्यात्सन्ताने ललिताम्बिका।
गयायां मंगला प्रोक्ता विमला पुरुषोत्तमे। —देवीषा ७-३०-६४।

२. गंगाद्वारोत्तरं विप्र स्वर्गभूमिस्मृता बुधैः।
अन्यत्र पृथिवी प्रोक्ता गंगाद्वारोत्तरं बिना॥ —के० १०६-४

३. गंगाद्वाराच्छृणु प्राज्ञ रत्नशृंगवधिबुवे।
तथा नन्दगिरेः पश्चात्काष्ठान्तं ब्रह्मनन्दने॥
मायाक्षेत्रं समाख्याता गंगाद्वारे सुपुण्यदम्।
ब्रह्मणः स्नानतो यावत् योजनानां त्रिकद्वयम्॥ —के० १०२-५-६
गंगाद्वारे कुशावर्ते विल्वके नीलपर्वते।
स्नात्वा कनखले तीर्थे पुनर्जन्मन विद्यते। —के० १०२-१०
इदमेव महाभाग स्वर्गद्वारं स्मृतं बुधैः।
यस्य दर्शनमात्रेण विमुक्तो भवबन्धनैः॥ —के० १०६-५

भागानां रचना महन्त गिरिवैंजनाथस्य समादेशात् केशवदेव पोद्दारेण सेष्टिना द्विसहस्रमिते वैक्रमाद्वे कारित ।

सिद्धपीठस्यास्य प्रबन्धः मायादेवी मठस्थिते गिरिर्नामधारी साधुना क्रियते । साधुभिः प्रतिदिनं दैनिकी पूजा व्यवस्था कार्यते अत्र । प्रतिदिनं गंगायां स्नात्वा संख्यातीता देवीभक्ताः मायादेवी मन्दिरे समागत्य शक्तेर्दर्शनं पूजनं यज्ञं प्रदिक्षणां च कुर्वन्ति । साम्प्रतं त्वनेके वैदिशिकाः भक्ता+अपि देव्याः दर्शनं पूजनञ्च कृत्वा मनोभिलषितं फलं प्राप्नुवन्ति[१] ।

मायादेवी मन्दिरस्य समीपे एव एकं नातिवृहद् दत्तात्रेय चरणपादुका मन्दिरमस्ति । अत्र पदयुगलचिह्नमकितं वर्तते । भक्तैश्चिह्नमिदं अवधूत दत्तात्रेयस्य मन्यते ।

मायादेवी सिद्धपीठस्य दक्षिणभागे ललितकतीर्थस्य च समीपे गंगा देव्याः एकमतिभव्यमाधुनिकमन्दिरं वर्तते । मन्दिरस्यास्य रचना काञ्चीकामकोटी इति मठाधीशेन शंकराचार्येण कारित । गर्भगृहमेव एकं यंत्रं विलसति यस्मिन् मकरपृष्ट समारुढ़ा गंगामूर्तिः प्रतिष्टिता वर्तते । शिखर प्रदेशेषु वनितादेवीनां देवांगनानाञ्च मूर्तयः विलसन्ति मन्दिरस्य पृष्टभागे एकः कृत्रिमो पर्वतः विरचितः । यत्र पार्वतीदेव्याः मानवाकारमूर्तिः प्रतिष्ठति । तस्यास्समुखे महाराजो भगीरथः करौबध्वा उपतिष्ठति । द्वयोर्भागयोः द्वे चतुष्किके स्तः एकस्यां चतुष्किकायां गणेशस्यापरस्यां च शिवलिंगस्य प्रतिष्ठा विद्यते ।

हरिद्वार क्षेत्रस्य विषये किंबहुनोक्तम्—प्राचीनकालादेव स्वपावनत्व प्रभावात् मायापुरहरिद्वारस्य गणना तीर्थराजसु बभूव[२] । गण्यते साम्प्रतमपि तीर्थस्योतभंतीर्थ-

---

१. मायां विना महेशानं जगज्जढ़ समं भवेत् ।
प्रदक्षिणा प्रकर्तव्या कलाभाव क्रमेण च ॥ —शक्ति सं० तं० २७-७
मंत्र यंत्र समायुक्तां समानीय महेश्वरी ।
ब्रह्मणमेतद्देवेशि मायया वेष्टितं भवेत् ॥ —श० सं० तं० २६-३
मायाभगवती साक्षात्सृष्टिस्थित्यन्तकारिणी ।
तत्क्षेत्रं हि मया प्रोक्तं भवमुक्तिप्रदायकम् ॥
पुरादक्षो महातेजा ब्रह्मपुत्रो मुनीश्वरः ।
तस्येयं दुहिता यत्र सतीनाम्ना मनोहरा ॥
यस्याःस्मरणमात्रेण सर्वदुःखैः प्रमुच्यते ।
यया सर्वमिदंव्याप्तं जगदैत्तच्चराचरम् ॥
तत्क्षेत्र दर्शनात्सद्यो न च भूयोऽभि जायते ।
येन दृष्टमिदं क्षेत्रं सफलं तस्य जीवितम् ॥ —के० १०२-११-१४

२. गंगाद्वार समं तीर्थं न कैलास समो गिरिः ।
वासुदेव समो देवो न गंगा सदृशं परम् ॥
न गोदान समं दानं त्रिषु लोकेषु विद्यते ॥ —के० १०९-३

मिदं धार्मिकैर्जनैर्विद्वद्भिश्चात्र । प्राक्कालादेवात्र मायाशक्तिरपि सर्वोत्तमंस्थानमवाप[1] ।

## रतिप्रिया सिद्धपीठम्

प्रसिद्धोत् हरिद्वारे नीलधारेतिनाम्ना गंगाधारामुत्तीर्य चण्डीपर्वतस्योपत्यकायां-यत् स्थानं तच्चण्डघट्टमिति निगद्यते । तत्रैव परं विशालैका शिला दरीदृश्यते यस्योपरि विशालस्यैकस्य मन्दिरस्य संरचनाऽवलोक्यते, तदिदं मन्दिरं कालीदेवीपीठमिति ज्ञायते । तत्र या काली सा रतिप्रियेति नाम्नाऽपि कथिताऽभूत्[2] ।

तत्रैका पौराणिकी कथा प्रसिद्धा-पुरा कदाचित्प्रलय काले सम्प्राप्ते भगवान् भूतभावनः शंकरः रतिप्रिया नाम्ना शक्त्या सह अत्रस्थिता । तस्मिनवसरे जलाप्लाबितां सकलां महीमलोक्य सा रतिप्रिया प्रकुपिताऽभूत् भयंकरं कालीरूपमास्थितवती च । प्रकुपितायाः प्रियायाः प्रसादनाय शिवस्तस्याः पादयोरपतत् परं सा संक्रुद्धा रौद्रमूर्ति कालीरूपा शक्तिरतिप्रिया शिवस्यापि मर्दनं चकार परं शिवमर्दनेन तस्याः क्रोधोऽप्यपगत एतया स्थानमेतत् रतिप्रिया सिद्धपीठं कालीसिद्धपीठमित्यभिधेयेन प्रथितां गतम् ।

रतिप्रिया सिद्धपीठस्य कालीमन्दिरं गंगादक्षतटवर्ती प्राचीन हिन्दुमन्दिर-निर्माणशैली अभिविनक्ति मन्दिरमिदं दैर्घ्येण पञ्चविंशतिफीटमितां वर्गाकारतां विंशत्फीटमितां चोच्छ्रायता दधाति । शिखर प्रान्तेऽस्य एका रक्तवस्त्रनिर्मिता पताका एकं लोहमयं त्रिशूलं पित्तल निर्मितमेकं कलशं च विलसति । अन्तः गर्भे एकस्यां रेधवो वेद्यां चतुर्भुजाकारतां दधती कालीमूर्ति शालिग्रामशिलाखण्डनिर्मिता द्विफीटमितोच्चतां दधाति ।

मन्दिरस्यास्य संचालनंपूजादिक्रियाश्च कौलमतावलम्बिनः साधकः कुर्वन्ति ।

---

मायाक्षेत्रं समं पुण्यं पृथिव्या नैव विद्यते ।
तिस्त्रः कोट्योर्द्धकोटी च तीर्थानां वायुरब्रवीत् ॥ —के० ११५-५१

१. दुर्ज्ञेया शाम्भवीमाया सर्वेषां प्राणिनामिह ।
भक्तं विनार्पितात्मानं तथा संमोह्यते जगत् ॥ —शि० पु० २-२-२५
धन्या, धन्या महामाया शाम्भवी मुनिसत्तमाः ।
तद्गतिं न हि पश्यन्ति विष्णुब्रह्मादयोऽपि हि ॥ —शि० पु० २-२-२८
स एव मादायमायां स्वां त्रिधा भवति रूपतः ।
ब्रह्मविष्णुमहेशात्मा निर्गुणोऽनिर्गुणोऽपि सः ॥ —शि० पु० २-४-३२

२. कोटवी कोटतीर्थे तु सुगन्धा माधवे वने ।
गोदावर्यां त्रिसन्ध्या तु गंगाद्वारे रतिप्रिया ॥ —देवी भा० ७-३०-६८
लज्जा लक्ष्मीसरस्वत्यौ प्रीति रतिरिमा क्रमात् । —वि० तं० ३-४८-३७
रुक्मणी रमणी रामा रेवती रेणुका रतिः ।
रौद्री रौद्रप्रियाकारा राजमाता रतिप्रिया ॥ —दे० भा० १२-६-१७७

सामान्यतोऽत्र देव्याः सात्विकपूजैव विधीयते। भक्तजनाः यथावसरमत्रागत्य शक्तेर्पूजनं विधाय श्रद्धाकुसुमानि समर्प्य मनोवांछितफलमभिलषन्ति। पूर्वस्मिन्कालेऽत्र पशुबलि-प्रथायाः महत् प्रचारासीत्परमधुना सा तापसी पशुबलिपूजा तनुतां गतः किन्तु कदाचित् कस्मिश्चिद् समये केचन भक्ताः समागत्य पशुबलिविधानेन पूजां कुर्वन्त्येवेदानीमपि।

रतिप्रिया सिद्धपीठं निकषैवानैकानि प्राचीन मन्दिराणि दृश्यन्ते एकं तु सन्निकटं स्वल्पाकारं मन्दिरं कालीमन्दिरस्य पृष्टभागे नवनिर्मितैवावलोक्यते। तत्तु कालीश्वर महादेव इत्यभिधीयेत ज्ञायते। एकां स्वल्पीयसीं जलधारां समुत्तीर्य चण्डेश्वर महादेवेति नाम्नः प्रसिद्ध मन्दिरं दृश्यते। अत्र प्राचीनकाले भगवतो चण्डेश्वरस्य महादेवस्य प्रकृति समुत्पादितं शिवलिंगं वर्तते। साधवो तपस्वीजनाश्चात्र साधनासु निरता तपोसाधनां सम्पादयन्ति स्म। साम्प्रतं तु भक्तजनैरत्र एकं मन्दिरं विरचितम्।

कालीमन्दिरस्य सम्मुखस्थले एकं सैनिकशिविरं वर्तते। यस्य पृष्टभागे एकस्य प्राचीनमन्दिरस्य रचना संदृश्यते। परमेतन्मन्दिरं जीर्णतांगतम् मूर्ति विरहितमेवोप-लक्षते। समीपस्थैः ज्ञायते इदं राधाकृष्णमन्दिरं। वर्तते कदा चिदत्र राधाकृष्णैवमूर्ति आसीत् परमधुना तु मन्दिरस्य गर्भगृहं रिक्तमेव। नवरात्रावसरेषु पर्वदिनेषु च शक्तेः रतिप्रियायाः पूजनं विविधालंकरणैः सौभाग्यद्रव्यैः सौगन्धिककुसुमैश्च ये भक्ताः कुर्वन्ति ते मनोभिलषितं फलं लभन्ते।

सिद्धपीठस्यास्य व्यवस्थार्थं नास्त्यत्र काऽपि समिति। सिद्धपीठस्य महत्व-मवलोक्य समुचित व्यवस्थार्थमत्र एकस्या मन्दिरसमितेरावश्यता वर्तते। सिद्धपीठस्य सुव्यवस्था समितिना एव कर्तुं शक्यते।

पर्वदिनेषु बहवो जना अत्र समागत्य देव्याः रतिप्रियायाः सम्यक् पूजनं विदधति। यात्रिणां रतिप्रिया मन्दिरे बहून्यलंकरणानि सौभाग्य द्रव्याणि च समर्पयन्ति। कुम्भादि पर्वषु समुदिता देवीभक्ताः अस्मिन् पीठे कालिकोपपुराण—देवीभागवत शतचण्डीपाठानामायोजनं कुर्वन्ति। आप्रतिपदात् नवमी पर्यन्तमत्राखण्डाग्नौ होमाष्ट-कद्रव्याणि वेदपुराणादि मन्त्रैश्चजुह्वति।

## चण्डिका (चण्डीदेवी) सिद्धपीठम्

चण्डीदेवीति नामधेयं शक्तिसिद्धपीठं हरिद्वारक्षेत्रान्तर्गतं नीलगिरि इति नामधेयस्य पर्वतस्योतुंगशिखरे विद्यते। पर्वतेऽस्मिन् पुरा किल राजा अस्मचित् नीलकण्ठ शंकरस्य प्रसादनार्थं तपश्चकार। तदारभ्य शैलोऽयं नीलगिरि नाम्नः प्रथितो गतः[1]।

---

१. अस्य वै गिरिराजस्य नाम वै सम्भविष्यति।
नीलपर्वत इति वै स्मरणाच्छिवदायकः॥ —के० १०६-८३
तन्मूर्ध्नि चण्डिका ख्याता गणकुञ्जर सेविता।
चतुर्दश्यां भाद्रपदे पुण्यकृद्भिः प्रदृश्यते॥ —के० १३०-५

अस्य सिद्धपीठस्य विषये इयं जनश्रुतिः प्रचलिता वर्तते—प्राचीनकालेऽस्मिन् नीलगिरि नामके पर्वते सत्याः पार्थिवशरीरस्य किञ्चिद्भागपतनेदं सिद्धपीठं संजातम्। कालान्तरे चण्डीरूपं धृत्वा शक्तिश्चण्डमुण्डासुरौ हत्वा, अत्र निवासश्चकार तस्मात्कालादेव नीलगिरि पर्वतोऽयं चण्डीपर्वत नाम्नः प्रसिद्धतां गमम् सिद्धपीठंत्रेदं चण्डिकादेवीति[1] नाम्ना लोके विख्याता बभूव। सिद्धपीठादेतस्मात् हरिद्वारनगरस्य रामणीयकता दरीदृश्यते। प्रकृतिदेव्या सुन्दरता अत्र जनानां मनांसि मोहयति। हरिद्वार नगरमतिक्रम्य गंगाञ्चोतीर्य गव्यूतिपरिमितपदातिपथमाश्रित्य चण्डीदेव्याः दर्शनं कर्तुं शक्यते। चण्डीदेव्याः दर्शनार्थं प्राचीनकाले देवारप्यत्रागच्छन्[2]।

अस्मिन्पीठे चण्डीदेवी मन्दिरमति प्राचीनं वर्तते। अस्य समन्तादेकंचत्वरं लोहयष्टिनापरिवेष्टितमस्ति। इदं मन्दिरं चत्वरस्य मध्यभागेस्थिते उत्तुंगवेदिमध्ये दैर्घ्येण पंचदशफीटमितां वर्गाकारतां पंचदशफीटमितां चोच्छ्रायतां दधाति। मन्दिरस्य शीर्षस्थले एकं कलशं एका रक्तवस्त्रनिर्मिता पताका च विलसति। मन्दिरस्य पूर्वद्वारेण प्रविश्यान्तः गृहे एकस्यां वेदिकायां शक्तेश्चण्डीदेव्याः दर्शनं भवति।

अस्मिन्पीठे त्रिदेवजनन्याः देव्याश्चण्डिकायाः[3] प्राचीनमूर्तिः स्वल्पाकार विशेषां मुखं विहाय सर्वांगासु सा विद्यते रक्तवस्त्रेणाच्छादिता। देव्यारग्रभागे चण्डीवाहन सिंहस्य शंखस्फटिकायाः मूर्तिरेका वर्तते। अस्याः दक्षिणदिग्भागे पार्श्वे शंखस्फटिकेन निर्मितायाः देव्याश्चण्डिकाया आधुनिकी विशालमूर्तिः परमसुन्दरतां धारयति। साष्टभुजादेवी सिंहस्योपरि समारुढ़ा एकेन करेण चण्डासुरस्य शिखां गृहीत्वा त्रिशूलादपरेण हस्तेन तस्य वक्षस्थलं ताडयति। इयं शक्तिमूर्तिश्चतुस्फीटावधि तुंगतां दधाति।

मन्दिरस्यान्तिम सोपानाद् पूर्वमेव दक्षिणभागस्थित भूमौ लघ्वाकृति विशेषं कालभैरव मन्दिरमस्ति। मन्दिरस्यान्तगृहेऽत्र प्रस्तरखण्डनिर्मिता कृष्णवर्णा भैरवस्य-मूर्तिरपि विद्यते। शक्ति मन्दिरस्योभयोर्भागयोरत्र द्वे भवने स्तः। तयोरेकस्मिन् भवने ऋत्विजः निवसन्ति, अपरस्मिन् मन्दिरे अन्नपूर्णा, लक्ष्मी, मनोकामना देव्यः प्रतिष्ठन्ति।

सिद्धपीठादस्मात् क्रोशार्द्धपरिमितपदातिपथमाश्रित्य नीलगिरि पर्वते एव मातुरञ्जनीदेव्याः दर्शनं लभन्ते। अस्मिन् स्थाने अञ्जनीदेव्याः मन्दिरस्य स्थापना त्रेतायुगेऽभवदिति भन्यते। एतस्य मन्दिरस्य रचना त्रिशत्फीटावधि वर्गाकार चत्वरे संजाता। समीपेऽस्य प्राच्यांदिशि वातपुत्र हनुमानस्यैकं नातिबृहद् मन्दिरं वर्तते।

---

१. चण्डिका चण्डमुण्डा च चामुण्डी द्रष्टणीष्टदा॥ —वि० तं० ३-५५-२

२. अथ देवगणाः सर्वे विष्णवाद्या दर्शनेप्सवः।
यद्दृश, जगदम्बां तां तत्कृपा प्राप्य तत्र हि॥ —शि० पु० ३-४-७

३. त्रिदेव जननी चण्डी शिवा सर्वार्तिनाशिनी।
सर्वमाता महा महादेवी सर्वस्वजनतारिणी॥ —शि० पु० ३-४-५

मन्दिरेऽस्मिन् बज्रांगवलेः हनुमानस्य मूर्ति प्रतिष्ठति। चण्डीदेवी सिद्धपीठे शक्तेः दैनिकी पूजा व्यवस्था पूर्वकालादेव प्रचलितासीत्। अधुनाऽपि शक्त्याः पूजोपासना सकलेष्वपि दिवसेषु सम्पाद्यते। प्रतिदिने प्रातःकाले भक्ताश्चात्र समागत्य देवींप्रति स्वभक्तिकुसुमानि समर्पयन्ति।

निर्वाचिता सञ्चालनार्थमत्र सिद्धपीठस्यास्य साधूनामेका समितिः। सा यात्रिणां रात्रौ निवासाय सम्यग् व्यवस्थां करोति। समितिना शक्तेरत्र पूजन यज्ञ, होमादीनां व्यवस्था अपि समुचिता दृश्यते। इदं सम्यक् व्यवस्थामवलोक्य विभावर्यां निवासाय बहवः जनाः चण्डीदेवी पीठं हरिद्वारात् गच्छन्तो दृश्यन्ते। ते रात्रौ तत्र निवासं कृत्वा प्रभातेऽपरिस्मिन्दिने ऋत्विजा सह शक्तेश्चण्डिकायाः पूजनं कुर्वन्ति। शक्तेः पूजनेनात्र सुखं शान्ति च प्राप्नुवन्ति। चण्डिकायाः दर्शनेन पूजनेन स्मरणेन च जनाः सकलानभीष्टमंगलान् लभन्ते।[1] मंगलदात्री इयं देवी मंगलचण्डी नाम्नाऽपि लोके विख्याता बभूव।[2] ये जना शुक्लपक्षस्याष्टभ्यांतिथौ "चण्डिकां चण्डरूपां च चण्डमुण्डविनाशिनीम्। तां चण्डपापहरिणीं त्रण्डिकां पूजयाम्यहमिति" मंत्रेण चण्डिका पूजनं कुर्वन्ति ते मनोवांछितफलमाप्नुवन्ति।[3]

## श्रद्धा सिद्धपीठम्

भारतीय पुण्यतीर्थेषु हरिद्वारस्य पुण्यभूमिः स्वकीयं वैशिष्ट्यमावहति पावन-तीर्थमिदं गंगाद्वारं-हरिद्वारं-मायापुरमित्यादिभिः नामभिश्चालंक्रियते। अत्र निवसन्तो जनाः मृत्योरनन्तरं हरेर्लोकं गच्छन्ति। अस्मादेव कारणादिदं तीर्थं हरिद्वारमिति

---

१. चण्डिका तीर्थराजे हि सकृत्स्नानो महामुने।
स धन्य पुरुषो लोके सफलं तस्य जीवितम्॥ —के० १०२-१७
यद्यदिच्छति मर्त्यो वै तत्तत्प्राप्नोति तत्र वै।
महपुण्यतमंपीठं त्रिरात्रात्सिद्धिदायकम्॥ —के० १३०-४
यो न पूजयते नित्यं चण्डिकां भक्तवत्सलाम्।
भस्मीकृत्यास्य पुण्यानि निर्दहेत् परमेश्वरी॥
तस्मात्पूजय भूपाल सर्वलोक महेश्वरीम्।
यथोक्तेन विधानेन चण्डिकां सुखमाप्स्यसि॥
—दुर्गा स० वैकृतिरहस्य ३८-३९

२. देवी भा० ९-४७

३. देवी भा० ३-२७-५८
यां विष्णुरिन्द्रो हरपद्मजौ तथा बुद्धः कुवेरो वरुणो दिवाकरः।
ध्यायन्ति सर्वार्थसमाप्तिनन्दितास्तां किं मनुष्यं न भजन्ति चण्डिकाम्॥
—देवी ३-७-२४
ऐश्वर्यधनकामश्च चण्डिकां परिपूजयेत्॥ —देवी ३-२६-१९

कथ्यते। अत्रैव सनकसनन्दनसनातनसनत्कुमारादयोऋषयः भक्ति ज्ञानविरागाणां स्थापनाय क्रियामणेन परम पूतेन भागवतकथाऽमृतेन ज्ञानमर्जनेन जनानसंख्यकान् जन्ममरणादि बन्धनाद् विमुक्तानकुर्वन्।[1] पुण्य सलिला परमपावनी गंगा स्वनिर्मलपयसा तीर्थस्यास्य चरणान् प्रक्षालयन्ती जनान् पापेभ्यः मुक्तिं प्रयच्छति। अजस्त्रं अत्र सा प्रवहति नदी तस्योभयोः पार्श्वयोश्चण्डीमनसाधिष्ठिते सिद्धपीठे स्तः। हरिद्वारं निकषा एव कनखलाभिधाने स्थाने स्थितं एकं दक्षप्रजापतिनामकं शंकरमन्दिरं श्रद्धासिद्धपीठं च विद्यते। एतदेव पीठं तंत्रग्रन्थेषु उग्रा पीठमित्यपि कथ्यते।[2]

---

१. शृणुनारद वक्ष्यामो विनम्राय विवेकिने।
गंगाद्वारसमीपे तु तटमानन्दनामकम्॥
नानाऋषिगणैर्जुष्ठं देवसिद्धनिषेवितम्।
नानातरुलताकीर्णं नवकोमलबालुकम्॥
रम्यमेकान्त देशस्थं हेमपद्मसुसौरभम्।
यत्समीपस्थजीवानां बैरं चेतसि न स्थितम्॥
ज्ञानयज्ञस्त्वया तत्र कर्तव्यो ह्यप्रयत्नतः।
अपूर्वं रसरूपा च कथा तत्र भविष्यति॥ —श्रीमद्भाग० महात्म्य० ६-४७
एवमुक्त्वा कुमारास्ते नारदेव समं ततः।
गंगातटं समाजग्मुः कथायानाय सत्वराः॥
यदा यातास्ततं ते तु सदा कोलाहलोऽप्यभूत्।
भूर्लोके देवलोके च ब्रह्मलोके तथैव च॥
श्रीमद्भागवतपीयूषपानाय रसलम्पटाः।
धावन्तोऽप्याययुः सर्वे प्रथमं ये च वैष्णवाः॥
भृगुर्वशिष्ठश्च्यवनश्चगौतमो मेघातिथिर्देवलदेवरातौ।
रामस्तथा गाधिसुतश्च शाकलो मृकण्डुपुत्रात्रिजपिप्पलादाः॥
योगेश्वरौ व्यासपराशरौ च छायाशुको जाजलि जह्नुमुख्याः।
सर्वेऽप्यमी मुनिगणाः सहपुत्रशिष्याः स्वस्त्रीभिरराययुरति प्रणयेनयुक्ता
वेदान्तानि च वेदाश्च मंत्रास्तंत्राः समूर्तयः।
दशसप्तपुराणानि षट्शास्त्राणि तथा ययुः॥ —श्रीमद्भा० भा० ३-१०-१५
अलौकिकोऽयं महिमा मुनीश्वराः
सप्ताहजन्योऽद्य विलोकितो मया।
मूठाः शठा ये पशुपक्षिणोऽत्र
सर्वेऽपि निष्पापतमा भवन्ति॥ —श्रीमद्भा० माहा० ४-८

२. उग्राः कनखले प्रोक्ता शिवोऽग्रे शिववल्लभा॥ —कु० तं० पटल ७-६०
विशालायां विशालाक्षी मुण्डपृष्टे शिवालिका।
श्रद्धा कनखले तीर्थे शुद्धबुद्धिर्भुवीश्वरी॥ —कु० तं पटल ७-४८

पुरा खलु कनखलेऽस्मिन्तीर्थे दक्षमखे पत्युरपमानात् क्रोधाविष्टा सती दक्षादुत्पन्नं स्वशरीरमपवित्रं मत्वा तयक्तु काम्यया उग्ररूपं धृत्वा योगमार्गेण विशुद्धे शरीरे प्राणवायुं धारयती तत्रैव देहं तत्त्याज। यस्मिन् स्थले सती देहमत्यजन्तस्मिन्नेव स्थले उग्रानामकं सिद्धपीठं जगति प्रसिद्धं बभूव। कालान्तरेऽस्मिन् सिद्धपीठे शक्त्या उग्रया सह दक्षेश्वरशिवस्यापि स्थापना जाता। एतदुग्ररूपासतीसिद्धपीठं भक्तानामतीव श्रद्धा विश्वासयोर्केन्द्रमस्ति येनेदं श्रद्धा सिद्धपीठमप्युच्यते।

अस्मिन् पीठे शक्तिशंकरयोर्मन्दिरं बृहदाकारकं वर्तते। इदं शतफीटमितां-वर्गाकारतां पञ्चाशत्फीटमितां चोच्छ्रायतां दधाति। शिखरप्रान्तेऽस्य एकं कलशमेका ध्वजाचविराजते। न ज्ञायतेऽस्मिन् मन्दिरस्य रचना कदा संजाता। किन्तु मन्दिरस्य-स्थितिमवलोकनेन ज्ञायतेदं समये-समये अस्य नवनिर्माणमभवत्। जगद्गुरुणा शंकराचार्येण महता प्रयासेन मन्दिरस्येदं निर्माणमभवदित्यपि कथ्यते। मन्दिरं समीपैवात्र एकं सतीकुण्डं तस्या पदचिह्नं च विद्यते। हनुमतः शोभनं मन्दिरं लक्ष्मीगणेशयोर्मन्दिरं, कालिकामन्दिरं, सरस्वतीभवनंचापि स्थानस्यास्य पावनतां वर्धयति। अस्मिन् तीर्थे बहूनि सन्ति देवानां मन्दिराणि साधूनामाश्रमाणि च। इमानि भारतीय संस्कृतिं गौरवान्वितं कुर्वन्ति। श्रद्धापीठं निकषैव परमपावनी गंगाऽपि प्रवहति।

भक्ताः कनखले तीर्थे समागत्य सतीकुण्डे स्नात्वा तदीय पदचिह्नानां दर्शनं कृत्वा दक्षेश्वरमन्दिरे सतीशंकरयोर्दर्शनार्थं गच्छन्ति। दक्षेश्वरमन्दिरंद्वयोर्भागयोर्विभक्तिमस्ति। एकस्मिन् भागे प्राकृतिकं दक्षेश्वरनामकं शिवलिंगमस्ति। द्वितीयभागे दक्षयज्ञकाले निर्मित हवनकुण्डमलोक्यते, यस्मिन् सती स्वशरीरं तत्त्याज। यत्रैव एकं श्रद्धानामकं पाषाणमयं शक्तिपीठ विद्यते। यज्ञकुण्डमत्र सदैव वारिपूर्णो दृश्यते। मन्दिरेऽस्मिन् बहूनां देवीनां देवतानां शिवस्य भद्रगणानां च प्रतिमाः प्राचीनतमा सुशोभन्ते। भक्ताश्चात्र समागत्य मन्दिरस्य पूर्वद्वारेण प्रविश्य यज्ञकुण्डस्य-शक्तिस्वरूपात्मकस्य पीठस्य च दर्शनं कृत्वा सौभाग्यद्रव्येणात्र शक्तिमर्चयन्ति। तदनन्तरं तस्मादेवापरस्मिन् भवने गत्वा यात्रिणः विल्वपत्रैः पुष्पैः गंगाजलेन च शिवलिंगस्य पूजनं कुर्वन्ति ते सतीशंकरयोर्दर्शनेन पूजनेन च स्वात्मानं धन्यं मन्यन्ते। मन्दिरस्य पश्चिमद्वाराद्बहिरागत्य मन्दिरस्यैकां परिक्रमां कृत्वा भक्तारन्यान्यपि तीर्थान् प्रयान्ति।

शक्तिशिवयोरिदं पावनमन्दिरमैतिहासिकेन धार्मिकेन च वैशिष्ट्येन पुरातत्वविदां यात्रिणां च हृदयाह्लादकोऽस्ति। मन्दिरेऽस्मिन् प्रतिदिनं प्रातः सायञ्च सात्विकेन विधिना पूजा सम्पाद्यते। साधवः सन्त्यस्मिन् मंदिरे पूजकाः।

हरिद्वार क्षेत्रे स्थितं समस्त सिद्धपीठानां मन्दिराणां च संचालनार्थं साधूनामेका समिति निर्वाचिता अस्ति। या हरिद्वार क्षेत्र स्थितानां समस्तानां देवमन्दिराणां सिद्धपीठानां च प्रबन्ध संचालनादिकं करोति। अस्याः समितेः कार्यालयं कनखलाभिधाने स्थाने विद्यते। इयं समितिरेव श्रद्धा सिद्धपीठस्य व्यवस्थामपि कुर्वन्ति।

हरिद्वार तीर्थे प्रतिद्वादशाब्दानन्तरं कुम्भराशिगते जीवे कुम्भमेलापकस्यायोजनं। प्रति षडाब्दानन्तरं च सिंहराशिगते जीवे अर्द्धकुम्भमेलापकस्यायोजनं भवति। येष

मेलापकेषु सुदूरेभ्यः प्रदेशेभ्यो अन्यदेशेभ्यश्च बहवो यात्रिणोऽत्र समागच्छन्ति मासोपवासेन ते स्वकुलं स्वात्मानं च पवित्रं कुर्वन्ति। प्राणिनः महता पुण्ययोगेन मानुष्यं लभन्ते किन्तु अस्यां योनौ हरिद्वार तीर्थ सेवनात् ते देवदेहं प्राप्तुं शक्नुवन्ति।

यद्यपि हरिद्वार क्षेत्रे सन्ति बहूनि तीर्थस्थलानि मन्दिराणि सिद्धपीठानि च, किन्तु येषु सतीशिवयोर्स्वरूपं दक्षेश्वरं नामकं मन्दिरमति प्रसिद्धं पुण्यदं वर्तते। अस्य वैशिष्ट्यं सर्वे भारतीयाः सम्यग् जानन्ति। इदं मन्दिरं भारतीयानां श्रद्धाविश्वासयो-र्केन्द्रभूतमस्ति। प्रतिवर्षे एकवारंतु धार्मिकाः श्रद्धालु पुरुषाः वनिताश्चात्र समायान्ति। श्रद्धा शक्तेः दक्षेश्वर शंकरस्य च दर्शनेन पूजनेन चात्र बृहद् पुण्यमर्जयन्ति, मन्दिरस्य सुव्यवस्थार्थं बहूनि द्रव्योपहाराणि समर्पयन्ति।

असंख्यरोगशोकपापतापसमाकुलेऽस्मिन् संसारे नास्ति कोऽप्येयादृक् शेमुषीयान् यो दुःखार्णवमेत्ततितीर्षु न भवेत्। किन्त्वसय संतारणाय शक्ते भक्तिमन्तरा नास्ति कोऽप्यन्य शोभनः पन्थाः। कनखलाभिधाने पावनतीर्थेऽस्मिन् स्थिते शक्तिसिद्धपीठस्य दक्षेश्वरलिंगस्य च तुष्टिः पुष्टिश्च पुराणतंत्रशास्त्रयोर्श्रवणमननात्तदनुसाराचरणाच्च शक्यते। विविधैर्विघ्नसमूहैरभिभूतेऽप्यस्मिन्नेव मंसारे सिद्धपीठस्यास्य दर्शनेनसात्विक-पूजनेनो पासनया च निरस्ता भवत्यविद्यामयी तामसी पूजा परम्परा। तथा च बहुभिरशान्तमनष्कैरत्र शक्तिशंकरयोर्दर्शनेन पूजनेन च शाश्वती शान्तिः लभ्यते।[1]

---

१. गंगाद्वारे कुशावर्ते विल्वके नीलपर्वते।
स्नात्वा कनखले तीर्थे पुनर्जन्म न विद्यते॥
सर्वेदेवाः सगन्धर्वा यक्षकिन्नरतापसः।
तिष्ठन्ति यत्र तीर्थे हि सर्वे ते मुक्तिलालसाः॥
चण्डिकातीर्थराजे हि सकृत्स्नातो महामुने।
स धन्यः पुरुषोलोके सफलं तस्य जीवितम्॥
दक्षेश्वरं महादेवं दृष्ट्वा वै भक्तितत्परः।
कृतकृत्यो भवेन्मर्त्यो धन्यतां याति सत्वरम्॥ —कै० १०२-१५-१९

# उपसंहार:

विगते स्वध्यायेषु श्रीकेदारखण्डे समवस्थितानां सिद्धपीठानां विवेचनं सम्यक् सम्पादितमस्ति । यद्यपि केदारखण्डस्य भूमि भारतेऽस्मिन्वर्षे देवभूमिरिति व्यवह्रियते यत्र खलु विभिन्ना देव्यः देवाश्च तेषां धामानि मन्दिराणि च विविधानि सन्ति, किन्तु यानि पुण्यक्षेत्राणि सिद्धपीठानि इति वर्णितानि सन्ति तानि खलु शक्तेरेव निवास-स्थलानि सन्ति । इदं खलु प्रथमोऽध्याये सिद्धपीठोत्पत्ति प्रक्रिया प्रसंगेन निर्दिष्टैः प्रमाणैः प्रमाणितं बरीवर्ति ।

खलु भारतवर्षः अनादिकालादारम्य साधुजनानां महात्मनां च सागर एवासीत् किं पुन एषा भारतभूमि ज्ञानराभिरुद्गमा राजर्षिणां त्यागस्थली धर्मस्य जनयित्री आर्यपरम्पराणां रक्षयित्री तपस्विनां बसतिः विदुषां बुद्धिमतां गवेषणास्थली चास्ति । युगप्रवर्तकानां मन्वन्तराणां कालादारम्य पुराणकाल पर्यन्तं यावत् भारतीयैर्मनीषिभिः महापुरुषैरनेकेषां धार्मिकस्थलानां देवस्थलानां चान्वेषणं कृतमासीत् । अतएव भारतीयानां धार्मिकीसंस्कृतिरियं विश्ववन्द्य आसीत् । यद्यपि भारतीय संस्कृतौ विभिन्नानां देवतानां सत्तापरिवर्णितास्ति तथापि ऐतिहासिक-धार्मिक-सामाजिक दार्शनिक-वैज्ञानिक-राजनीतिक दृष्टिभिः शक्तेरेवैकाद्याभगवती सर्वदा सार्वभौम सत्ता-रूपेण सम्मानिता अस्ति । या खलु अस्यां संस्कृतौ अखण्डधारया अक्षुण्णांसती पुरतः समायाति । अस्या खलु शक्तिरूपायाः देव्याः कृपाकटाक्षा सिद्धपीठेषुप्राप्तव्यो भवति । इमानि सिद्धपीठानि भारतीयायाः पवित्रपरम्परायाः भारतीय मानवजीवन सफलतायाश्च द्योतकानि सन्ति । एषां पीठानां यात्रया दर्शनेन पूजनेन च मानवाः धर्मार्थकाममोक्षाख्य चतुर्वर्गफल प्राप्तये निसंदिग्धं समर्थाः भवन्ति केदारखण्ड वासिनां एषु सिद्धपीठेषु महती धार्मिकी भावना वरीवृत्यते । यद्यपि सिद्धपीठानां विस्तारः समस्तेऽपि भारते वर्तते एव तथापि केदारखण्डे एषां पीठानां संख्या सर्वतोऽधिकास्ति । केदारखण्ड निवासिनो जनाः स्वकीया सर्वविद्या आपदः दूरीकर्तुं मनोभिलषिता सम्पदः समवाप्तुं च सिद्धपीठ सेवायामेव प्रयतमाना समवलोक्यन्ते । एतावतां निःसन्दिग्धं वक्तुं शक्यते यत् सर्वसौभ्याग्य प्रदानां एषां सिद्धपीठानां सम्यक् सर्वेक्षणा-त्मकेन विवेचनेन भारतीयाया जनतायाः विशेषतः केदारखण्ड निवसतां जनानां च महती आवश्यकता परिपूर्येतेति । इदमेवाभिपेत्य पुराणानां तन्त्रग्रन्थानां च सम्यगा-लोचनं विधाय भारतवर्षीय सिद्धपीठानां सामान्यतया विशेषतः केदारखण्डस्य सिद्ध-पीठानां सर्वेक्षणात्मकं विवेचनं कृतमस्ति ।

इमानि सिद्धपीठानि पुरा खलु कनखलेतीर्थे दक्षक्रतौ प्राणांस्त्यक्तवती सती

शिरसि धृत्वा भ्रमति शिवे विष्णुना चक्रेण छिन्नास्तस्यावयवास्ते च यत्र पतितास्त एव देशा समजायन्तः। कालान्तरे लोकहितार्थाय भगवती आद्याशक्तिरनेकानवतारान् गृहीत्वा इमानि सिद्धपीठान्येव स्वकीया वासस्थानानि चकार। यन्नाम्नः सा शक्तिः यस्मिन् सिद्धपीठे निवासमकृत तत्रैव नाम्ना तद्सिद्धपीठं लोके प्रसिद्धिमगात्। सा शक्तिरपि स्व पराक्रममनुसृत्यैव स्वकीयन्नामापि जग्राह। यथा श्रीक्षेत्रं कंसासुर निहंत्री सा शक्तिर्योगमायाख्या कंसमर्द्दिनीति नाम्ना प्रसिद्धं गतवती तद् क्षेत्रमपि कंसमर्द्दिनी नामांकितं कंसमर्द्दिनीक्षेत्रमिति प्रसिद्धं बभूव।

अस्मिन् खलु विवेचनात्मिके निबन्धे पुराणान्युपपुराणानि तंत्रग्रंथाश्च सम्यगधीत्य भारतवर्षस्य सर्वाणि सिद्धपीठानि संकलय्य परिगणितानि सन्ति। तेषां सिद्धपीठानां सामान्य परिचय अनुक्रमणिकायां प्रदत्तैवास्ति। तेषां प्राचीनानां देव्याः सिद्धपीठानां विवेचनं परीक्षणं च तत्कालिक साहित्यमनुसृत्यैव कर्तुमावश्यकमित्यभि-प्रेत्य तेषां सिद्धपीठानां सम्बन्धीनि यानि वैदिकानि पौराणिकानि तांत्रिकाणि पुराणेतर काव्यानि च समुपलब्धानि तेषां सम्यगध्ययनेन विवेचनं प्रदर्शितं वर्तते। तत्र वर्णितानां शक्तीनां वैदिकानि पौराणिकानि-तांत्रिकाणि, यानि महत्वानि सन्ति तान्यपि प्रदर्शयितुं यथासम्भवं प्रयत्नं कृत एवास्ति। तत्र इदमप्यावश्यकं विवेचनं प्रतीयतेयत् तेषु सिद्धपीठेषु शक्तिपूजन परम्परया कस्मात्कालादारभ्यमिति। अतः तेषां सिद्धपीठानां यात्रावधि तत्रत्यायाः शक्तेः सात्विकी-राजसी तामसी च पूजा-पद्धति सिद्धपीठानां तत्रत्यानां शक्तीनां दर्शनफलं तथा तत्रत्यो नवरात्रव्रतोत्सवविधि शक्तियज्ञविधि तत्रत्य यन्त्रपूजन परम्परा चेत्यादि विषयाणां सविस्तृतं वर्णनं कृतमस्ति। यात्राकालस्य यज्ञादिमहोत्सवकालस्य व्रतकालादेश्च सविस्तार वर्णनेन सहैव दीक्षाविधेः पूजनपद्धतेः व्रतादि नियमानां चोल्लेखः सम्यग् कृतएवास्ति। व्रत-काले विहितानां भोजनशयनादि नियमानामपि सम्यग् वर्णनं विहितमस्ति।

अस्मिनध्ययनेन खल्वेतद् विवेचयितुं महान् प्रयासकृतोऽस्ति यत् सिद्धपीठानां समुत्पत्तिः केदारखण्डस्थितानां सिद्धपीठानां च संस्थापना केनप्रकारेणाभूदिति। भारतवर्षे विशेषतः केदारखण्डे (गढवाल मण्डले) एषां सिद्धपीठानां लोकजीवने कियन्महत्वमित्यपि विवेचयितुं प्रयत्नकृतोऽस्ति।

एषु सिद्धपीठेषु अत्रत्यानां जनानां धार्मिकी आस्था चिरकालतां दरीदृश्यते। पुरा खलु एषु सिद्धपीठेषु जनानां यतीदृढाश्रद्धासीत् यया खलु तत्रत्याजनाः देवी प्रसाधयितुमामपि बलिं कर्तुं किं बहुना स्वपुत्रमपि बलिं दातुं न भीता भवेयुरिति। छिन्नमस्तांकिते सिद्धपीठे एतादृशी परम्परा समलोक्यते स्म यत् तत्रत्या जनाः पर्यायेण स्वकीयान् पुत्रानपि देव्याः बलिंकृत्वा अहिंसन्। चन्द्रवदनी, सुरखण्डा, महिषमर्द्दिनी नामांकितेषु सिद्धपीठेस्वपि मानवबलयः प्रथा आसीदेव। पशुबलयः परम्परा तु सर्वेषु सिद्धपीठेषु प्रायोऽद्यापि दरीदृश्यते एव। साम्प्रत्यपि एषु सिद्धपीठेषु जनानां धार्मिकी-निष्ठा अक्षुण्णेव प्रतीयते। किन्तु साम्प्रतिके विकासंगतेसमाजे जनाः सिद्धपीठेषु बलि-परम्पराया अवरोधनाय प्रयत्नशीलाः संजाताः सन्ति। तथा च एष्वपि पीठेषु

यज्ञादीनां नामकीर्तनानां सात्विकपूजा परम्पराणां व्यवस्था सुदृढयितुमपि सप्रयत्नाः सन्तिः। जनाः प्रतिवर्षं चैत्रमासे आश्विनमासे च नवरात्रपर्वषु एषां सिद्धपीठानां यात्रा श्रध्दया दर्शनं कुर्वन्ति। विदेशेषु निवासं कृतवन्तोऽपि बहवो जनाः स्वकीयेन परिजनेन मित्रबर्गेण च सह एषां सिद्धपीठानां यात्रां कुर्वन्ति। अत्रागत्य बहुभिः प्रकारैः यज्ञादि महोत्सवैः तत्रत्यां शक्तिं यजन्ति। अनया यात्रया पूजया च स्वकीयानि मनोभिलषितानि सिध्दानि जातानीति मन्यन्ते च। न कश्चन सन्देह लेशोऽपि जायते यत् येषां सिद्धपीठानां यात्रा तत्रत्यायाः शक्तिः देव्याः दर्शनं पूजनं च जनानां धमार्थ-काममोक्षाख्य पुरुषार्थानां सिद्धिं करोतीति अतः धार्मिकदृष्ट्या एषां सिद्धपीठानां विपुलं महत्वं दृश्यते।

सिद्धपीठेषु निवर्तमानायाः शक्तेः महत्वं दार्शनिक दृष्ट्याऽप्यधिकमेवसंलक्ष्यते। सिद्धपीठेषु सा शक्तिः रूपद्वयमबलम्व्य विराजमाना तिष्ठति। पीठरूपेण तदधिष्टित लिंगरूपेण च। पीठरूपेण बिराजमाना सा शक्तिः निर्विशेषद्वेतब्रह्मरूपा निखिलगुणातीता चिन्मात्ररूपा अस्ति। इयमेव अव्याकृता परमाद्या निर्गुणा च व्यपदिश्यते। तथा एषा शक्ति अपरिणामिनी शक्ति अपि संकथ्यते। वस्तुत अस्यैव महाशक्तेः स्वरूपभूता निखिलोऽपि प्रपञ्चो प्रतीयते। इमामेव शक्तिं समबलम्व्य जगदुपादानभूता सृष्टि-जननानुकूलः व्यक्ताव्यक्त स्वरूपा अनिर्वचनीया बीजाख्या शक्ति व्यपतिष्ठते। अस्या एव शक्ते समारम्येण सा चिद्पा शक्तिः जगत्कारणमयी व्यक्ताव्यक्ता च भवति। तत्र सत्वरजस्तमास्त्रिगुणात्मिका या जगज्जननी शक्तिस्तया सह चिद्रूपायाः शिवाख्यायाः शक्ते नित्यसम्बन्धःसैव अन्योक्तस्वरूपया कालशक्त्या समुद्भूता व्यक्तरूपा संजायते। तेनैव रूपेण तत्तद्गुण प्रधान्यमाश्रित्य सा शक्तिः ब्रह्मविष्णु शिवास्य रूपत्रयेण परिगण्यते। तत्र रजोगुणः समाश्रित्य तत्प्राधान्यात्म्यैव सा शक्तिः ब्रह्मा भवति। सत्वगुणं समाश्रित्य च जगत्संरक्षणकाले विष्णुर्भवति। प्रलयकाले च तमोगुणं समाश्रित्य शेते जगदस्मिन्निति व्युत्पत्या शिवपदवाच्या भवति। एतत् रूपत्रयं अव्याकृतैव शक्त्यात्मके निहितमासीत्। सर्वेष्षु पुराणतंत्रादि साहित्येषु अस्निन्नेव मूर्तित्रये सर्वेषां देवतानां सत्ता समुपर्बणिताऽस्ति। इयमेव मूर्तित्रयोत्पत्तिका शक्तिः जगदुत्पादिका जगत्पालयित्री तत्संहर्त्री च भूत्वा तत्तत्कर्मसु ब्रह्म-विष्णु शिवरूपा सम्पद्यते। सा खलव्यक्ता शक्तिरेव ब्रह्म-विष्णु शिवाख्ये मूर्तित्रये स्वकीयां शक्ति-मादधाति। स्वयं च निर्गुणा चिन्मयी जगदाद्या महामाया शब्दैः रूपास्याः भवति। एवं च चिद्चिद् विशिष्टा सैब शक्तिः अव्यक्ता सृष्टौ व्यक्तरूपा भूत्वा लोकान् समुत्पादयति, पालयति, संहरति च। स्व शक्तेः सर्वाणिवस्तूनि मर्यादायां व्यवस्था-पयति च। अस्याएव महादेव्या नित्यार्चनेन नैमित्तिकेन विशेषार्चनेन च जनाः संसारे सर्वोत्तम फलानि समवाप्य अन्ते च दिव्यं सर्वदुःखातिगं अव्यक्तात्मकं शक्तिलोकं प्रविशन्ति। तत्र खलु या चिदाख्याशक्ति सैव सिद्धपीठेषु समुपास्यते तयाधिष्टिता या पीठात्मिका त्रिगुणात्मिका शक्तिः सैव लिंगरूपेण समुपास्यते। अनेनैव पीठलिंगयोः समयोगेन जगत्प्रक्रिया प्रवर्तमाना भवति।

प्रायेण इमानि सिद्धपीठानि एतादृशेषु पर्वतशिखरेषु स्थितानि सन्ति यानि खलु हिमखण्डमण्डितानि विविधौषधिवनस्पत्यादिभिः सम्पृक्तानि च सन्ति, तत्रत्या पर्वतीया प्राकृतिक सुषमा नितरां दर्शनीया भवति। हिमखण्ड मण्डितेषु पर्वतखण्डेषु विद्यमानानि उर्वशी सन्मार्गदायि, शाकम्भरी संज्ञकानि बहुविधानि स्वकीयाभिः प्राकृतिकसुषमाभि अद्वितीया स्थिति लभन्ते। यत्र खलु तत्रत्ये प्राकृतिकेऽपि वातावरणे प्रविश्य विपुलः स्वास्थ्यलाभः शान्तिलाभश्च जनैः कर्तु शक्यते। तत्रत्यायाः देवतायाः समर्चने कः कः लाभः संजायेत इति वक्तुमपि न कश्चित् पारयेत्। महत्कुमारिका-चामुण्डा-चण्डी-मनसा-चमराड़ा-सुरखण्डा इत्यादि देवीनामा प्रख्यातानि सिद्धपीठानि नानाबिध वनस्पत्यो लताभिः परिवेष्टितेषु पर्वतशिखरेषु विराजमानानि सन्ति एषां प्राकृतिक सौन्दर्य जनानां मनांसिनितरां समाह्लादयति, पुनः पुनः तत्रागमनाय आमंत्रणं करोति। कानिचिदिमानी सिद्धपीठानि गभीरायाः नद्यास्तटेषु उपत्यकासु स्थितानि सन्ति। यथा-गौरी, ज्वाल्पा, सुन्दरी, राजराजेश्वरी, काली इत्यादिनामा विख्यातानि बहूनि सिद्धपीठानि सन्ति। तत्रत्या वृक्षैःपर्वतखण्डैः नदीभिश्च सम्पादिता प्रकृतिच्छटा नितरांचित्ताल्हादिका, समवलोकनीया चास्ति। अतः प्राकृतिक दृष्टिभिः एषां सिद्धपीठानां महत्वं श्लाघ्यतमं बरीवर्तीति निश्चित प्रायमेव।

सिद्धपीठेषु यात्रां कुर्वतां भक्तजनानां श्रद्धालुनां साहाय्येन सिद्धपीठेषु आर्थिक लाभोऽपि भवत्येवेति आर्थिक दृष्ट्याऽपि सिद्धपीठानांमहत्वं वर्तत एव। भगवत्याः शक्तेः सकासाद्धर्मार्थकाममोक्षाख्ये पुरुषार्थ प्राप्तये प्रवर्तमाना भक्तजनाः नानाविधैः बहुमूल्यैरूपहारैः भगवत्याः समर्चनं कुर्वन्ति। प्रसादभूतैस्तै उपहारद्रव्यैस्तत्रत्या सिद्धपीठस्थिता बह्वो जनाः स्वकीयामाजीविकां सम्पादयन्ति। यत तत्र समीचीना व्यवस्था सम्पद्येत तदा खलु सिद्धपीठेषु विद्यमानानि आर्थिक स्रोतांसि ज्ञातुं शक्येत। अव्यवस्था वशादेव सिद्धपीठेषु जायमान नार्थिक स्रोतः सम्यग् ज्ञातुं न शक्येत। अतः तेन समाजस्य कश्चनोपकारः न प्रतीयते अतः आर्थिक दृष्ट्यापि सिद्धपीठानामध्ययनं महत्वपूर्ण स्थानं प्राप्नोति।

सिद्धपीठानां महत्वं राजनीतिक दृष्ट्याऽपि सर्वतोभाव व्यपतिष्ठत एव। इमानि खलु सिद्धपीठानि भारतीया संस्कृति समुपासिनानां कृते भारतवर्षस्य भौगोलिकी एकतामपि सम्पादयन्ति। यानि सिद्धपीठानि पर्वतखण्डेषु नदीतटेषु समुद्रकूलेषु च आहिमालय आबिन्दुसरोवरं च विप्रकीर्णानि सन्ति। भारतीय संस्कृतेः गौरवगाथां विस्तारयन्ति च एतावता च भारतीय जनानां हृदि सिद्धपीठाधिष्ठिता सर्वा एव भारतभूमि तादात्म्ये स्थानं गृह्णाति। सर्वस्या पीठाधिष्ठितायाः भूमेः संरक्षणायः भारतीयजनाः प्रयतमानाः भवन्ति। एवं च भौगोलिकं राष्ट्रसंरक्षणं एभिः सिद्धपीठैः सम्पन्नं भवतीति राजनीतिक दृष्टयाऽपि विपुलं महत्वं वर्तत एव। एतावताऽपि शक्तिपीठानां महत्वमस्ति यदा कश्चिद् राजा दौर्भाग्यवशाद् कयापि विपदा राज्यभ्रष्ट संजातो भवेत् तस्मिनेव काले सिद्धपीठे गत्वा भगवतीमाद्यांशक्तिं समर्चयन्तः स्वकीयां राजशक्तिमपि सुदृढां कर्तु प्रभवन्ति स्म। पुरा खलु यत् प्राचीन-

काले धनाधिपो यक्षराट् कुबेरः राजराजेश्वरकाममाप्तुं श्रीक्षेत्रे गत्वा राजराजेश्वरी-पीठे शक्तिं समुपास्य राजराजेश्वर पदमलभत। एवमेव बहवो राजानः पुराणेषु विश्रुता विभिन्नेषु सिद्धपीठेषु शक्तिं समुपास्य स्वकीयां प्रभुशक्तिमपि सम्पादयन् मनोभिलषितफलमपि प्राप्नुवन्। शत्रूणां संहरणाय शक्तेः समर्चनं नितरामावश्यकमिति। अर्वाचीनप्राचीन राजनीतिक दृष्ट्याऽपि सिद्धपीठानां महत्वं सर्वतोऽधिकं वर्तते एव।

सिद्धपीठानां महत्वं सामाजिक दृष्ट्याऽप्यमेवास्ति। भारते खलु विभिन्नानि देवमन्दिराणि पावनस्थलानि सिद्धपीठानि च सन्ति। अस्मिन् देशे विभिन्न धर्मा-बलम्बिनः विभिन्न देवोपासनारताश्च जनाः तिष्ठन्ति। विभिन्नेषु स्थानेषु विभिन्न-धर्मावलम्बिनां विभिन्न देवोपासकानां च स्वाधिकारानुसारेण पूजा स्थानानि तिष्ठन्ति, किन्तु सिद्धपीठेषु वर्तमानानां शक्तीनां समर्चनाषु सर्वेषां धर्मावलम्बिनामधिकारः दृश्यत एव। शक्ति समर्चनाषु न कोऽपि वर्णाश्रिर्माणामनादरमपि केनचित् क्रियते[1]। प्राचीनकालादारभ्य एषु पीठेषु बहबो देवाः दैत्या असुराश्च स्व-स्व भावनया भगवती-शक्तिं समर्च्य सर्वान् मनोमिलषितान् भावान् समलभन्तः। श्रूयते कालयवन खलु दैत्यराट् सुरखण्डापीठे भगवती शक्तिसमुपास्य अग्रधिष्ठयाणि वलपौरुषाणि अलभत। ज्वाल्पाख्ये सिद्धपीठे पुलोमजा दैत्यपुत्री दिव्यस्वरूपा शक्तेः समुपासनामकृत। एवमेव श्रीक्षेत्रे चपलानाम्नी काचन वैश्यपुत्री शक्तिं समुपास्य दिव्य स्वरूप सौन्दर्यं प्राप्त। अनयोपासनाया बहवो जनाः परमं दिव्यस्वरूपभलभन्तः। अत इमानि-सिद्धपीठानि समाजोपकाराय नितरामुपयोगितामाबदतीति। सामाजिके महत्वे न कश्चित संदेहावसरो वर्तते। अपरं च एषु सिद्धपीठेषु उत्सवावसरे बहवो जनाः शक्तिः श्रद्धया सन्धिभूता भवन्ति। वैदेशिकाश्च जनाः श्रद्धया एषुपीठेषु समुपस्थिताः एवं च सर्वेषां जनानां पारस्परिको व्यवहारः पारस्परिकाः सहानुभूतिश्च वर्धते। एवंच सर्वेषु जनेषु सामाजिकी भावनाऽपि वर्धते। एवं च सामाजिक भावना बर्धनाय च सिद्धपीठानां महत्वमस्त्थेव यथा चन्द्रबदनी नामके सिद्धपीठे हिन्दवः यवनाश्च सहैब स्थित्वा साम्प्रत्यपि शक्तिपूजां कुर्वन्ति। अस्मिन्यवसरे स्पष्टमिदं दृष्टुं शक्यते यत् खलु शाख्तोधर्म सर्वेषां साधारणधर्म वर्तते। एषु खलु धर्मः, सर्वान् भारतीयान् जनान् विभिन्नधर्मावलम्बिनोऽपि एकस्मिन् सूत्रे ग्रथितुं नितरां समर्थोऽस्ति। साधूनां परि-त्राणाय दुष्टानां विनाशाय समाजिक व्यवस्थां संरक्षणाय सामाजिकी भावना वर्धनाय च सिद्धपीठानां तत्र स्थितानां शक्तीनां च मुख्यमहत्वमस्ति। इमानि सिद्धपीठान्येव स्वच्छसमाज निर्माणाय मुख्यभौषधिकं अस्तीति निश्चितं वक्तुं शक्यत एव।

अनेनैव प्रकारेण केदारखण्डे स्थितानां सिद्धपीठानां सभ्यग् विवेचनं केदार खण्डस्य लोकजीवनस्य परमोपयोगी अंगं भविष्यतीति प्रत्यक्षतमम् निर्दिष्टमस्मिन् ग्रन्थे वर्तते। विश्वसीति चाहमनेन विवेचनेन अत्रत्या जनाः सभ्यग् लाभान्विता भवेदिति।

---

१. चतुर्णामपि वर्णानामाश्रमाणामपीश्वरी।
पुंसस्त्रीनपुसकानान्तु पूजितेसृफलप्रदा ॥ कु० तं० ५-८

परिशिष्ट—१

# शक्तिनामावलि

भगवत्याः शक्तेरसंख्यानि सन्ति नामानि[1]। अत्र तु केवला शक्ति सहस्र-नामावलि निर्दिश्यते।

(१) अचिन्त्यलक्षणा, (२) अव्यक्ता, (३) अपामातृमहेश्वरी, (४) अमृता' (५) अर्णवमध्यस्था, (६) अजिता, (७) अपराजिता, (८) अणिमादिगुणाधारा, (९) अर्कमण्डलःसंस्थिता, (१०) अजरा, (११) अत्रा, (१२) अपरा, (१३) अधर्मा, (१४) अक्षसूत्रधरा, (१५) अधरा, (१६) अकारादिक्षकारान्ता, (१७) अरिषड्वर्ग-भेदिनी, (१८) अंजनाद्रिप्रतीकाशा, (१९) अंजनाद्रिनिवासिनी, (२०) अदिती, (२१) अजया, (२२) अविधा, (२३) अरविन्दनिभेक्षणा, (२४) अन्तर्बहिस्थिता, (२५) अविद्याध्वंसिनी, (२६) अन्तरात्मिका, (२७) अजा, (२८) अजमुखवासा, (२९) अरविन्दनिभानना, (३०) अर्द्धमात्रा, (३१) अर्थदानज्ञा (३२) अरिमण्डलमर्द्दिनी, (३३) अन्त्यजार्चिता, (३४) अमावास्या, (३५) अन्त्यजार्पिता, (३६) आदिलक्ष्मी, (३७) आदिशक्ति, (३८) आमृतिः, (३९) आयतानना, (४०) आदित्यपदवीधारा, (४१) आदित्यपरिसेविता, (४२) आचार्या, (४३) आवर्तन्ता, (४४) आचारा, (४५) आदिमूर्तिनिवासिनी, (४६) आग्नेयी, (४७) आमरी, (४८) आद्या, (४९) आराध्या, (५०) आसनस्थिता, (५१) अनासनस्थिता, (५२) आधारा, (५३) आकाशान्तनिवासिनी, (५४) आद्याक्षरसमायुक्ता, (५५) आन्तराकाशरुपिणी, (५६) आदित्यमण्डलमता, (५७) आन्तरध्वान्तनाशिनी, (५८) इन्द्राणी, (५९) इष्टदा, (६०) इष्टा, (६१) इन्दीवरनिभेक्षणा, (६२) इरावती, (६३) इन्द्र-पदा, (६४) इन्द्राणी, (६५) इन्दुरूपिणी, (६६) इक्षुकोदण्डसंयुक्ता, (६७) इक्षुसंधान-कारिणी, (६८) इन्द्रनीलसमाकारा, (६९) इडापिंगलरूपिणी, (७०) इन्द्राक्षी, (शताक्षी) एतानीकारादीनी शक्तेस्त्रयोदशनामानि (७१) ईश्वरी, (७२) ईहात्रय-विवर्णिता, (७३) उमा, (७४) ऊषा, (७५) उडुनिभा, (७६) उर्वारुकफलानना,

---

१. असंख्येतानि नामानि तस्या ब्रह्मादिभिः किल।
गुणकर्मविधानैस्तु कल्पितानि च विब्रुवे॥
अकारादि क्षकारान्तैः स्वरैर्वर्णैस्तु योजितः।
असंख्येयानि नामानि भवन्ति रघुनन्दनः॥ देवी भा० ४३-३०-३६-३७

(७७) उडुप्रभा, (७८) उडुमती, (७९) उडुपा, (८०) उडुमध्यगा, (८१) उर्ध्वा, (८२) उर्ध्वकेश्यैतानि दशनामानि शक्तेरुकारादीनि, (८३) ऊर्ध्वाधोगतिभेदिनी, (८४) ऊर्ध्ववाहुप्रिया, (८५) ऊर्मिलात्मा, (८६) सत्ता, (८७) ऋषि, (८८) ऋतुमती, (८९) ऋषिदेवनमस्कृता, (९०) ऋग्वेदा, (९१) ऋणहर्त्री, (९२) ऋषिमण्डलचारिणी, (९३) ऋद्धिदा, (९४) ऋजुमार्गस्था, (९५) ऋजुधर्मा, (९६) ऋतुप्रदा, (९७) ऋग्वेदनिलया, (९८) ऋज्वी, (९९) लूतारिवरसम्भूता, (१००) लूतारिविषहारिणी, (१०१) एकाक्षरा, (१०२) एकमात्रा, (१०३) एका, (१०४) एकनिष्ठा इति चत्वारिनामान्येकारादीनि, (१०५) ऐन्द्री, (१०६) ऐरावतारुढा, (१०७) एहिकामुष्मिका, (१०८) ओंकारा, (१०९) ओषधी, (११०) ओता, (१११) ओतप्रोता इति चत्वारिनामानि ओकारादीनि, (११२) और्वा, (११३) औषधसम्पन्ना, (११४) औपासनफलप्रदा, (११५) अण्डमध्यस्थिता, (११६) ओंकारमनुरूपिणी।

(११७) कमला, (११८) करिकुम्भस्तना, (११९) करवीरसुवासिनी, (१२०) कल्याणी, (१२१) करालास्या, (१२२) कमनीयगुणा, (१२३) कमलाकारा, (१२४) करुणापांगी, (१२५) ककुबन्ता, (१२६) करिप्रिया, (१२७) कदम्बकुसुमप्रिया, (१२८) कमण्डलुधरा, (१२९) कर्मनिर्मूलकारिणी, (१३०) कलहंसगति, (१३१) कथा, (१३२) कस्तूरितिलका, (१३३) कम्रा, (१३४) करीन्द्रगमना, (१३५) कर्पूरलेपना, (१३६) कपिला, (१३७) कम्रा, (१३८) कलशोद्भवसंस्तुता, (१३९) ऋतुमती, (१४०) कलाधारा, (१४१) कात्यायनी, (१४२) कालरात्रि, (१४३) कामाक्षी, (१४४) कामसुन्दरी, (१४५) कामिनी, (१४६) कान्ता, (१४७) कामदा, (१४८) कालकंठिनी, (१४९) कालजिह्वा, (१५०) कालिका, (१५१) कालरूपिणी' (१५२) कान्ति, (१५३) कामचारप्रभञ्जिनी, (१५४) कालिन्दी, (१५५) काली, (१५६) कांची, (१५७) काममाता, (१५८) कामरूपा, (१५९) कालीरूपिणी, (१६०) कृपावती, (१६१) किराती, (१६२) कृतकौतुकमंगला, (१६३) कृष्णा, (१६४) कीरवाहना, (१६५) कुण्डलवती, (१६६) कुरुक्षेत्रनिवासिनी, (१६७) कुरुविन्ददलाकारा, (१६८) कुण्डली, (१६९) कुमुदालया, (१७०) कुमारी, (१७१) कुण्डनिलया, (१७२) कुसुमप्रिया, (१७३) कुहू, (१७४) कुहराश्रवा, (१७५) कुधरा, (१७६) कुक्षिस्थाखिलविष्टा, (१७७) कुमुद्वती, (१७८) कूरस्था, (१७९) केसरी, (१८०) केशवनुमा, (१८१) केतकी, (१८२) कैकयी, (१८३) कोकिलालापा, (१८४) कौशिकी, (१८५) कौमारी, (१८६) खड्गखेटकरा, (१८७) खर्वा, (१८८) खड्गवाहना, (१८९) खड्वांगधारिणी, (१९०) खञ्जराजोपरिस्थिता, (१९१) खलघ्नी, (१९२) खण्डितजरा, (१९३) खण्डाख्यानप्रदायिनी, (१९४) खण्डेन्दुतिलका, (१९५) ख्याता, (१९६) खेचरी, (१९७) गंगा, (१९८) गणेशगुहपूजिता, (१९९) गन्धर्वाप्सरसेविता, (२००) गन्धर्वी, (२०१) गह्वरी, (२०२) गहना, (२०३) गामी, (२०४) गरुड़ध्वजबल्लभा, (२०५) गर्वापहारिणी, (२०६) गदाधरा, (२०७) गायत्री, (२०८) गन्धारी, (२०९) गानलोलुपा, (२१०) गामिनी,

(२११) गाधा, (२१२) गिरीशा, (२१३) गिरिजा, (२१४) गीता, (२२५) गुणत्रय-विभाजिता, (२१६) गुहावासा, (२१७) गुणवती, (२१८) गुरूपापप्रणाशिनी, (२१९) गुर्वी, (२२०) गुणा, (२२१) गुह्या, (२२२) गुणदायिनी, (२२३) गुह्यमातंगी, (२२४) गुह्यमण्डलवर्तिनी, (२२५) गोमती, (२२६) गोविन्दचरणाक्रान्ता, (२२७) गोत्रा, (२२८) गोप्तका, (२२९) गोदा, (२३०) गोकुलस्या, (२३०) गो-कर्णनिलयासक्ता, (२३२) गौतमी, (२३३) घर्मदा, (२३४) घनका, (२३५) घण्टा, (२३६) घनसम्पातदायिनी, (२३७) घरुराखप्रिया, (२३८) घनारिमण्डला, (२३९) घनवेगिनी, (२४०) घ्राणा, (२४१) घातारि, (२४२) घृणिमंत्रमयी, (२४३) घृणिसन्तुष्टकारिणी, (२४४) घृताची, (२४५) घूर्णा, (२५६) घोरदानव-मर्द्दिनी, (२४७) घोषा ।

(२४८) चर्चा, (२४९) चर्चिता, (२५०) चटुता, (२५१) चण्डिका, (२५२) चतुर्भुजा, (२५३) चरितप्रदा, (२५४) चन्द्रमाकर्णकुण्डला, (२५५) चन्द्रहस्ता, (२५६) चकोरी, (२५७) चन्द्रहासिनी, (२५८) चन्द्रिका, (२५९) चन्द्रधात्री, (२६०) चण्डिका, (२६१) कंचनाम्बा, (२६२) चन्द्रचूड़ा, (२६३) चंचच्चामर-चर्चिता, (२६४) चन्दिला, (२६५) चन्द्ररूपिणी, (२६६) चक्रवाहुका, (२६७) चन्द्र-मण्डलमध्यस्या, (२६८) चन्द्रमण्डलदर्पणा, (२६९) चक्रवाकस्तनी, (२७०) चन्द्रवती, (२७१) चन्द्रमा, (२७२) चन्दनप्रिया, (२७३) चारुहासिनी, (२७४) चारुदन्ता, (२७५) चातुरी, (२७६) चारुदात्री, (२७७) चारुचन्दनलिप्तांगी, (२७८) चारु-मध्या, (२७९) चारुगति, (२८०) चारुहांगप्रिया, (२८१) चार्वाचरिता, (२८२) चारु-विलासिनी, (२८३) चातका, (२८४) चारुहेतुकी, (२८५) चित्रा, (२८६) चित्र-मालविभूषिता, (२८७) चित्रवस्त्रान्ता, (२८८) चित्रा, (२८९) चित्स्वरूपा, (२९०) चिरप्रज्ञा, (२९१) चूलिका, (२९२) चोला, (२९३) चोदयित्री, (२९४) चोर-विनाशिनी, (२९५) चोरी, (२९६) चौरा, (२९७) छत्रयात्रा, (२९८) छत्रघरा, (२९९) छन्दःपच्छिदा, (३००) छन्नेन्द्रियविसर्पिणी, (३०१) छन्देऽनुष्टप् प्रतिष्टान्ता, (३०२) छत्रेश्वरी, (३०३) छाया (३०४) छायादेवी, (३०५) छिद्रनखा, (३०६) छिद्रोपद्रवभेदिनी, (३०७) छिन्नमस्ता, (३०८) छुरिका, (३०९) छेदा, (३१०) छेदनप्रिया, (३११) जननी, (३१२) जन्मरहिता, (३१३) जगन्मयी, (३१४) जटिला, (३१५) जरामरणवर्जिता, (३१६) जम्बूद्वीपवती, (३१७) जयन्ती, (३१८) जलशालिनी, (३१९) जगत्प्रिया, (३२०) जगती, (३२१) जरा, (३२२) जनित्री, (३२३) जह्नुतनया, (३२४) जगत्त्रयहितैषिणी, (३२५) जपवती, (३२६) जातवेदाः, (३२७) जाह्नवी, (३२८) जामिनी, (३२९) ज्वाला, (३३०) जात-रूपमयी, (३३१) जानकी, (३३२) जाग्रती, (३३३) जितेन्द्रिया, (३३४) जितक्रोधा, (३३५) जित मित्रा, (३३६) जिह्वा, (३३७) जितविषया, (३३८) जिताक्रान्तमयी, (३३९) ज्याघोषस्फोर्टदिग्मुखी, (३४०) कुलेष्टा, (३४१) जम्भणा, (३४२) जृम्भा, (३४३) ज्वरम ही, (३४४) ज्वरदेवता, (३४५) ज्वलक्ती, (३४६) ज्वलन्माणिक्य-

कुण्डला, (३४७) ज्वाला, (३४८) ज्वाल्पा, (३४९) ज्वालामुखी, (३५०) जेत्री, (३५१) झणनिर्दोषा, (३५२) झंसमास्तवेगिनी, (३५३) झल्लरीवाधमुशया, (३५४) झिंझिका, (३५५) यंरूपा, (३५६) यंभुजा।

(३५७) टंकवाणसमायुक्ता, (३५८) टंकिनी, (३५९) टंकभेदिनी, (३६०) टंकीगणकृताघोषा, (३६१) टंकनीयमहोरता, (३६२) टंकारकारिणी, (३६३) शब्दनिनादिनी, (३६४) डमरूनादिनी, (३६५) डामरी, (३६६) डाकिनी, (३३७) डामरीतंत्रमार्गस्था, (३६८) डिम्भा, (३६९) डिण्डीरसवहा, (३७०) डिम्भलसत्क्रीडापरायणा, (३७१) हुण्डुमारैकनिर्जिता, (३७२) ढक्काहस्ता, (३७३) ढिल्लिव्रता, (३७४) ढुण्डि-विघ्नेशजननी।

(३७५) तंत्री, (३७६) तरुणातहः, (३७७) तरुणादित्यसंकाशा, (३७८) तंत्रमंत्र विशेषज्ञा, (३७९) तनुमध्या, (३८०) तन्तुजालसमायुक्ता, (३८१) तकालकुसुमाकृतिः, (३८२) तन्वी, (३८३) तरुणाकृति, (३८४) तप्तकांचनसंकाशा, (३८५) तप्तकांचनभूषणा, (३८६) तर्पणा, (३८७) तनुबल्लरी, (३८८) तामसी, (३८९) तारा, (३९०) तामसादिनी, (३९१) तालप्रतापिनी, (३९२) तारंगिकी, (३९३) तारहाबलिप्रिया, (३९४) तारका, (३९५) ताटंकप्रियवाहिनी, (३९३) मातोलिया, (३९७) तार्क्ष्यस्था, (३९८) त्रिगुणा, (३९९) त्रिपदा, (४००) त्रिविक्रमपदाक्रान्ता, (४०१) त्रिकालज्ञान-सम्पन्ना, (४०२) त्रिवेणी, (४०३) त्रिलोचना, (४०४) त्रिशक्तिः, (४०५) त्रिपुरा, (४०६) तिमिंगलगिला, (४०७) त्रिस्रोता, (४०८) त्रिविष्टपा, (४०९) त्रिसन्ध्या त्रिस्तनी, (४१०) त्रियुता, (४११) त्रिशंकुपरिवारिता, (४१२) विलोदरी, (४१३) तिलाभाषा, (४१४) त्रिजरा, (४१५) तित्तिरी, (४१६) तृष्णादेवी, (४१७) त्रिविधा, (४१८) त्रिवर्गा, (४१९) त्रिकाल ज्ञानदायिनी, (४२०) तृप्तिदा, (४२१) तृप्ता, (४२२) त्रिगुणाकारा, (४२३) त्रिभंगी, (४२४) तिलहोमप्रिया, (४२५) तीव्रा, (४२६) तीर्था, (४२७) तुलसी, (४२८) तुरीयपदगामिनी, (४२९) तुहिना, (४३०) तुरंगवदना, (४३१) तुषाराया, (४३२) तुहिनाचलवासिनी, (४३३) तुम्बुरुस्तुता, (४३४) तुंगणा, (४३५) तुरंगवदना, (४३६) त्रैयम्बका, (४३७) तोषासंस्था, (४३८) थात्कारी, (४३९) थाखा, (४४०) थान्ता, (४४१) दण्डकारण्यनिलया, (४४२) दण्डिनी, (४४३) दानवान्तकरी, (४४४) द्वारिहयोद्भेदिनी, (४४५) दामोदरप्रिया, (४४६) दानवाकृतिः, (४४७) दिवारात्रि, (४४७) दिवा, (४४९) दिग्वासा, (४५०) दिग्विमोहिनी, (४५१) दिविपदा, (४५२) दीनवत्सया, (४५३) दीप्ता, (४५४) दीनानाथस्तुता, (४५५) दीक्षा, (४५६) दुर्गा, (४५७) दुर्गासुरनिर्वाहिणी, (४५८) दुन्दुभिस्वना, (४५९) दुरावासा, (४६०) देवरीतिः, (४६१) देवयानी, (४६२) देवपूजिता, (४६३) देववन्ध्या, (४६४) द्वेषिणी, (४६५) देवतादिस्वरूपिणी, (४६६) दोहिनी, (४६७) द्रौपदी, (४६८) धनुर्धरा, (४६९) धर्मचारिणी, (४७०) धराधरा, (४७१) धनदा, (४७२) धर्मशीला, (४७३) धनाध्यक्षा, (४७४) धनुर्वेदविशारदा, (४७५) धर्मरात्रप्रिया, (४७६) धर्म-

शास्त्रप्रकाशिनी, (४७७) धन्या, (४७८) धात्री, (४७९) धारिणी, (४८०) धन्यदोहिनी, (४८१) धृतिः, (४८२) धृतपदा, (४८३) धुरन्धरा, (४८४) धृता, (४८५) धूमावती, (४८६) धूमरेशी, (४८७) धेनुः, (४८८) नन्दा. (४८९) नन्दप्रिया, (४९०) नन्दनात्यिका, (४९१) नर्मदा, (४९२) नलिनी, (४९३) नगधरा, (४९४) नखक्लेशशयनी, (४९५) नवसूत्रधरा, (४९६) नन्दना, (४९७) नवरत्नाढ्या, (४९८) नवनीतप्रिया, (४९९) नदीरूपा, (५००) नवजाम्बूनदप्रख्या, (५०१) नरचित्तप्रमोदिनी, (५०२) नन्दनोधाननिलया, (५०३) नर्मदा, (५०४, नारायणप्रिया, (५०५) नादबिन्दुकलातीता, (५०६) नादविन्दुकलात्मिका, (५०७) नारायणपदोद्भवा, (५०८) नारदाप्रियकारिणी, (५०९) नानाज्योतिसमाख्याता, (५१०) नारी, (५११) नामावली, (५१२) नागलोकनिवासिनी, (५१३) नागलोकासिदेवता, (५१४) नित्यज्ञाना, (५१५) निरूपमा, (५१६) निर्गुण, (५१७) निप्रा, (५१८) नूनुदा (५१९) नीलनित्या, (५२०) निर्मला, (५२१) निधिः, (५२२) निराधारा, (५२३) निरुपमा, (५२४) नित्यशुद्धा, (५२५) निरंजना, (५२६) नृसिंहिनी, (५२७) नृपनागविभूषिता, (५२८) निखद्या, (५२९) निराकारा, (५३०) निधिदा, (५३१) निर्मलात्मिका, (५३२) नीति, (५३३) निरुपद्रवकारिणी, (५३४) निर्मासक्षी, (५३५) निशीश्वरी, (४३६) निशुम्भहननी, (५३७) निमग्नारक्तनयना, (५३८) निर्घातसमिनिःस्वता, (५३९) निर्व्यूहोपचारिणी, (५४०) नीला, (५४१) नीलकण्ठसमाश्रया, (५४२) नीलजीमूतनिस्वना, (५४३) नीलग्रीवा, (५४४) नीला, (५४५) नूपुराक्रान्तचारणा, (५४६) नैमिषारण्यवासिनी, (५४७) परमोदारा, (५४८) परब्रह्मात्मिका, (५४९) परा, (५५०) पंचकोशविनिर्मुक्ता, (५५१) पंचपातकनाशिनी, (५५२) परचित्ता, (५५३) पंचिका, (५५४) पंचरूपिणी, (५५५) परमा, (५५६) परतेजा प्रकाशिनी, (५५७) पवनाशिनी, (५५८) प्रजापतिः, (५५९) परिश्रान्ता, (५६०) पर्वतस्तनमण्डला, (५६१) पद्मप्रिया, (५६२) पद्मसंस्था, (५६३) पद्माक्षी, (५६४) पद्मसम्भवा, (५६५) पद्मपत्रा, (२६६) पद्मपदा, (५६७) पद्मिनी, (५६८) पर्वा, (५६९) पतिव्रता, (५७०) पवित्रांगी, (५७१) प्रज्ञावतीसुता, (५७२) पर्यस्विनी, (५७३) पहियाशधरा, (५७४) पंकि, (५७५) प्रणतार्तिविनासिनी, (५७६) प्रद्युम्नजननी, (५७७) प्रवालशोभा, (५७८) प्रचापला, (५७९) प्रशवा, (५८०) प्रतिष्ठा, (५८१) प्रणवागतिः, (५८२) पंचवर्णा, (५८३) पंचवाणी, (५८४) पंक्तिका, (५८५) पंचरात्रस्थिता, (५८६) परमायाः, (५८७) परज्योतिः, (५८८) परःप्रीति, (५८९) परागतिः, (५९०) पराकाष्टा, (५९१) परेशानी, (५९२) परिच्छेदा, (५९३) पटुक्रिया, (५९४) पंचभक्ष-प्रियाचारा, (५९५) पंचांगी, (५९६) पराशक्तिः, (५९७) परमाह्लादकारिणी, (५९८) पंचशिखा, (५९९) पंचगोपरिशामिनी, (६००) पंचमात्रात्मिका, (६०१) पथिका, (६०२) परमार्गिकगोचरा, (६०३) प्रवालशोभा, (६०४) प्रणवा, (६०५) पल्लवोदरी, (६०६) पशुपाशविनिर्मुक्ता, (६०७) पार्वती, (६०८) पातालतलनिर्मग्ना,

(६०९) पावनी, (६१०) पादसंहिता, (६११) पारिजातकुसुमप्रिया, (६१२) पावनी, (६१३) पावकधुनि, (६१४) पारलाक्षी, (६१५) पानप्रिया, (६१६) पारली, (६१७) पारदात्री, (६१८) प्रियभक्षिणी, (६१९) पितृलोकप्रदायिनी, (६२०) पितामह-परिग्रहा, (६२१) पृथुतंत्रा, (६२२) पृथुभुजा (६२३) पृथुपादा, (६२४) पृथूदरी, (६२५) पिंगलाक्षी, (६२६) पिशाचिनी, (६२७) पिशाचहननी, (६२८) पृथ्वक्षिणी, (६२९) पृथ्वी, (६३०) पृथुदोहिनी, (६३१) प्रीतिः, (६३२) प्रीता, (६३३) प्रीति-विवर्धिनी, (६३४) पीतवासा [बगला], (६३५) पीतांगी, (६३६) पीतवसना, (६३७) पीतशयका, (६३८) पीतक्रिया, (६३९) पुराणी, (६४०) पुण्या, (६४१) पुण्डरीकतिभेक्षणा, (६४२) पुरन्ध्री, (६४३) पुरवासिनी, (६४४) पुष्कला, (६४५) पुरुषा, (६४६) पुष्पदासपरायणा, (६४७) पुत्री, (६४८) पुराणी, (६४९) पुण्यशीला, (६५०) पुष्टा, (६५१) पुण्डरीकपुरावासा, (६५२) पुण्डरीक-समानता, (६५३) पुष्टिदा, (६५४) पुण्या, (६५५) पुष्पभद्रा, (६५६) पुष्पहासा, (६५७) पुष्पागवनमध्यस्था, (६५८) पुण्यतीर्थनिषेविता, (६५९) पुष्पकाण्डस्थिता, (६६०) पुराणन्यायमीमांसा, (६६१) पुष्पगन्धिनी, (६६२) पुण्यप्रदा, (६६३) पूर्णिमा, (६६४) पूर्णा, (६६५) पूतनाप्राणघातिनी, (६६६) पूज्या, (६६७) पूषा, (६६८) पूर्णाशाः, (६६९) पेशवा, (६७०) परिषिता, (६७१) पौरषी, (६७२) पौत्री, (६७३) फलिनी, (६७४) फलोदरी, (६७५) फल्गुः, (६७६) फलकाकृतिः, (६७७) फकीन्द्रभोगशयना, (६७८) फनिमण्डलमण्डना, (६७९) फुल्कारी, (६८०) बहुमता, (६८१) बलभद्रप्रिया, (६८२) बन्ध्या, (६८३) बड़वा, (६८४) बन्दी-देवी, (६८५) वैंदिशहनी, (६८६) बलिप्रिया, (६८७) बन्धूककुसुमप्रिया, (६८८) बला-किनी, (६८९) बहूदका, (६९०) बहुनेत्रा, (६९१) बहुपदा, (६९२) बहुकर्णावतंसिका, (६९३) बहुवाहुयुता, (६९४) बहुरूपिणी, (६९५) बद्धगोधाङ्गुलित्राणा, (६९६) वदर्याश्रमवासिनी [उर्वशी], (६९७) बहुनुता, (६९८) वनिता, (६९९) बहुविक्रमा, (७००) बद्धपद्मासनासीना, (७०१) बदिस्था, (७०२) बडवानलवेदिनी, (७०३) ब्रह्माण्डवहिरन्तस्था, (७०४) ब्रह्मार्ककेणरूपिणी, (७०५) बालाबाला, (७०६) बालातपनिभांशुका, (७०७) बान्धवी, (७०८) बालभानु-प्रभाकरा, (७०९) ब्राह्मी, (७१०) ब्राह्मणदेवता, (७११) बाणपातिनी, (७१२) बाला, (७१३) बाणासनवती, (७१४) बिलवती, (७१५) बृहस्पतिस्तुता, (७१६) बना, (७१७) वृन्दावनविहारिणी, (७१८) बलाहारा, (७१९) बिलवासा, (७२०) बिन्दु-नादकलातीता, (७२१) बिन्दुपादस्वरूपिणी, (७२२) बृन्दारका, (७२३) बृहत्कन्धा, (७२४) बृहती, (७२५) वनाध्यक्षा, (७२६) बिल्वपत्रतलन्दिता, (७२७) बिन्दु-दर्पणा, (७२८) बीजरूपिणी, (७२९) बुद्धिसंस्तुता, (७३०) बुद्धिः, (७३१) बोधिता, (७३२) बोधिद्रुम-चित्रवासा, (७३३) भवानी, (७३४) भयहारिणी, (७३५) भद्र-काली, (७३६) भद्रदा, (७३७) भवानी, (७३८) भर्गात्मिका, (७३९) भवबन्धा, (७४०) भजातीता, (७४१) भाविनी, (७४२) भारती, (७४३) भारताशया,

(७४४) भामिनी, (७४५) भार्गवी, (७४६) भागीरथी, (७४७) भाविनी, (७४८) भाषा, (७५०) भृगुलता, (७५१) भिषग्वरा, (७५२) भीषणवती, (७५३) भीमवती, (७५४) भीमा, (७५५) भीषणाकारा, (७५६) भुजंगासी, (७५७) भुवनस्था, (७५८) भुवनेश्वरी, (७५९) भुजंगवलया, (७६०) भूतिदा, (७६१) भूतिमालिनी, (७६२) भूरिविक्रमा, (७६३) भूतवासा, (७६४) भूसुरार्चिता, (७६५) भूरिदक्षिणा, (७६६) भूधात्रीराजिता, (७६७) भेरुदण्डा, (७६८) भैरवी, (७६९) भोगनिरता, (७७०) भोगवती, (७७१) भोगिनी, (७७२) मधुमती, (७७३) मधुजिह्वा, (७७४) मधुप्रिया, (७७५) महादेवी, (७७६) महाभागा, (७७७) मधुमती, (७७८) मधुमांसा, (७७९) मधुद्रवा, (७८०) मधुसंभूता, (७८१) मधुकैटभसंहत्री, (७८२) मन्दोदरी, (७८३) महामाया, (७८४) मसृणप्रिया, (७८५) महालक्ष्मी, (७८६) महाकाली, (७८७) महाकन्या, (७८८) महेश्वरी, (७८९) मन्दारकुसुमार्चिता, (७९०) मंजुमंजीरचरणा, (७९१) मंजुघोषिणी, (७९२) मधुरद्राविणी, (७९३) मलया, (७९४) मलयान्विता, (७९५) मरकतश्यामा, (७९६) महामारी, (७९७) महावीरा, (७९८) महाश्यामा, (७९९) मनुस्तुता, (८००) मणिपूरकवासिनी, (८०१) महिषारूढ़ा, (८०२) माता, (८०३) महिषमर्द्दिनी, (८०४) माया, (८०५) मलिनी, (८०६) मायातीता, (८०७) मानवी, (ड़०८) माहेन्द्री, (८०९) मागधी, (८१०) मातंकी, (८११) मिथिलापुरवासिनी, (८१२) मिहिरामासा, (८१३) मृगाक्षी, (८१४) मीनलोचना, (८१५) मुद्रा, (८१६) मुकुन्दपदविक्रमा, (८१७) मुग्धा, (८१८) मूलाधारस्थिता, (८१९) मेदिनी, (८२०) मेघमालिनी, (८२१) मेरुतनया, (८२२) मेधा, (८२३) मेनकात्मजा, (८२४) मैथिली, (८२५) मोक्षदा।

(८२६) यमुना, (८२७) यक्षिणी, (८२८) यदुवेशसमुद्भवा, (८२९) यकारादि-हकारान्ता, (८३०) यज्ञरूपिणी, (८३१) यात्रा, (८३२) यक्षराजप्रसूतिनी, (८३३) यानाविधानज्ञा, (८३४) यामिनी, (८३५) यातुधानमयंकरी, (८३६) याजुसी, (८३७) युद्धमध्यस्था, (८३८) युगधारिणी, (८३९) योगासना, (८४०) योगगम्या. (८४१) योगा, (८४२) योगयुक्ता, (८४३) योगनिरता, (८४४) यौवनी, (८४५) यौवनकाश्रया, (८४६) रमणी, (८४७) रति, (८४८) रतिप्रिया, (८४९) रमा, (८५०) रत्नसिंहासनस्थिता, (८५१) रक्ताधरा, (८५२) रक्त-गन्धानुलेपना, (८५३) रम्भा, (८५४) रक्तबलिप्रिया, (८५५) रमजीवयुगाधारा, (८५६) रथिनी, (८५७) रत्नमल्लिका, (८५८) रत्नवस्त्रपरिछन्ना, (८५९) रथस्था, (८६०) रामा, (८६१) राममाता, (८६२) राज्यपदा, (८६३) राजीवलोचना, (८६४) राकेशी, (८६५) राजहंससमारूढ़ा, (८६६) राजिता रिक्तकुन्तला, (८६७) राकिणी, (८६८) रामचन्द्रपदाक्रान्ता, (८६९) रावणच्छेदकारिणी, (८७०) रुक्मिणी, (८७१) रुरुचर्मपरिधाना, (८७२) रूपसम्पन्ना, (८७३) रूपभूषणा, (८७४) रेवती, (८७५) रेणका, (८७६) रेवा, (८७७) रोगेशी, (८७८) रोगशमनी,

(८८०) रोमर्हर्षिणी, (८८१) रौद्री, (८८२) रौद्रदिवाकारा, (८८४) लज्जाधिदेवता, (८८४) ललिता, (८८५) लक्ष्मी, (८८६) लज्जा, (८८७) लम्बोदरी, (८८८) ललना, (८८९) लिंगधारिणी, (८९०) लीला, (८९१) लप्तलिषा, (८९२) लोला, (८९३) लोकिनी, (८९४) लोकविश्रुता, (८९५) लोकधारिणी, (८९६) वरदा, (८९७) वन्दिता, (८९८) वर्षा, (८९९) वरलक्ष्मीः, (९००) वसुन्धरा, (९०१) वज्रिणी, (९०२) वसुदोहिनी, (९०३) वर्मधरा, (९०४) वाराही, (९०५) वारिजासनसंस्थिता, ९०६) वारुणी, (९०७) वामदेवप्रिया, (९०८) वायु-मण्डलमध्यस्था, (९०९) वाजपेयफलप्रदा, (९१०) वासवी, (९११) वामजननी, (९१२) वाल्मीकिपरिसेविता, (९१३) विद्या, (९१४) विमलाकृति, (९१५) विरजा, (९१६) विलासिनी, (९१७) विनता, (९१८) कोणमध्यस्था, (९१९) विरूपिणी, (९२०) विष्णुरूपा, (९२१) विधिप्रिया, (९२२) विष्णुपत्नी, (९२३) विष्णुमती, (९२४) विशालाक्षी, (९२५) कोषप्रिया, (९२६) वीतिहोत्रा, (९२७) वेणुसम्भूता, (९२८) वेला, (९२९) वेदाक्षपरीतांगी, (९३०) वैष्णवी, (९३१) वैकुण्ठनिलयाम्वरा, (९३२) शरणागतिः, (९३३) शरावती, (९३४) शरामन्दा, (९३५) शरज्योत्स्ना, (९३६) शरभा, (९३७) शबरी, (९३८) श्रवणानन्ददायिनी, (९३९) शर्वाषी, (९४०) शर्वरीवन्द्या, (९४१) शाकम्भरी, (९४२) शंकरार्धशरीरिणी, (९४३) शान्ता, (९४४) शारदा, (९४५) शांतोदरी, (९४६) शिवाकारा, (९४७) शिवा, (९४७) शिरः सन्धानकारिणी, (९४९) श्रीमती, (९५०) श्रीधरा, (९५१) शुभाचरा, (९५२) शुभा-मुरविमर्दिनी, (९५३) शुभाशया, (९५४) शुभ्रा, (९५५) शुभानना, (९५६) शुक-वाहनी, (९५७) शुद्धा, (९५८) शूलिनी, (९५९) शोणा, (९६०) शोभावती, (९६१) षड्भाषा, (९६२) षड्ऋतुप्रिया, (९६३) षडाधरास्थिता, (९६४) षण्मुख-प्रियकारिणी, (९६५) षडंगसुमतिः, (९६६) सर्वाज्ञा, (९६७) सरस्वती, (९६८) सडा-धारा, (९६९) सर्वमंगलकारिणी, (९७०) सर्वावासा, (९७१) सदानन्दा, (९७२) सर्वे-श्वर्यप्रिया, (९७३) सप्तर्षिमण्डलगता. (९७४) समानाधिकवर्तिता, (९८५) सर्वोत्तुंगा, (९७६) संगहीना, (९७७) सद्गुणा, (९७८) सकलैश्वर्या, (९७९) सत्या, (९८०) सामगानप्रिया, (९८१) सावित्री, (९८२) सामसम्मला, (९८३) सागराम्बरा, (९८४) साधुबान्धवी पराक्रमा, (९८५) सान्द्रकरुणा, (९८६) सिद्धि, (९८७) सुरासुर-नमस्कृता, (९८८) सुस्तनी, (९८९) सुरेशी, (९९०) सूक्ष्मा, (९९१) सूर्यतनया, (९९२) सोममण्डलवासिनी, (९९३) सोमसंहति, (९९४) हरिणी, (९९५) हंसवाहिनी, (९९६) हिरण्यवर्णा, (९९७) ह्रींकारी, (९९८) क्षमा, (९९९) श्रीरब्धितनया, (१०००) क्षौमवस्त्रपरीतांगी ।

---

परिशिष्ट–२

# देवीमन्दिराणि

देवीमन्दिराणां[1] निर्माणेन देवीमन्दिरेषु प्रतिमानां[2] प्रतिष्ठापनेन यानि पुण्यानि भवन्ति तान्युपविश्य केदारखण्डे स्थित सिद्धपीठेषु मन्दिराणि सन्त्येव। ततोऽप्यतिरिक्तान्यन्यत्रापि पुण्यस्थलेषु साम्प्रत्यपि देवी मन्दिराणि निर्मितानि भवन्ति। केदारखण्डभूमौ स्थितानां कतिपयानां प्रसिद्धानां देवीमन्दिराणां सूची निम्नांकित प्रकारेण दीयते—

| मन्दिरनाम | स्थानसंकेत |
|---|---|
| **उर्वशीक्षेत्र** | |
| दुर्गादेवी मन्दिर | खुमेड़ा देवीधार, |
| महिषमर्द्दिनी | फाटा |

---

१. यस्तु देवालयं कूर्यात्पाषाणंवाथधातुकम्।
मृन्मयं वाथ कालेयं तस्य पुण्यफलं श्रृणु॥
अहन्यहनि योगेन जायतो यन्महाफलम्।
प्राप्नोति तत्फलं देव्या यः कारयति मन्दिरम्॥
सहस्रकुलमागामि अतीतं च सहस्रकम्।
त तारयति धर्मात्मा श्रीमातुर्धामकारयम्॥
कोटिजन्मकृतं पापं त्वल्पं वा यदि वा बहु।
श्री मातुर्मन्दिरारम्भ क्षणादेव प्रणश्यति॥ —शि० पु० ५-५०-१३-१६

२. प्रतिमाः कारयेद्यत्तु सर्वलक्षण लक्षिता।
त उमायाः परालोकं निर्भया व्रजति ध्रुवम्॥
देवीमूर्ति प्रतिष्ठाप्य शुभर्तुग्रहतारके।
कृतकृत्यो भवेन्मर्त्यो योगमाया प्रसादतः॥
ये भविष्यन्ति येऽतीता आकल्पापुरुषाः कृते।
तांत्तांस्तारयते देव्या मूर्ति संस्थाप्य शोभनाम्॥
त्रिलोकी स्थापनात्पुण्यं श्रीदेवी स्थापना भवेत्।
तत्कोटिगुणितं पुण्यं श्रीदेवी स्थापना भवेत्॥
मध्येदेवीं स्थापयित्वा पंचायतनदेवताः।
चतुर्दिक्षु स्थापयेद्यस्तस्यपुण्यं न गण्यते॥ —शि० पु० ५-५१-२३-२७

| मन्दिरनाम | स्थान संकेत |
|---|---|
| भवानी | चन्द्रपुरी (मन्दाकिनी दक्षिण तट पर) |
| अन्नपूर्णा | जोशीमठ |
| उमादेवी | कर्णप्रयाग |
| उषादेवी | उखीमठ |
| नन्दादेवी | नौटी |
| घाट की देवी (काली) | ऋषिप्रयाग |
| पार्वतीदेवी | तपोवन (धवलगंगा के वाम तट पर) |
| नन्दादेवी | वुत्कड़ू (नन्दप्रयाग के पास) |
| महालक्ष्मी | बदरीनाथधाम |
| दुर्गामन्दिर | कड़ौरपेड (कांचनगंगा के दक्षिण तट पर) |
| शक्ति मन्दिर | गोपेश्वर |
| मातामूर्ति | माणा (बदरीनाथ) |
| देवी | मसारी |
| महिषमर्द्दिनी | त्रियुगीनारायण |

**कमला क्षेत्र**

| | |
|---|---|
| शक्तिदुर्गा मन्दिर | दुगड्डा |
| नन्दा देवी | पमासूखाली कपोलस्यूं |
| विजयादेवी | लैनसीडौन |
| नवदुर्गा | पौड़ी |
| शक्ति | खाण्ड्योसैण |
| दुर्गा | आलीगाँव |
| मंगलादेवी | अमालागाँव पैडूलस्यूं |
| काली | कण्डारगाँव |
| जगदादेवी | मवालस्यूं जंणदा |
| कामदा | सतपुली |
| नन्दा देवी | कसोली |
| जशोलीदेवी | धनपुर |
| कालिकादेवी | किमोणधनपुर रुद्रप्रयाग |
| उमादेवी | टूना रुद्रप्रयाग |
| छायादेवी | रुद्रप्रयाग |
| शक्तिकाली | पाटीसैण चाँदकोट |
| देवी | देवीठौर चाँदकोट |
| धारी देवी | सतराखाल |

| मन्दिरनाम | स्थान संकेत |
|---|---|
| राजराजेश्वरी | देवलगढ़ |
| चन्द्रवदनी | बुघाणीधार |
| चामुण्डा | रुद्रप्रयाग |
| **बगलाक्षेत्र** | |
| कोटतीदेवी मन्दिर | वारागढ़ी |
| धर्मेश्वरी | हर्षिलगाँव |
| उजैलीदेवी | उत्तरकाशी |
| भवानी | गंगोत्तरी |
| पण्डिकादेवी | भटवाड़ी |
| शक्तिमन्दिर | अशुलीगाँव |
| दुर्गादेवी | खंरसाली यमुनोत्तरी |
| शीतलादेवी | शीतलादेवी पर्वत |
| कुट्टीदेवी | कुट्टी उत्तरकाशी |
| कालीदेवी | निर्गुड तपोवन |
| सहजादेवी | सिरवाड़ी वांगर |
| शक्ति | घूड़ी वासर |
| मैठाणादेवी | चौवटियाधारलस्या |
| कुमारीशानी | कुमड़ी |
| राजराजेश्वरी (अयोध्यादेवी) | लम्बगाँव रमोली |
| देवी | प्रतापनगर ऊण |
| सर्वेश्वरी | लम्वगाँव के पास भागीरथी तट पर |
| देवी | सेमा भरदार |
| नवदुर्गा | क्वीलाखाल |
| दुर्गा | घेंधड़ |
| काली | डंगवालगाँव बणमा |
| दक्षिणकाली | सेमा बणमा |
| लक्ष्मी | बणमा |
| चण्डीका | किराड़ा |
| चण्डीदेवी | सिल्ली सिलगढ़ |
| देवी नवदुर्गा | जाख चम्बा |
| महासरस्वती | पाली चम्बा |
| भैरवी | बगधार चम्बा |
| काली | गाजना चम्बा |
| कालेश्वरी | सुरखण्डापर्वत |

| मन्दिरनाम | स्थान संकेत |
|---|---|
| | **चन्द्रवदनीक्षेत्र** |
| त्रिगुणात्मिकादेवी मन्दिर | खरसाड़ा पालकोट |
| दुर्गामन्दिर | वच्छेलीखाल भरपूर |
| नवदुर्गा | तोली ,, |
| परादेवी | पन्तगाँव ,, |
| खट्वांगधरादेवी | खरसाड़ीगाँव ,, |
| त्रिपुरामन्दिर | बमाणा ,, |
| चामुण्डा मन्दिर | चौण्ड ग्राम ,, |
| भुवनेश्वरी मन्दिर | पुंडलग्राम देवप्रयाग |
| शताक्षी देवी | महड़ |
| महाकाली मन्दिर | टिहरी |
| वागीश्वरीदेवी | वागेश्वर |
| भद्रेश्वरी | कांडीखाल |
| दुर्गादेवी | कोटी |
| | **महत्कुमारिकाक्षेत्र** |
| दुर्गादेवीमन्दिर | उत्तरांचलभवन, एन्टीबायोटिक्स ऋषिकेश |
| माहेश्वरी | मसूरी |
| महाकाली | कालसी |
| मनसादेवी | गड़ीश्यामपुर |
| महालक्ष्मी | ऋषिकेश |
| शक्तिनवदुर्गा | अवधूतमंडल |
| भीमेश्वरी | भीमगोडा |
| महाकाली | कनखल |
| भद्रकाली | कनखल |
| नारायणी | हरिद्वार |

# देव्यपराधक्षमापनस्तोत्रम्

न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो
न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथाः ।
न जाने मुद्रास्ते तदपि च न जाने विलपनं
परं जाने मातस्त्वदनुसरणं क्लेशहरणम् ॥ १

विधेरज्ञानेन द्रविणविरहेणालसतया
विधेयाशक्यत्वात्तव चरणयोर्याऽच्युतिरभूत् ।
तदेतत् क्षन्तव्यं जननि सकलोद्धारिणि शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ २

पृथिव्यां पुत्रास्ते जननि बहवः सन्ति सरलाः
परं तेषां मध्ये विरलतरलोऽहं तव सुतः ।
मदीयोऽयं त्यागः समुचितमिदं नो तब शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ ३

जगन्मातर्मातस्तव चरणसेवा न रचिता
न वा दत्तं देवि द्रविणमपि भूयस्तव मया ।
तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ ४

परित्यक्तान् देवान् विविधविधसेवाकुलतया
मया पंचाशीतेरधिकमपनीते तु वयसि ।
इदानीं चेन्मातस्तव यदि कृपा नापि भविता
निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥ ५

श्वपाको जल्पाको भवति मधुपाकोपमगिरा
निरातंको रंको विहरति चिरं कोटिकनकैः ।
तवापर्णे कर्णे विशति मनुवर्णे फलमिदं
जनः को जानीते जननि जपनीयं जपविधौ ॥ ६

पिताभस्मालेपो गरलमशनं दिक्पटधरो
जटाधारी कण्ठे भुजगपतिहारी पशुपतिः ।
कपाली भूतेशो भजति जगदीशैकपदवीं
भवानि त्वत्पाणिग्रहणपरिपाटीफलमिदम् ॥ ७

न मोक्षस्याकांक्षा भवविभववांछापि च न मे
न विज्ञानापेक्षाशशिमुखि सुखेच्छापि न पुनः।
अतस्त्वां संयाचे जननि जननं यातु मम वै
मृडानी रुद्राणी शिव शिव भवानीति जपतः॥ ८

नाराधितासि विधिना विविधोपचारैः
किं रुक्षचिन्तनपरैर्न कृतं वचोभिः।
श्यामे त्वमेव यदि किंचन मय्यनाथे
धत्ते कृपामुचितमम्ब परं तवैव॥ ९

आपत्सु मग्नः स्मरणं त्वदीयं
करोमि दुर्गे करुणार्णवेशि।
नैतच्छठत्वं मम भावयेथाः
क्षुधातृषार्ता जननीं स्मरन्ति॥ १०

जगदम्ब विचित्रमत्र किं
परिपूर्णा करुणास्ति चेन्मयि।
अपराधपरम्परापरं
न हि माता समुपेक्षते सुतम्॥ ११

मत्समः पातकीनास्ति पापघ्नी त्वत्समा न हि।
एवं ज्ञात्वा महादेवि यथायोग्यं तथा कुरु॥ १२

परिशिष्ट—३

# सन्दर्भग्रन्था: सहायकग्रन्थाश्च

## प्राचीन मूलग्रन्था:

**वैदिक साहित्य—**

ऋग्वेद:, यजुर्वेद:, सामवेद:, अथर्ववेद:, श्वेताश्वरोपनिषद्, छान्दोग्योपनिषद्, केनोपनिषद्, तैत्तरीयोपनिषद्, ऐतरेयोपनिषद्, मुण्डकोपनिषद्, कठोपनिषद्, ईशोपनिषद्, गीतोपनिषद् ।

**दर्शनग्रन्थास्तंत्रग्रन्थाश्च—**

आद्यशक्तिमंत्रसाधनारहस्यदर्शनम्, सर्वदर्शनसंग्रह—श्रीमन्माधवाचार्य मुद्रण—विद्याविलास प्रेस वाराणसी (सं० २०२१), सांख्यदर्शनम्—ईश्वरकृष्ण, वाचस्पति मिश्र मुद्रण, काशी (१८८२ ई०), शैवदर्शनम्, वेदान्तदर्शन कालीतन्त्रम्, कुलार्णवतंत्रम्, गायत्रीतंत्रम्, शक्तिसंगमतंत्रम्, मातृकाभेदतंत्रम्, कुंजितातंत्रम्, चूडामणितंत्रम्, भुवनेश्वरीतंत्रम्, तोडलतंत्रम्, श्रीविद्यार्णवतंत्रम्—विद्यारण्य संकलितम्—मुद्रण—श्रीनगर कश्मीर (सं० १९३२), तंत्र प्रयोग—हस्तलिखित—नक्षत्रवेदशाला देवप्रयाग, तांत्रिक उपासना—हस्तलिखित—नक्षत्रवेधशाला देवप्रयाग, मांतृभैरव यंत्र चिन्तामणि—, यंत्र दीपिका—हस्तलिखित—प्राप्तिस्थानम्—नक्षत्रवेधशाला, तांत्रिक दुर्गा होम पद्धति—हस्तलिखित, तंत्र संग्रह एवं चक्रदिग्बन्धन पद्धति—हस्तलिखित प० जगन्नाथ प्रसाद पाण्डेय, चौण्ड भरपूर देवप्रयाग, सौन्दर्य लहरी देवीपंचस्तव—श्री शंकराचार्य विरचित, श्रीलक्ष्मीधर व्याख्या समूलवत् मुद्रण मसूर (१२-३-४५ ई०), तत्वोपदेश—भगवान शंकराचार्य मुद्रण कलकत्ता (१८८७ ई०), मंत्र महोदधि—श्री वेंकटेश्वर (स्टीम) प्रेस बम्बई (सं० १९५९) ।

**पुराण—**

श्रीमद्देवीभागवतम्, शिवपुराणम्, स्कन्धपुराणन्तर्गत—केदारखण्डम्, माहेश्वरखण्डम्, हेमाद्रिखण्डम्, मार्कण्डेमपुराणम्, कालिकोपपुराणम्, श्रीमद्भागवतम्, ब्रह्मपुराणम्, विष्णुपुराणम्, ब्रह्मवैवर्तपुराणम्, वायुपुराणम्, पद्मपुराणम्, लिंगपुराणम्, कूर्मपुराणम्, गरूड़पुराणम्, वराहपुराणम्, हरिवंशपुराणम्, वामनपुराणम्, कल्किपुराणम्, अग्निपुराणम् ।

**धर्मशास्त्र-सूत्र-कोष-साहित्य, संगीत ग्रन्था:**

मनुस्मृतिः, व्यासस्मृतिः, महाभारत, श्रीमद्भगवद्गीता, विष्णुधर्मोत्तर, रामायण (बाल्मीकि), आनन्द रामायण—बाल्मीकि, प्रकाशक—पण्डित पुस्तकालय, वाराणसी (सं० १९७७), वाचस्पत्यम्—तर्कवाचस्पति, श्री तारानाथ भट्टाचार्य विरचितम्, मुद्रण—चौखम्बा वाराणसी (१९५९ ई०), शांकरभाष्यसहितं ब्रह्मसूत्रम्—पं० ताराचन्द शर्मा मुद्रण—काशी (१८८२ ई०), कादम्बरी—वाणभट्ट, कुमारसम्भव महाकाव्यम्—कालीदास, मेघदूत काव्यम्—कालीदास, रघुवंश महाकाव्यम्—कालीदास, अभिज्ञानशाकुन्तलम्—कालीदास, प्रताप विजय नाटकं—उमाशंकर नर्मदा शंकर शुक्ल मुद्रण—कोलमास्ट्टीट, बम्बई, दुर्गासप्तशती—हनुमानपोद्दार, गीताप्रेस गोरखपुर (सं० २०१७)।

**आधुनिक समालोचनात्मक ग्रन्था:—**

आद्य शक्ति उपासना—उमाशंकर, नर्मदाशंकर शुक्ल मुद्रण—कोलमांटस्ट्रीट् मुद्रण बम्बई (सं० २०१२); उपासना अंक कल्याण—हनुमानपोद्दार, मुद्रण—गीता प्रेस गोरखपुर (२०२४ वि०); नारी अंक कल्याण—हनुमानपोद्दार, मुद्रण—गीता प्रेस गोरखपुर (२०२४ वि०); भक्तियोग कल्याण—हनुमानपोद्दार, मुद्रण—गीता प्रेस गोरखपुर (२०२४ वि०), शक्ति अंक कल्याण—हनुमानपोद्दार, मुद्रण—गीता प्रेस गोरखपुर (२०२४ वि०), ज्योतिश्शक्तिज्ञान—स्वामी शिवानन्द मुद्रण—शिवानन्द नगर (१९६० ई०)।

देवभूमि हिमालयः—वी० एन० दातार

गौरीन्यास पद्धति—ह० लि० आचार्य चक्रधर जोशी

तत्व सुधालहरी—हरिदत्त शर्मा त्रिवेदी

विश्व प्रपंच—रामचन्द्र शुक्ल

सत्यार्थ विवेक—दयानन्द सरस्वति-मुद्रण अजमेर

प्रतिमातत्व—ह० लि०

आदिगुरू शंकराचार्य—श्री व्यक्ति हृदय मुद्रक, करोलबाग दिल्ली (१९७१ ई०)

प्राचीनभारत का सांस्कृतिक इतिहास—शिव कुमार शर्मा मुद्रक मित्तल प्रिंटस्ट मेरठ (१९६८ ई०)

वेदांग संस्कृत रत्नाकर—श्री मधुसूदन शर्मा मैथिली

देवी महात्म्य साधनसमर—शिवनारायण शर्मा

धर्म और समाज—सुखलालसंधवी, सम्पादक—दलसुखमालवणिया (१९५१ ई०)

धर्म सिन्धु—काशीनाथ उपाध्याय, मुद्रण—बम्बई (१९८४ वि०)

नवदुर्गायंत्र पद्धति—ह० लि०

प्रयोग समूह—सुरेन्द्र गोस्वामी

परादेवी रहस्यम्—ह० लि०
पार्वति—नवजादिकलाप श्रीवास्तव
महिषमर्दिनि दुर्गासिद्धि—ह० लि०
मातृकाशक्ति अंक भारती—योगीराज उमेशचन्द्र
मोक्षधर्म—अनिरुद्धाचार्य
दक्षेश्वर का संक्षिप्त इतिहास—श्री महान्त गिरीधर नारायणपुरी, मुद्रण २०२३ वि०, कनखल हरिद्वार।
भारत में शक्ति पूजा—स्वामी शारदानन्दप्रकाशक मुद्रक—श्रीदि० भि० धाक्रास नागपुर २
राजराजेश्वरी—ह० लि०
शक्तिभक्तिसुधावधि—तेजभानु सिंह
सप्तशति सर्वस्वम्—सरयू प्रसाद पाण्डे
शतचण्डी यज्ञ पद्धति—श्री देवी प्रसाद शास्त्री
भुवनेश्वरी संहिता—त्री० का० शास्त्री
भैरवाष्टक सहित दुर्गामंत्रजप विधि—ह० लि० प० जगन्नाथ प्रसाद पाण्डे चौण्ड भरपूर
संस्कृत साहित्य की रूपरेखा—पाण्डे तथा व्यास
भारतीय संस्कृति—गोपाल लल्लनजी
संस्कृत साहित्य का इतिहास—वाचस्पति गैरोला
संस्कृत साहित्य का इतिहास—बलदेव उपाध्याय
संस्कृत साहित्य का इतिहास—बाबूराम त्रिपाठी
संस्कृत साहित्य का इतिहास—कपिलदेव द्विवेदी
उत्तराखण्ड यात्रा दर्शन—शिवप्रसाद डवराल मुद्रण—श्याम काशी प्रेस मथुरा
वेदों में भारतीय संस्कृति—आद्यादत्त
ज्योतिषतत्वम् हिन्दी भाष्य सहितम्—मुकुन्द दैवज्ञ वडथवाल
गदावलि—आचार्य चक्रधर जोशी
देवयात्रानुष्ठान पद्धति—आचार्य चक्रधर जोशी
षोडशयोगावलि—आचार्य चक्रधर जोशी
बृहज्ज्योतिशास्त्र प्रवेशिका भाष्य—आचार्य चक्रधर जोशी
त्रिकाल संख्या—आचार्य चक्रधर जोशी
श्रीबदरीशयात्रा पथ-प्रदर्शिका—आचार्य चक्रधर जोशी
समस्त भारतीय तीर्थयात्रा—आचार्य चक्रधर जोशी
विधानपद्धति—आचार्य चक्रधर जोशी
भारतीय संस्कृति एवं सभ्यता—प० प्रसन्न कुमार मुद्रण प्रयाग (२०१४ वी०)
दुर्गा पूजा पद्धति—विशालमणि शर्मा उपाध्याय

दुर्गा प्राण प्रतिष्ठा विधानम्—ह० लि० प० लक्ष्मीधर जोशी
भारतीय परम्परा—हुमायुन कबीर
मन्दिर प्रवेश—वियोगी हरि
गीताञ्जली—श्री रविन्द्रनाथ—मुद्रण (१९५१ ई०)
शक्तिवाद—गदाधर भट्टाचार्य मुद्रण काशी (१९३० वि०)
तीर्थयात्रा पद्धति—आचार्य चक्रधर जोशी, मुद्रण पुणे (१९७५ ई०)
उत्तराखण्ड का इतिहास—डवराल (मुद्रण—दोगड्डा गढ़वाल सं० २०२२–२०२८)
पुराण विमर्श—बलदेव उपाध्याय—वाराणसी (१९६५)
प्राचीन भारत का भौगोलिक रूप—अवधबिहारीलाल अवस्थी (१९६४)
प्राचीन भारतीय साहित्य की सांस्कृतिक भूमिका—डा० रामजी उपाध्याय
विष्णुपुराण का भारत—सर्वानन्द पाठक, चौखम्भा (१९६७)
भारतीय संस्कृति के आधार तत्व—कृष्ण कुमार (१९६९ ई०)

# केदारखण्ड का मानचित्र

| क्र. | संकेत तालिका | चिन्ह |
|---|---|---|
| 1 | गढ़वाल कमिश्नरी की सीमा | |
| 2 | जिलों की सीमा | |
| 3 | नदियाँ | |
| 4 | मोटर मार्ग | |
| 5 | पैदल मार्ग | |
| 6 | रेल मार्ग | |

**सिद्धपीठों की संकेत सूची**

१. उर्वशी, २. नन्दादेवी, ३. पर्णखण्डासना, ४. ललितादेवी ५. काली, ६. शाकम्भरी, ७. गौरी, ८. सन्मार्गदायि, ६. बंगलामुखी, १०. कामेश्वरी, ११. कूर्मासना, १२. इन्द्रासना, १३. छिन्नमस्ता, १४. यवनेश्वरी, १५. अन्नपूर्णा, १६. भुवनेश्वरी, १७. रमणा, १८. विकृताख्या, १६. रणमण्डना, २०. सुन्दरी, २१. कंशमर्दिनी, २२. चामुण्डा, २३. राजराजेश्वरी, २४. महिषमर्दिनी, २५. गुह्येश्वरी, २६. नन्दभद्रे0 २७. दीप्तज्वालेश्वरी, २८. सुरेश्वरी, २६. महत्कुमारी, ३०. अनंगा, ३१. मुण्ड मा०, ३२. मनसा, ३३. माया, ३४. रतिप्रिया, ३५, चण्डी, ३६. श्रद्धा ।

